# प्रबन्धकल्पलतिका

प्रथमस्तवक-

# रचनाशिक्षा




अध्यापकवरेण

श्रीमता रेवतीकान्तभट्टाचार्य्येण

सम्पादिता






कलिकाता—५८ कर्णओयालिस ष्ट्रीटस्थ-

संस्कृतपुस्तकालयात्

श्रीअखिलबन्धुभट्टाचार्य्येण प्रकाशिता।





१९२८

[मूल्यं रौप्यकद्वयम्

विक्रेता—
श्रीअखिलबन्धु भट्टाचार्य्य
संस्कृत पुस्तकालय
५८ नं कर्णवोयालिस् ष्ट्रीट, कलिकाता।

# कविजीवनी

( प्रबन्धकल्पलतिकातृतीयभागः )

अज्ञातकवीनामनतिविस्तृतजीवनी संग्रहः, तत्कवीनां सुभाषितान्यपि च क्षिप्रं लोकलोचनसमक्षमेष्यन्ति। तद्दर्शनभृतिः सार्द्धराजती मुद्रा सुनिर्द्दिष्टा।

PRINTED BY A. C. MANDAL AT THE
SIDDHESWAR PRESS
*29, Sukea Street, Calcutta.*

# निवेद्यम्—

हन्त ! इयन्तं यावदागृहीतसंस्कृतपरीक्षासु रचनाविषयक-प्रश्नस्य व्यवस्थासद्भावतया परं मठकादिषु तद्विषये शिक्षणीय-पुस्तकाभावनिबन्धनपरत्वादेव प्रायशो विद्यार्थिनां पक्षे रचना-विरचनं नाम सातिशयदुर्ललितकरमिति वितर्क्य तदर्थं छात्र-संसदि कतिदिनादूर्ध्वमस्माभिः काव्यनाटकादीनां समालोचना-त्मिका तथा प्रबन्धादिबहुतरविषयान्विता प्रबन्धकल्पलतिका नाम, काचित् पुस्तिका प्रचारिता। सैव हि प्रबन्धकल्पलतिका विद्यार्थिभिर्विशेषाग्रहेण गृहीततया स्वल्पेनैव दिनेन किञ्चिदून-वत्सरं यावत् निःशेषितसंस्करणा जाता। तदारभ्य नून-मेतावन्तमध्यान्तरोत्पन्नविघ्नगत्या अन्योन्येनाप्यपर्याप्तकारण-सङ्गेन प्रधानतो वसोरभावतया च तस्यैव लोकलोचनसमक्षं कर्तुं न शक्यते।

दिष्ट्या ! संप्रति महामहिमवतो भगवतोऽनुकम्पया निर्विघ्नितैरप्यस्माभिर्नानाविषयं विभाव्य बन्धुजनानामुपदेशेन सामाजिकानां लेख्यानुलेख्येन छात्राणामाग्रहेण च केवलं रचना-नामेव बहुनियमपद्धतियुता प्रचुरतरादर्शपूर्वा पूर्वपुस्तकसंरचित-प्रबन्धचयचर्चितविग्रहा, परमपि तदन्यदीर्घदिनादारभ्य गृहीत-संस्कृतपरीक्षासु प्रत्यर्पितप्रबन्धविषयमवलम्ब्य संरचित-प्रभूतनिबन्धनेयं प्रथमांशाभिधेया प्रबन्धकल्पतिका शिक्षार्थिनां

मानवकानां केवलं रचनाशिक्षार्थमेव स्वातन्त्र्येण प्रकाशोऽनायि। एतद्द्वितीयांशे प्रचलितसकलकाव्यनाटकादीनां समालोचना सुविन्यस्ता। तृतीये च निखिलाज्ञातकवीनां जीवनीं तेषां कवीनां सुभाषितावलीञ्च प्रत्यर्प्य प्रकाशमानेतुमुपक्रम्यते।

आशास्महे—सुरभाषासु नूनमियमभिनवा विभागात्मिका प्रबन्धकल्पलतिका कल्पलतिकेव रचनाविषये सुरम्यास्वाद-मधुरिमं फलमर्थिभ्यः शश्वत् प्रत्यर्पयिष्यति; प्रत्यर्पयिष्यति च भृशं यथोचितनिषेवनेन सम्यक् तेभ्यो भाषानैपुण्यं ज्ञानोन्मेषणञ्च प्रायशः शास्त्रविषये। अतःपरं निकषायमाना निर्णयकाः सामाजिकाः प्रमाणम्।

अपि नामास्या मुद्रणविधौ वलवता कारणकूटेन परमित-रया शरीरास्वाच्छन्द्यतया च कामनानुरूपं सौन्दर्य्यं संविधातुं न प्रभवामहे। अतएव यत्र कुत्रचिदविस्तरः समुपरतः प्रमादः किमु अन्यान्या च या कापि त्रुटिरापतिता, सैव तु स्वौदार्य्येण क्षन्तव्या महान्तः सहृदया इति मामकानां सकृताञ्जलि-विनयान्विताऽभ्यर्थना।

कलिकातानगर्य्याम्
१३३५, गौड़ीयमिते,
जन्माष्टमी।

विधेय—
श्रीरेवतीकान्तस्य

## ग्रन्थार्पणम्

1567

ॐ पितृभ्यः स्वधा



आसीदाशशिसूर्य्यमूर्ज्जितयशा विद्योतितस्तेजसा
विद्यासिन्धुविवारिधिर्निरवधिः श्रीचन्द्रनारायणः ।
काश्यां धीरधुरन्धरेषु महतीं भीतिं समुत्पादयन्
लीलाभिर्विचचार चारुचरितो यो न्यायपञ्चाननः ॥

दीप्तः कीर्त्तिविभाभिराविरभवत् तस्माच्च रत्नाकरात्
राधाकान्तशिरोमणिर्मलिनतासम्पर्कशून्यश्चिरम् ।
येनादर्शि गभीरशास्त्रगहनेष्वर्थो निगूढः स्फुटम्
पूतं नाम पितुः समुज्ज्वलयता क्षौणीमलंकुर्वता ॥

सूनुस्तस्य महोदयस्य रजनीकान्तेतिनामाभवत्
लोकातीतमनीषयातिनिपुणस्तर्कादिविद्यानुगः ।
तेभ्यो ग्रन्थमिमं तदन्वयभवः श्रीरेवतीकान्तकः
भक्त्याद्यार्पयते प्रबन्धलतिकासंज्ञं निवापोपमम् ॥

# पुस्तकस्थविषयाणामनुक्रमणिका

## वृत्तान्तात्मकप्रबन्धाः



## चित्राघटितरचना १३७

# अस्मदीयप्रकाशितानां पुस्तकावली

## বঙ্গাক্ষরে মুদ্রিত

| | | |
|---|---|---|
| ২৭। কলাপসূত্রম্ | | ।৵০ |
| ২৮। সন্ধিবৃত্তিঃ | | ॥০ |
| ২৯। কলাপব্যাকরণম্ [পূর্ব্বাক্রম্ সন্ধি-চতুষ্টয়সম্বলিতম্] | | ৫৲ |
| ৩০। হিতোপদেশীয়মিত্রলাভঃ | | ১।০ |
| ৩১। পঞ্চগীতা | | ॥০ |
| ৩২। শ্রীমদ্ভগবদ্গীতা | | ১।০ |
| ৩৩। উপনিষদাবলী | | ১॥০ |
| ৩৪। শ্রীশ্রীচণ্ডী [তালপত্রে] | | ১।০ |
| ৩৫। কালীপূজাপদ্ধতিঃ | | ॥০ |
| ৩৬। ভাষাপরিচ্ছেদঃ | | ১৷০ |
| ৩৭। কৌলকল্পলতা | (যন্ত্রস্থঃ) | ২॥০ |
| ৩৮। স্তবকবচমালা | (যন্ত্রস্থঃ) | ॥৵০ |
| ৩৯। ভারতীপাঠ | | ৵০ |
| 40. The First Book of Translation & Conversation in Hindi. | | —6— |

**বিশেষ দ্রষ্টব্য** :—উপরোক্ত পুস্তক ভিন্ন আমাদের নিকট কাব্য, ব্যাকরণ, সাংখ্য, বেদান্ত, স্মৃতি, মীমাংসা, বেদ, উপনিষৎ, ন্যায়, বৈশেষিক, জ্যোতিষ, পুরাণ, পৌরহিত্য প্রভৃতি পরীক্ষায় পাঠ্য সকল রকম পুস্তকই পাইতে পারিবেন। যে সকল পুস্তক কলিকাতায় পাওয়া যায় না তাহা আমরা কাশী, বোম্বে, পুণা, পাঞ্জাব প্রভৃতি স্থান হইতে আনাইয়া রাখিয়াছি। আপনার আবশ্যকীয় সকল রকম পুস্তকই অর্ডার দিলে পাইতে পারিবেন। স্থানাভাব বশতঃ পুস্তকের বিস্তৃত বিজ্ঞাপন দেওয়া গেল না। বিস্তারিত বিবরণ আমাদের বড় ক্যাটালগে দেখিতে পাইবেন, পত্র লিখিলে উহা বিনামূল্যে পাঠান হয়।

# प्रबन्ध-कल्पलतिका

## प्रथमस्तवके

## रचनाशिक्षा

——:०:——

### मङ्गलाचरणम्

ध्वान्तप्रशान्तको नित्यो यः स्थितः सर्व्वमूर्द्धनि ।
तं नौमि रजनीकान्तं विघ्नध्वान्तप्रशान्तये ॥

### प्रबन्धस्वरूपम्

परस्परसम्बन्धविशिष्टवाक्यचयेन कस्यचिद्विषयस्यावतरणम् प्रबन्धो नाम ।

### प्रबन्धप्रकारः

स हि किल प्रबन्धो गद्यपद्यभेदेन द्विविधो रचनीयः ।

१ । यतिमात्रादिच्छन्दःशास्त्राणामुपदेशमन्तरेण परस्पर-सम्बन्धविशिष्टवाक्यसमूहानां विन्यासो गद्यम् । यथा—यस्य

भूतेशस्य भाले भागीरथीफेनलेखया इव चन्द्रस्य कला विराजते तस्य प्रभोरनुग्रहात् सज्जनानां कर्म्म सफलमस्तु ।

२। अक्षरमात्रादिना छन्दःशास्त्रानुमोदितः सन्दर्भः पद्यम् । यथा—

"सिद्धिः साध्ये सतामस्तु प्रसादात्तस्य धूर्ज्जटेः ।
जाह्नवीफेनलेखेव यन्मूर्ध्नि शशिनः कला ॥" इति

एवमपि हि गद्यपद्योभयमयी वा रचना पुनर्निरलङ्कारा सालङ्कारा चेति द्विविधा । साधारणभाषानिबद्धा निरलङ्कारा । अनुप्रासोपमाद्यनुबद्धा सालङ्कारा । यथा :—

पद्यमयी निरलङ्कारा—

नयति लोहितस्निग्धं प्रतीचीमुखमण्डलम् ।
द्युमणिरचिरेणैव शेषाचलमुपेष्यति ॥

पद्यमयी सालङ्कारा यथा मदीयसंयुक्तास्वयम्बरनाटके—

सन्ध्यासितायितरुचिं नलिनीं प्रबोध्य
यातोऽधुनाम्बरमणिर्गिरिकूटशेषम् ।
एषोऽस्ति मे विधिकृतः समयो हि बाले
ब्रह्मैव संहृतकरो न पुनर्व्विभर्त्ति ॥" इति

गद्यमयी निरलङ्कारा यथा—

सूर्य्यः पश्चिमां दिशं लोहितरागेण रञ्जयित्वाशेषेण तिरोभविष्यति । कूजिष्यन्ति विहगा दिनान्तरवमुत्तमम् । तेनेदानीं मन्दं मन्दं प्रवहति समीरणः । नक्षत्राण्योषधि-पतिश्च इतःपरं मण्डयिष्यन्ति सुनीलं नभोमण्डलम् ।

## गद्यमयी सालङ्कारा यथा—

नियतिनियमेन सम्प्रति प्रतीचीसामुमति अस्तं गतवति द्युतिनाथे तद्विरहविधुराः चीणद्युतिकराः पातिव्रत्यधर्म्ममनुसवन्त्य इवात्मानं पातयन्ति शेषाद्रौ पितृवने। अप्येतत् समीच्य स्वभावश्यामा विकिरनिकररुतमिषेण काष्ठा अपि ध्वनयतो करुणाक्रन्दैरतिमात्रम्। एवमपि सागराम्बरा तमिस्राम्बरैः सम्बध्य मुखमण्डलं नभश्वनिःश्वासं जनयति तराम्। इयतीं व्यथामनुभवन्निवेन्दुः सखीमाश्वासयितुं समेष्यति सनचत्रैरम्बरे, इति।

## प्रबन्धस्य भाषा

सन्ति तावत् साधारणी, प्रौढ़ा, जटिला चेति त्रिविधाः भाषाः। साधारणी पञ्चतन्त्रादिषु। प्रौढ़ा कादम्बरीदश कुमारचरितादिषु। जटिला युधिष्ठिरविजयनलचम्पूप्रभृतिषु। अपि नाम शिक्षार्थिनां प्रबन्धरचनोपक्रमे साधारणी प्रशस्ता। ततस्तस्मिन्नभ्यासोपगते प्रौढ़ा। अनन्तरं तस्यां दार्ढ्यमुपगते जटिला। परमेतच्चाप्यवधेयम्; आसु यया भाषया येमनागतभावः सम्यक् प्रकटितुं शक्यते तयैव तैर्लेख्यं नेतरया कदापि लेखनीया। दृश्यते तावत् प्रौढ़ित्वं जटिलत्वं सालङ्कारत्वञ्चापि रचनायाः सौन्दर्य्ये, माधुर्य्ये, ओजस्वित्वे च न हेतुरिति। अनेकत्रालङ्कारहीनायामपि रचनायां लेखकप्रौढ़िबलेन सौन्दर्य्यमाधुर्य्यौजस्विताः परिस्फुरन्ति। नितरां रचनाया उत्तम-

मध्यमाधमत्वे प्रबन्धनिर्म्मातुरुत्तममध्यमाधमत्वमेव हि कारणं न त्वन्यदिति ।

## प्रबन्धस्य भेदः

अस्ति तावत् स प्रबन्धः विषयभेदेन त्रिविधः । यथा—(१) विवरणात्मकः—( Descriptive ) (२) वृत्तान्तात्मकः-(Narrative) (३) चिन्तात्मक—(Reflective) श्चेति सर्व्वमेतत् प्रसङ्गोपक्रमेणोपविष्टान्निवेदयितुकामो न पुनरिदानीं विस्तरभयाद् विवृणुमः ।

## शिक्षार्थिन प्रत्युपदेशः

अभिनवरचनायाः शिक्षयितुरादावेव यस्मिन् विषये प्रबन्धो रचनीयस्तद्विषयो विषयान्तरपरिहारेण पौनःपुण्येन चेतसि चिन्तनीयः । ततस्तस्माद् यो भावः समुपजायेत, स किल पत्रे लेख्यः ; एवं हि यस्य भावस्य यदनन्तरं सन्निवेशेन रचना हृदयग्राहिणी स्वाभाविकी युक्तिशृङ्खलान्विता च साकल्येन भवितुमर्हति, तं प्रति यत्नः सर्व्वथा करणीयः । किन्तु एकैक एव भावः द्विवान्तच्छेदेन (para) किमु एकस्मिन्नप्यन्तच्छेदाभ्यन्तरे द्वित्रा एव भावाः न समावेशनीयाः ।

अपि तु रचनायाः सौष्ठवसम्पत्तये न्यूनकल्पेन सन्दर्भस्य त्रय एवान्तच्छेदाः (paragraphs) सन्निवेशनीयाः । परं सूचना, आलोचना, समाप्तिश्चेति भागत्रयं कल्पयित्वा

आदिमांशे विषयस्य व्याख्यानुप्राणितसंज्ञा, एवमपरे आलोचनाभागे एकाधिकोऽन्तश्छेदः, परं विषयस्य आनुकूल्येन वा यत् किमपि वक्तव्यं तत् सर्व्वेष्व सन्निवेशनीयम्। एवमपि च रचनानुकूल्ये प्रातिकूल्ये वा प्रसिद्धलेखकानां तथा ग्रन्थकर्त्तृणाञ्च मतमुद्धर्त्तव्यम्। भागोऽयमनया रीत्या रचितव्यो यत् समाप्तिभागस्य परिपोषणं भवेत्।

परिशेषभागे तु प्रबन्धस्य रचयितुरेवमेवं करणीयम्। यत् प्रथमभागस्य तथा द्वितीयभागस्य च सारांशं सङ्कलय्य पक्षपातशून्यं स्वमन्तव्यं प्रकाशनीयमिति ; यतो दृश्यते समवगम्यते च तावत् प्रायेण प्रबन्धपरिसमाप्तिदोषेण महैश्वर्य्यशालिन्यपि नानालङ्कारध्वनिगुणयुतापि रचना, निकृत्तमसुन्दर्य्याः अङ्गवैकुल्यमिव दर्शकानामप्रीतिं जनयति, नितरामतिशयनैपुण्येन शेषभागः समापनीयः। आहुस्तावदालङ्कारिकाः—

"तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन।
स्याद्वपुः सुन्दरमपि श्वित्रेनैकेन दुर्भगः॥"

प्रशंसति च विश्वनाथः—

"चित्तं व्याप्नोति यः शीघ्रं शुष्केन्धनमिवानलः।
स प्रसादः समस्तेषु रसेषु रचनासु च॥" इति

एवमपि हि विविधविषयकानामुत्तमोत्तमनिबन्धानां तथा समाचारपत्राणां, सामयिकपुस्तकानां, कविप्रतिभाप्रसूतानां काव्यनाटकादीनां, पुराणेतिहाससन्दर्भाणाञ्च पठनं, सामयिकीनां काव्यनाटकसमालोचनानां पर्य्यालोचनम् ;

प्रख्यातव्याख्यातृणां व्याख्याश्रवणे समादरः, प्रसिद्धानां कवि-सुभाषितानां तत्र तत्रोपयोगिनां शब्दानां, कथानां भावानां, शास्त्रीयाणां लौकिकानाञ्च, अन्येषाञ्चैवंविधानां विविधविषयाणां चेतसि पर्य्यालोचनमित्येतत् सर्व्वं सन्दर्भचारुतानिष्पादनाय सर्व्वथा परमावश्यकम्।

अपि नाम शिक्षार्थिनां प्रतिदिनं नियमेन कश्चन कश्चन विषयोऽवश्यं लेख्यः। न यावत् साध्वी भाषा सम्यक् प्रयोक्तुमुपयुज्यते तावदेव शुद्धाशुद्धिभयमपहाय सरलया, जटिलया, ग्राम्यया भाषया वा रचना विधातव्या। ततः प्रात्यहिकनियतलेखाभ्यासे सञ्जाते स्वत एव किमु प्रश्नावलेन परिस्फुरति माध्वी वाणी। एवं तदा लेख्यं समाप्यानन्तरञ्च कः शब्दः शोभनः कोवाशोभनः, कस्सभावानुकूलः, के शब्दाः कुत्र स्थाप्याः; कस्य शब्दस्य कुत्र कथं कीदृशेन शब्दयोगेन परिवर्त्तनेन वा सम्यक् भावः स्फोटते इत्यादि सर्व्वं यथायथं स्वयमालोचनीयम् शोधनीयञ्चानन्तरादीनि; एवं किलाभ्यासलेरन्तर्य्येण विमर्शेन च शनैः शनैर्भाषावैभवं सौन्दर्य्यं माधुर्य्यं, चेतसः शुद्धिः, संस्काराणां प्राबल्यं दृढ़त्वञ्च, भावानामतिगाम्भीर्य्यञ्चापि समुपपद्यते।

युक्तञ्चापि ऋजुना कुटिलेन वा वर्त्मनोपक्रान्तः प्रबन्धस्तेन तेनैव पथा समापनीयः। न तावत् क्वचिद्दीर्घसमासाक्रान्ता रचना, क्वचित् समासहीना, क्वचिद् ग्राम्या, क्वचिन्नागरिकी, क्वचित् कुटिलार्थबाहुल्या, क्वचिद्वा निरतिशय-

सरलेति ; एवं कस्मिन् कस्मिंश्चापि वाच्यौचित्यात् रचनावैषम्य-मपि न दोषावहं सुस्वादुत्वञ्चामनन्ति सुधियः। दृश्यते हि सुकुमारबन्धेनोपक्रान्तेऽपि सन्दर्भे क्वचिदुद्धतेऽर्थे वाच्ये तत्र सुकुमारबन्धात् विकटबन्धेनैव सोऽतिशयां चारुतां विधत्ते। एवञ्च विकटबन्धेनोपक्रान्तेऽपि कुत्र कोमलकरुणशान्तादावर्थे प्रयुक्ते तस्मिंस्तस्मिन् परमशोभा सञ्जायते। अपि च व्याक-रणसम्बन्धिषु नियमेषु, तथा काव्यप्रसिद्धश्रुतसंस्कारतादिदोषेषु दृष्टिर्देया। समवलोक्यते चोपक्रमोपसंहारोपपत्तिभिः सम्य-गुपपादितोऽपि हृदयङ्गमश्चापि सन्दर्भो व्याकरणाशुद्धिसद्भावे न वितनोति शोभाम्; नापि तदभीष्टाङ्कप्राप्तिरूपं फलं फलितुं क्षमते, नापि वा पुष्णाति गाम्भीर्य्यमिति दिक्।

## वाक्यम्

उच्यते प्राक् रचना, सरलसहजभाषया सततं विवरितुं यतितव्येति। तत्र तावत् "वाक्यं स्याद् योग्यताकाङ्क्षासत्ति-युक्तः पदोच्चयः" इत्यालङ्कारिकवचनं सर्व्वप्रयत्नेनानुस्मरणीयम्।

(क) योग्यता तावत् पदार्थानां परस्परसम्बन्धे बाधाभावः यथा—"वह्निना सिञ्चति" "जलेन दह्यते" "भूमौ निमज्जति" इत्यादौ पदसमूहानां परस्परविरुद्धार्थतयार्थप्रतीते बाधितत्वा-न्नैते वाक्यरूपाः।

(ख) आकाङ्क्षा—वाक्यानामर्थग्रहणाय एकपदश्रवणात् परमन्यपदस्य श्रवणेच्छा। या किल क्रियापदश्रवणात् ततः

कारकपदस्य, किमु कारकपदस्य श्रवणात् क्रियापदस्य श्रवणे प्रवृत्तिरुपजायते सैवाकाङ्क्षेति निर्गलितार्थः। यथा— "रामचन्द्रो वनं गच्छति" इति वाक्यं आकाङ्क्षानुसारेण कर्तृकारकादिपदमुपन्यस्तम्। परं यदि "रामचन्द्रः" अथवा "रामचन्द्रो वनम्" इत्युक्तौ वाक्यस्य न पुनः समाप्तिरुपगता। अत्र यत् "गच्छति" क्रियायाः प्रवृत्तिः स्वतः एव मानसमधिकरोति तन्नूनमाकाङ्क्षेति।

(ग) आसत्तिः—यत् पदार्थेन यत् पदस्यान्वयापेक्षा तयोरव्यवधानेन पदेनोपस्थापनम्। सा किलासत्तिः योग्यताकाङ्क्षान्वितपदसमूहानामव्यवधाने संस्थापनरूपा यथा—"रामचन्द्रो वनं गच्छति" इत्यत्रादिमांशं "रामचन्द्रो वनम्"इत्युक्त्वा क्षितिघटिकान्तरे "गच्छति" इति क्रियापदोक्तौ आसत्तिविरहात् नार्थप्रतीतिः। एवमपि "त्वं मम परमोहितैषी, तवास्ति विपुलो गुणः" इत्यत्र "त्वं, विपुलो, गुणः परमो हितैषी तव मम" इत्यादिरूपोपस्थापने पदसमूहानामासत्तिविरहात् नार्थस्य प्रतिपत्तिः, नितरामेतन्न वाक्यम्।

## वाक्यांशः

वाक्यांशः एकेन तदधिकपदोपस्थापनेन वा चित्तवृत्तेरांशिकत्वमुपस्थापनं वाक्यांशो नाम। तमवलम्ब्याधोलिखितप्रणाल्या वाक्यं विरचितुं शक्यते। यथा—(क) कायमनोवाक्यैः (ख) चित्रार्पित इव (ग) सकलसुखस्य निदानं

(घ) अविमृष्यकारितायाः फलं (ङ) इतिकर्त्तव्यता विमूढ़ाः (च) आग्रहातिशयेन।

(क) अपि नाम साध्व्यः सीमन्तिन्यः कायमनोवाक्यैः पत्युर्मङ्गलं सदा कामयन्ते।

(ख) कैशोरे वयसि रामभद्रस्य पाणौ विषमायाति पिनाकधनुः समीक्ष्य विवाहसंसदुपगताः सर्व्वेऽभ्यागता राजन्या विदेहाश्च चित्रार्पिता इव रेजिरे।

(ग) ब्रह्मण्युपन्यस्तं ध्यानमेव सकलसुखस्य निदानम्।

(घ) प्रणयभङ्ग एव अविमृष्यकारितायाः फलम्।

(ङ) विपदि मूर्खा एव इतिकर्त्तव्यताविमूढ़ा भवन्ति।

(च) आग्रहातिशयेन सीतापतिर्दुःखमभिगच्छति।

## पदान्वयः ( सान्वयपदनिर्व्वाचनं वा )

वाक्यान्तर्गतैकैकपदस्य तथा लिङ्गवचनपुरुषकारककाल-वाच्यभेदस्य च यथासम्भवोल्लेखः पदान्वयः। आहुस्तावद्वृद्धाः—

"पदं पञ्चविधं तच्च विशेष्यञ्च विशेषणम्।
सर्व्वनामाव्ययं चेति क्रियापदमितीदृशम्॥"

इति पञ्चविधानां विशेष्यादीनामन्वयो यथाक्रमेण वेदितव्यः। तत्र तावत् विशेष्यस्य पदान्वये—विशेष्यस्य प्रकारभेदः; तथा लिङ्गवचनपुरुषकारकान्वयानां सम्बन्धस्य चोल्लेखो विधातव्यः। विशेषणपदान्वये—कीदृशं विशेषणं कस्य विशेषणमित्यादि सर्व्वं विशेषेण निदर्शनीयम्। एवं विशेष्यभावापन्नं विशेषणञ्चेत् पूर्व्वोक्तरीत्या तावदुल्लेख्यम्।

सर्व्वनामपदान्वये—आदौ सर्व्वनामपदं विशेषणीयम्; किन्तु विशेष्यस्य परिवर्त्तेन न्यस्तं तत् सर्व्वं विशेष्यस्येव कारकादिपदैर्न्निर्वेशनीयम्। अव्ययपदान्वये—अव्ययप्रकारभेदानामुल्लेखो विधेयः। क्रियापदान्वये—क्रिया समापिकासमापिका, किम् कर्म्मिकाकर्म्मिका, वर्त्तमानभूतभविष्यत्कालज्ञापिका, कस्मिन् वाच्ये, केन पुरुषेण सहान्विता, असमापिका चेत् कया क्रियया अन्वययुक्तेत्यादि सर्व्वं विशेषेण विज्ञापनीयम्। तेषां पदानां दिङ्मात्रोदाहरणं क्रमेण ज्ञातव्यम्। यथा—"रामो लक्ष्मणमवादीद् वत्स, यूयं मम प्राणसदृशाः" इत्यत्र "रामः" संज्ञावाचकविशेष्यपुंलिङ्गैकवचननामपुरुषकर्त्तृकारकोऽयं पदम् "अवादीत्" इति क्रियायाः कर्त्ता।

लक्ष्मणं—इति पुंलिङ्गैकवचनं संज्ञावाचकविशेष्यं कर्म्मकारकपदं "अवादीत्" क्रियायाः गौणकर्म्म; अनुक्ते कर्म्मणि द्वितीया।

अवादीत्—इति भूतेऽद्यतनातीते कर्म्मान्विता समापिका क्रिया; द्विकर्म्मरूपा, गौणकर्म्म "लक्ष्मणं" मुख्यन्तु परवर्त्तिवाक्यसमूहम्।

वत्स—इति विशेष्यभावापन्नं विशेषणं सम्बुद्धौ प्रथमा।

यूयम्—इति सर्व्वनामपदं लक्ष्मणादीनां परिवर्त्ते प्रयोज्यं, मध्यमपुरुषस्य बहुवचनं "भवथ" इत्यूह्यक्रियायाः कर्त्ता। मम—इति सर्व्वनामपदं रामस्य परिवर्त्ते प्रयोज्यमुत्तमपुरुषस्यैकवचनं पुंलिङ्गं षष्ठीविभक्तियुतं "प्राणसदृशाः" इति

पदान्तर्गतप्राणशब्देन सह सम्बन्धान्वितम्। प्राणसदृशाः— इति विशेषणं पदं "यूयं इति सर्व्वनाम्नः विशेषणम्।

इत्यमेव दिशा सर्व्वत्र पदान्वयो वेदितव्यः सुकुमारमतीनां बालानाम्।

## गद्ये पदस्थापनव्यवस्था

योग्यताकाङ्क्षान्वितपदकदम्बकं वाक्यमित्युक्तम्। तादृशे संक्षिप्तवाक्ये आदौ कर्त्तृपदमवशेषे च क्रियापदं स्थापनीयम्। अनुज्ञायामस्य व्यत्ययोऽपि भवेत्। यथा मेघो गर्ज्जति। वृष्टिः पतति। शिशुः क्रीड़ति। अनुज्ञायां—त्वं गच्छ। गुरो, मां प्रति सदयो भव। एहि त्वम्। दूरमपसर। गच्छ त्वं यममन्दिरम्।

सकर्म्मिकायाः क्रियायाः प्राक् कर्त्तृपदं देयम्। यद्यपि क्रिया द्विकर्म्मिका तर्हि तस्याः अव्यवहितोत्तरे मुख्यं कर्म्म तत्पूर्व्वे गौणं कर्म्म स्थापनीयम्। यथा—शिशुः मातरं याति। माता शिशुं चन्द्रं दर्शयति। मालाकारः वृक्षं पुष्पं चिनोति। भिक्षुकः धनवन्तं धनं याचते।

समापिकायाः क्रियायाः प्राक् असमापिका क्रिया सन्निवेशनीया, एवं तस्याः क्रियायाः यानि कर्म्मपदानि तानि तस्याः क्रियायाः अग्रे प्रयोज्यानि। यथा—

विद्यार्थी स्वेन हस्तेन मिष्टान्नमादाय दरिद्रेभ्यो वितरति।

विशेषणपदं विशेष्यस्य प्राक्स्थापनीयम्। यद्यपि द्वयं तदधिकं वा विशेषणं पदं वर्त्तेत, तर्हि चकारादि अव्ययं व्यवहरणीयम्। यथा—दीर्घा रात्रिः। सुन्दरी बालिका। सुरभि पुष्पम्। सुन्दरं मनोज्ञञ्च प्राकृतिकं दृश्यम्। दीना मलीना च तस्याः शोभा। अर्थशून्या असम्बध्या च सा वाक्। विद्वान् उत रसज्ञो भवतारणः। राधावल्लभो मूर्खो वा अविमृष्यकारी। श्यामो विवेकहीनः किंवा अकृतज्ञः। रामचरणः शक्तिमान् किन्तु साहसशून्यः।

विशेषणपदस्य प्राधान्ये तथा विधेयविशेषणे च विशेषणं विशेष्यस्य परतो योज्यम्। यथा—श्यामः अतिशयः सुशीलः। स यादृशः कर्मठः तादृशः एव बुद्धिमान्। यं पुरुषम् उद्योगिनं लक्ष्मीस्तमुपैति।

क्रियाविशेषणं प्रायेण क्रियायाः अव्यवहितोत्तरे स्थाप्यम्। यथा—तूर्णं गच्छ। मधुरं हसति। वृथा भाषते। तूष्णीं भव। मृदु हसति। "अयि कृशोदरि, गच्छ शनैः शनैः" "पश्यति सादरं मुहुः" "झटिति प्रविश गेहं" इत्यादि।

सर्व्वनामपदस्य विशेषणं प्रायेण तस्य पश्चात् योज्यम्। किन्तु विशेषणस्य प्राधान्ये पूर्व्वेऽपि भवेत्। यथा—त्वं मूर्खः। स पण्डितः। अहं पीड़ितः। मोहान्धोऽहं किं ते वर्णयामि रूपं प्रभो।

उद्देश्यविधेये प्रकृतिविकृती च प्रकृतिपदम् अग्रे स्थाप्यम्। यथा—हरिरेव एतत्कार्य्यस्य मूलम्। "वेदाः प्रमाणम्"।

"नक्षत्रभूषणं चन्द्रः" "एको द्वयः पञ्च नौकाः भवति" इत्यादि।

करणपदं कर्त्तृपदस्य पश्चात् कर्म्मापादानाधिकरणाना-मग्रतो योज्यम्। यथा रामः स्वेन हस्तेन पुष्पं सञ्चित्य शिवायतने तमेव देवादिदेवमर्च्चयति।

चलभयादानोत्पत्तिविरामान्तर्धानपराजयभेदार्थकधातूना-मव्यवहितपूर्व्वेऽपादानं देयम्। यथा—प्रासादात् पतितः, सर्पात् भीतः, गुरोरादत्ते, पङ्काज्जातमित्यादि। कस्मिन् कस्मिन्नप्यपादानादुत्तरतः कर्त्तृकर्म्मकरणाधिकरणानि स्युः।

यथा—पुष्पात् फलमुत्पद्यते, उद्यानात् पुष्पं गृह्णाति, अस्मात् दण्डेन काकं निवारयति, श्येनमुखात् पतितं शुक-शावकं पिञ्जरे रक्ष।

स्थानवाचकं तथा कालवाचकमधिकरणं वाक्यारम्भे प्रयो-ज्यम्। यथा—त्रेतायामयोध्यानगरे दशरथो नाम राजासीत्। तत्रैकः सिंहः प्रतिवसतिस्म। स तदा तूष्णीं स्थितः। पेचकः रात्रौ शब्दायते। नक्षत्राणि घोरान्धतमसि द्योतन्ते।

सम्बन्धपदानि प्रायशः सम्बन्धिपदानां पूर्व्वे स्युः। यथा— "आषाढ़स्य प्रथमदिवसे" कदाचित् सम्बन्धिपदस्य विशेषणे व्यत्ययोऽपि दृश्यते। यथा—दुर्व्वोध्या खलु मानवानामवस्था। पद्मसरसः पश्चिमे तीरे। तपोवनस्यानतिदूरे।

सम्बोधनं पदं वाक्यारम्भे प्रयोज्यम्। यथा—"देव! अस्ति महती वार्त्ता।" भोः ब्राह्मन्! क्व गच्छसि? "हा देवि!

इयदेव दर्शनम् ।” “देवि! अपीदानीं स्वस्था?” रे रे पापकारिन्! किं त्वया कृतम्? “अयि कृशोदरि! गच्छ शनैः शनैः।” “अये! कथमनतिदूरे स्त्रीजनकण्ठस्वरं श्रूयते।”

हा-हन्त-अहहादीनि खेदसूचकाव्ययानि, तथा भोः-अये-अयिप्रभृतीनि सम्बोधनज्ञापकाव्ययानि वाक्यारम्भे प्रयोज्यानि यथा—“हा हा देवि! इत एव दर्शनम्।” “हा हन्त! तुलसि! त्वद्वासना प्रोज्झिता।” “अहह! महापङ्के पतितोऽसि?” “भो भो वृक्षाः पर्व्वतस्थाः।” “अये! किं नागता देवी?” “अयि! कठोर! यशः किल ते प्रियम्?”

अथ-अपि-कथं-प्रभृत्यव्ययानि तथा किम्-शब्दस्य कतिपदानि वाक्यारम्भे प्रयोज्यानि। यथा—“अथ शशकस्य वारः समायातः।” “अथ इयमेव दशा प्राणभृताम्।” अथवा भाग्यविपर्य्ययस्य परिणामः। अपीदानीमपि वर्त्तते ते तृषा? “अपि समागता देवी?” अपि कृतस्त्वं दिनमुपोषितः? कथं सोऽत्रागतः? कः कुत्र भोः? कः आगतः? कतमोऽसौ? कियद्वा तस्य वयः? कियती वर्त्तते वेला?

नाममध्यमोत्तमपुरुषान्वितपदान्वये उत्तमपुरुषोक्तक्रियैव देया। तथा मध्यमपुरुषयुक्तपदेऽपि मध्यमपुरुषोक्तक्रिया निवेशनीया। यथा—माधवस्त्वमहञ्च यास्यामः। रामस्त्वञ्च भक्षयतम्।

इत्यादि दिशा सर्व्वं ज्ञातव्यम्। विस्तरतः स्वस्वपठितव्याकरणाद् ज्ञातव्यमिति संक्षेपः।

## पदस्थापनादर्शः

अधोलिखितप्रणाल्या नवीनशिक्षार्थिनां पदोपस्थापनं समीचीनमामनन्ति विद्वांसः। तत् संक्षिप्ताया: रीते रादर्शो यथा—

| सम्बोधनम्, | कर्त्ता, | निर्द्धारः, | विशेषणम्, | हेतुः, | सम्बन्धः, | अधिकरणं, | अपादानं, | करणं, | कर्म, | क्रिया |
|---|---|---|---|---|---|---|---|---|---|---|
| … | रामः | … | … | … | … | … | … | … | … | गच्छति। |
| … | रामः | … | … | … | … | … | … | … | पुरस्कारं | गच्छति। |
| … | रामः | … | … | … | … | … | … | स्वेन हस्तेन | पुरस्कारं | गच्छति। |
| … | रामः | … | … | … | … | … | आचार्य्यात् | स्वेन हस्तेन | पुरस्कारं | गच्छति। |
| … | रामः | … | … | … | … | सम्मुखे | आचार्य्यात् | स्वेन हस्तेन | पुरस्कारं | गच्छति। |
| … | रामः | … | … | … | सर्व्वेषां | सम्मुखे | आचार्य्यात् | स्वेन हस्तेन | पुरस्कारं | गच्छति। |
| … | रामः | … | … | अतः | सर्व्वेषां | सम्मुखे | आचार्य्यात् | स्वेन हस्तेन | पुरस्कारं | गच्छति। |
| … | रामः | … | सुशीलः | अतः | सर्व्वेषां | सम्मुखे | आचार्य्यात् | स्वेन हस्तेन | पुरस्कारं | गच्छति। |
| … | रामः | युष्मासु | सुशीलः | अतः | सर्व्वेषां | सम्मुखे | आचार्य्यात् | स्वेन हस्तेन | पुरस्कारं | गच्छति |
| हे बालकाः | रामः | युष्मासु | सुशीलः | अतः | सर्व्वेषां | सम्मुखे | आचार्य्यात् | स्वेन हस्तेन | पुरस्कारं | गच्छति। |

## वाक्यवृद्धिः

लघुलघिष्ठवाक्यविवर्द्धये प्रथमं तावत् विशेषणादिचित्तचमत्कारिपदोपस्थापनेन वाक्यं वर्द्धितव्यम्। यथा—

(क) वाल्मीकिः रामायणम् अरचयत्।

(ख) महर्षि वाल्मीकिः महाकाव्यं रामायणम् अरचयत्

(ग) महर्षिः वाल्मीकिः सप्तकाण्डेन महाकाव्यं रामायणम् अरचयत्।

(घ) महर्षिः स्वभावकविः वाल्मीकिः सप्तकाण्डेन सुमनोहरं महाकाव्यं रामायणम् अरचयत्।

(ङ) महर्षिः स्वभावकविः प्राचेता वाल्मीकिः सप्तकाण्डेन लोकशिक्षार्थम् अभिनवं छन्दोमयं सुमनोहरम् ऐतिहासिकं महाकाव्यं रामायणम् अरचयत्।

(च) महर्षिः स्वभावकविः प्राचेता वाल्मीकिः बहुसर्गात्मकेन सप्तकाण्डप्राधान्येन लोकशिक्षार्थम् अभिनवम् अनिष्टभ्छन्दोमयं सुमनोहरम् ऐतिहासिकं-महाकाव्यं रामायणम् अरचयत्।

(छ) स महर्षिः स्वभावकविः प्राचेता वाल्मीकिः प्रथमे वयसि अतिदुर्वृत्तः दस्युः अभवत्। ततः कश्चित् ब्राह्मणः उपदेशेन स्ववृत्तिमपहाय षष्ठीसहस्रवत्सरपर्य्यन्तं सनातनं तारकरामब्रह्मनाम ध्यायन् कलुषादुत्तीर्य्य नीतिपरिपूर्णेन बहुसर्गात्मकेन सप्तकाण्डप्राधान्येन लोकशिक्षार्थं व्याधशराभिघात-हतक्रौञ्चशोकोत्थम् अभिनवमनुष्टुभ्छन्दोमयं सुमनोहरं

शब्दसंस्थानवैचित्रं नैसर्गिकशोभावर्णनबाहुल्यं महाकाव्यं रामायणं दुःखमये जगति व्यरचरत्।

**"पातु वो गिरिजामाता"** इति वाक्यम्, तस्य विस्तृतिः ; यथा—

या खलु पुरा सतीनाम विग्रह्य निखिलकर्त्तव्यकर्म्मैकायनीभूतं पतिमेव मर्म्मसमालम्बनरूपं मन्यमाना तदनुसरणमेव सकलकर्त्तव्यादधिकतममवबुध्य जनकमुखात् पतिनिन्दाश्रवणेन प्राणान् त्यक्त्वा प्रस्थापयदन्वर्थनाम सतीरमणीनिवहेषु अतिमात्रम्। एवं हि या निखिलनगाधिराजं गिरिवरं हिमालयं जनकत्वेनाङ्गीकृत्य त्रिदशपुरवासिनां पदवीमभिगच्छन्तं प्रचण्डदोर्दण्डविभीषितभुवनत्रयजनमानसं दैतेयं महिषासुरं त्रैलोक्यविस्मयकरे महाहवे सहानुचरं निपात्य जगतां स्वास्थ्यमनयत्। या हि नाम पुनर्देवगणस्तवपरितुष्टा विधृतभुवनजनगणमनमोहिणीरूपा हिमवतस्तुङ्गशृङ्गसङ्गमध्याधिरूढ़ा दनुजेश्वरवरं कैतवेन परिभूय लोकत्रयातिविस्मयकरं समरमभिनयन्ती निहन्ती च हेलया मत्तवारणनिभातिशक्तिधरान् शूरशौण्डान् चण्डमुण्डादिदनुजनिकरान्। या किल रक्तवीजशोणितकणक्षौणीस्पर्शनोत्पन्नतशोऽपि दानवराणाङ्गनेऽत्यतिकोपना प्रकटितविकटनरसिंहशूकरशुनासीरादिदेवप्रधानवपुर्व्विभ्रमा हिरण्यकशिपुकुक्षिविदारितारुणरुधिरच्छटोद्भाषितखरनखरनिकरसमरसहायकैः परहृदयकरत्रासविजृम्भकैः स्वैः स्वैरेवास्त्रैः निखिलावनिपरिव्याप्तरक्तवीजादितिसुतं समनभवनातिथिमनयत्। या नूनमखिल-

प्रभुधर्म्माभिग्टह्णन्तौ कृतान्तस्यापि कृतान्तसमौ निशुम्भशुम्भासुरौ सहानुचरौ प्रज्वलद्घोररणरोहिताग्नौ समिधौ प्रकल्प्य समूल-दानवकुलविनाशेनात्यसहणीयगुरुभाराभिभूतायाः भूतधात्र्याः गुरुकठोरभारं लघीत्वमप्रापयल्लीलाललितकलाविलासेन। सा युगयुगान्तरोद्भवदानवदर्पसूदणी हरहृदयविलासिनी गिरिजा माता वः ( युष्मान् ) पातु कायान्तरायात् शश्वत् समा इति।

"कृष्णः करोतु कल्याणम्" इति वाक्यस्य विस्तृतिः—

हं हो! यस्तावदिह निखिलललामभूतां ज्योतिः-सोम-सवितृपचितविपुलाम्बरकलेवरां शस्यैश्वर्य्यश्यामलामिमामिलां परिवर्त्तवारिधिवारिनिलयासीनां समीक्ष्य विधृतविसारवपुर-नाद्याम्नायचयं समुद्धृत्य सनातनं पुण्यं पुनर्जगत्यनयत्। नूनमन्यदा पुनरङ्गीकृतनिकृष्टघृष्टिविग्रहः प्रलयसलिललीना-चलां विशालदशनमुशलाग्रेण विग्टह्य समुत्तोलयत्। पर्य्यायित-त्रितयकमठकायं प्रकटयन् सशैलसलिलाधारां धरणीमिमामद्यापि पृष्ठे परिस्थापयत्। अपि तुर्य्याश्चर्य्यरूपं नृसिंहविग्रहं विकलयन् सोरप्रकारनखरनिकरघर्षणकर्षणैः शैर्य्यवीर्य्याभिमानिनो दैत्यपतेर्हिरण्यकशिपोरिनःकठिनोषरां हृदयधरां विलोरयत्। योऽदिति-कुक्षौ स्वीकृतातिक्षुद्रमूर्त्तिर्दानिज्यागर्व्वगर्व्वितं दैतेयं बलिं छद्मना खर्व्वयितुं त्रिपादमितां महीं संभिक्ष्य बड़वामुखमनुलम्भयंश्च तं त्रिदशच्युतान् विबुधांश्च पुनर्निजपुरमनयत्। यः पुनर्निदाघ-मध्याह्नमार्त्तण्डप्रकाशशोचशौण्डजमदग्नेरुत्सजन्मा पित्रनुदिष्टो मातरं निहत्य स्तुत्यनुहृष्टेन पुनस्तेनापि तामजीवयत्। एवं

निशस्यानुचितपरेतपुरमभिगमनं पितुर्य्यस्तन्महामर्षातिक्रान्ता-न्तःकरणो बलवज्ज्वलन इव स्फारकुठारधाराचिंषा प्रचुरेन्धन-प्रकारं प्रखरहैहयभुजवनं ददाह। अतपश्चाप्यभिमानाभि-मानिनां क्षीणोजक्षत्रियाणां चेतनो गलल्लोहितधारयैकविंशति-कृत्वः पितरम्। यस्तावन्निकषात्मजोद्वेजितादितिजानुनयक्रमेणा-खिलवर्य्यार्य्यमप्रभावाप्रतिमान्वयसम्भवातिशयैश्वर्य्यवद्दशरथोरमा निखिलनारीसौभाग्यवतीशुचिस्वतीनां कौशल्यादीनां जठरेषु चतुर्भिरंशैर्जननमभिगृह्य गौतममन्यूपरतां प्रातःप्रदीप्तमयाख-भास्वरनीकाशयोषामङ्कतवरिष्ठाङ्गनां प्रस्तरमयीमहल्यां चरण-रेणुना मानुषीं विधाय साक्षात् मात्त्विरूपासङ्गसङ्गतिसङ्गमवती विदर्भराजस्य तनयां जानकीमुपयम्य भवनोपगतः कैकेयीवाक्यानु-पालयता पित्रा निर्व्वासितः, काननावनीमधिवसन् ऋक्षप्लवगचर-सहायेन सागरपरपारसन्निमग्नां लङ्कां समेत्य जातुधानप्रधानं त्रिलोकाहृतसकलकुलमर्य्यादं मुषितजनकाङ्गजं शासितुरपि शासितारं रावणमनाख्येयमंख्येन समूलं कुलं समुच्छिनत्। अपि नाम यो हि देवकीजठरादाकर्षितो रोहिण्यङ्के वसुदेवदेहजन्मा विशालहलप्रहरणेनाप्रतिममल्ललीलया च शिष्टकष्टमपहर्त्तुं दुर्वृत्तदैत्यदलं निहत्य लघूकरोद्धरित्राश्वासं बहुम्। यः किल मायादेवीगर्भगृहाज्जन्म परिगृह्य विमुक्तमायिकोऽशेषसुखसमृद्धिं राज्यं भोग्यं भुज्यश्च तुच्छोपलखण्डवत् मन्यमानाभिनवसार्व्व-जनीनधर्म्मं जगत्यस्थापयत्। य एव हि वर्त्तमानयुगावतारः कल्किनामा सम्बलपुराभिधेयपत्तने विष्णुयशोधनविप्रोरसि

संभविष्यन् वेदाचारविचारवर्जयितानानार्य्यान् विनंक्ष्यते। स एव युगयुगावतारप्रबलसकलबाधाबाधिता विश्वमूर्त्तिर्भगवान् दुःख-संस्थानकारिकंशारिः कृष्णो युष्मत्कायजं कर्म्मजं मानसिकञ्चापि कल्याणं करोतुतमाम् इति।

"शश्वद्रक्षतु वः समस्तविरहात् सोऽयं विभुः शङ्करः"

यदस्ति कल्पान्तसकलचराचरोद्भिज्जजीवजन्तुबीजव्रजार्च्चिता-दिमयुगोद्भवनिखिलसलिलकलापकलेवरम् एवं यज्ज्वलनजाल-पुद्गलेन विधिविहितहुतहव्यमात्मरुचिरामरं प्रापयज्जगज्जना-तिहितसिद्धये। यदपि च स्वर्गग्रामगमनयोनिमख्यमुख्य-समापकत्वेनात्महवनकर्त्तृत्वमाख्यापयत्। ये च तावदसीम-महामहिमचिरन्तनानन्तकालं दण्डमुहूर्त्ताद्युपाधिभेदमहो-रात्राभ्यामुपजनयतः सूर्य्यचन्द्ररूपे जगतां पुष्कलेन। किञ्च यत् शब्दसमवायिकारणमनाद्यनिधनं गुणितपञ्चगुणान्विताकाश-विकाशमेव विग्रहम्। परमन्यत् सकलजीवकुलासुधारण-कारणशस्यौषधिनिदानावशीकरणम्। एवं नाम यदेवाक्षुद्र-जगज्जीवश्वासप्रश्वाससम्बाहकतया त्वग्ग्राह्यत्वेन च प्रत्यक्ष-गोचरम्, जगत्प्राणसंज्ञककायम्। तैरेतैः स्वस्वेन्द्रियग्रामग्राह्यैः शम्भोः शरीरैः सार्द्धमनाद्यनिधनोऽयं स विभुः शङ्करः समस्त-विरहात् क्लेशकोटिकात् शश्वदविरतं वः युष्मान् रक्षतु।

विशेषणादिप्रयोगबाहुल्येन वाक्यस्यातिविस्तृतिः कादम्बरी-वासवदत्तादिगद्यमयेषु ग्रन्थेषु ज्ञातव्या। तत्रत्योदाहरणानि विस्तारभिया न दर्शितानि।

## वाक्यसंक्षेपः

लक्षणलक्षितवाक्यानामंशविशेषस्य त्यागः वाक्यसंक्षेपः। स तावत् विशेषणाद्यप्रयोजनीयपदांशानां त्यागाद्यैर्भवति। यथा—

(क) तत्र सकलार्थिसार्थकल्पद्रुमः प्रवरनृपमुकुटमणि-मरीचिचयचर्चितचरणयुगलः सकलकलापारंगतोऽमरशक्तिर्नाम राजा बभुव।

(१) तत्र सकलार्थिसार्थकल्पद्रुमः सकलकलापारंगतोऽमर-शक्तिर्नाम राजा बभुव।

(२) तत्र सकलकलापारंगतोऽमरशक्तिर्नाम राजा बभुव।

(३) तत्र अमरशक्तिर्नाम राजा बभूव।

(ख) वीरवरः सूचिभेद्यान्धतमसि प्राकारमुल्लङ्घयामास, अगृह्णञ्च वित्तापहारिणः करम्।

(१) वीरवरः अन्धे तमसि प्राकारमुल्लङ्घ्यागृह्णत् वित्ताप-हारिणः करम्।

(ग) अहो! कष्टं! कष्टम्!! ब्रह्मदत्तस्य नयनं नश्यति नितरां सकृदपि द्रष्टुं न शक्नोति आश्रमपदम्।

(१) अहो! कष्टम्! ब्रह्मदत्तनयनहीनः नितरां सकृदपि न पश्यति आश्रमपदम्।

( घ ) देवर्षिर्यथा विष्णुभक्तो भवति तथा शुक्रदेवोऽपि।

( १ ) देवर्षि शुक्रदेवौ समानौ विष्णुभक्तौ भवतः।

( २ ) देवर्षिशुक्रदेवौ तुल्यं विष्णुं भजेते।

( ङ ) द्रौणिर्हत इति ज्ञात्वा आचार्यः प्राणान् तत्याज। ततस्ते कौरवा विषादविह्वला निरतिशयं चक्रन्दुः। तत्त्वार्थदर्शी सञ्जयस्तान् प्रबोधयामास। रणभूम्येकदेशं यात्वाश्वत्थामानं तत्रानेतुं विनयधरं कञ्चुकिनं प्रस्थापयामास च।

( १ ) द्रौणिर्हत इति बुद्धा मृतमाचार्यमनुशोचयतः कौरवान् सञ्जयः प्रबोध्य रणभूम्येकदेशात् अश्वत्थामानमानयनाय कञ्चुकिनं प्रस्थापयामास।

---

## अर्थविवृतिः

( Expression of mining )

कस्मिंश्चिद्वाक्ये वाक्यांशे वा अर्थस्य सहजबोध्यवाक्येन विवृतिरर्थविवृतिः। सा च वाक्यस्थदुर्बोध्यपदानां सहजपदेन परिग्रहणरूपा। परं पदपरिवर्त्तनेऽपि चेदर्थस्य सम्यक् विवृति-

संघटते तर्हि जटिलं सङ्कोचितांशञ्च एकाधिकमहजपदोपस्थाप-
नेन संप्रसारणं विधायार्थो गृह्णीयः।

अर्थः ( Paraphrase ) यथा—(क) ततः स देवराट् देवैः ऋषिभिश्च स्तूयमानस्त्रिपिष्टपस्थो निष्कल्मषो बभूव।

( १ ) ततः अनन्तरं स देवराट् इन्द्रः देवैः अमरैः ऋषिभिः मुनिभिः स्तूयमानः वन्द्यमानः त्रिपिष्टपस्थः स्वर्गस्थः निष्कल्मषः पापशून्यः बभूव अभवत्।

( ख ) अस्ति समस्तनगरीनिकषायमाणा शश्वदगण्यपण्य-विस्तारितमणिगणादिवस्तुजातव्याख्यातरत्नाकरमाहात्म्या मगध-देशशेखरीभूता पुष्पपुरी नाम नगरी।

( २ ) समस्तानां सकलानां नगरीणां पुरीणां निकषः आदर्शः शश्वत् निरन्तरं अगण्यैः असंख्यैः पण्यैः विक्रेयैः विस्तारितैः मणिगणादिवस्तुजातैः मणीनां रत्नानां गणाः समूहाः ते एव आदयः मणिगणादयः; वस्तूनां जाताः समूहाः मणिगणा-दय एव वस्तुजाताः मणिगणवस्तुजाताः तैः रत्ननिचयादिवस्तुसङ्घैः व्याख्यातं निवेदितं रत्नाकरस्य समुद्रस्य माहात्म्यं महिमा यया तथाभूता बहुशोरत्नपूरिता मगधदेशस्य शेखरीभूता शिरोभूषण-रूपा पुष्पपुरीनाम नगरी अस्ति विद्यते।

( ग ) मूर्खस्य च दिशः शून्याः।

( ३ ) शास्त्रज्ञानहीनत्वेन कर्त्तव्याकर्त्तव्यविमूढ़तया मूर्खः निरन्तरम् अवसीदति, नितरां सर्व्वथा तस्य अवश्यपाल-नीयेऽपि कार्य्ये औदासीन्यं घटते।

व्याख्या—( Explain ) सा हि प्रागुक्तरीत्यनुक्रमेण पूर्व्वसम्बन्धस्थापनेन च व्याख्यातव्यांशस्य अलङ्कारैतिहासिकत्व-प्रकटनरूपा। यथा—

( क ) अथ तस्य राजकुमारस्य कमलगूढ़शशिकिरणरज्जु-दामनिगृहीतमिव रजतशृङ्खलोपगूढ़ं चरणयुगलमासीत्।

(१) निद्रोपगतयोः अवन्तीसुन्दरीराजवाहनयोः दम्पत्योः सतोः ; अथ प्रबोधनान्तरं राजकुमारस्य राजवाहनस्य चरण-युगलं पादयुग्मं कमलमिति मन्यमानेन नितरां गूढ़ेन भ्रान्तेन शशिना चन्द्रेण किरणाः रज्जुदामानीव तैः निगृहीतं दृढ़-बद्धमिव चरणयुगलं राजवाहनस्येति शेषः ; रजतशृङ्खलेन रौप्यदाम्ना उपगूढ़ं निगड़ितम् आसीत्। अत्रापह्नुत्यनुप्रा-णीतोपमालङ्कारः।

## भावार्थः, तात्पर्य्यं वा

( Purport )

वाक्यस्थितस्यालङ्कारादिबाहुल्यवर्णनीयविषयस्य परित्यागेन मर्म्मार्थप्रकटनं भावार्थो नाम। यथा—(क) तारुण्ये सुविमला धीरपि प्रावृट्सरिदिवाविला स्यात्।

(१) वर्षासु नद्यम्भः यादृशं कर्द्दमाक्तं भवति तथा यौवनेऽत्यतिनिर्म्मलापि बुद्धिः कलुषिता स्यात्।

## संक्षेपार्थः

( Summary ) यथा—

(क) अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः ।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥

(१) अनुत्पन्नः, उत्पद्य मृतः, मूर्खश्च इति त्रिविधानां पुत्राणां मध्ये अनुत्पन्नमृतौ पुत्रौ मनाक् प्रियौ भवतः। यस्मात् हेतोः मृताजातौ स्वल्पदुःखकारणभूतौ स्तः। मूर्खः चिरजीवनं मातापितरौ क्लेशयेत्।

(२) मम पुत्रो न जातः उत्पद्य मृतो वा एतत्तु दुःखं स्वल्पकालव्यापकं मूर्खपुत्रस्तु चिरकालं कष्टदायकः। यतः कृतान्तसदृशो मूर्खः।

**रूपकत्यागेनार्थः**— उपमानार्थं विहाय उपमेयार्थ-विवृतिरूपः। यथा—

(क) अस्ताचलगह्वरोपगते मार्त्तण्डमृगाधिपे ध्वान्तदन्ति-राजः निखिलावनीं निःशङ्कं विचचार।

(१) सूर्य्यास्तमिते जगदन्धकारमयमासीत्।

**अनुक्तपदपूरणम्**—(Flling up of ellipses)

वाक्यान्तर्गतानुक्तपदमर्थादिना सङ्गमय्य युक्तिसाहाय्येन संस्थापन-रूपम्। यथा—

(क)—वत्स !—त्वां—अब्रुवम् ;—सविशेषं—कदाचित्—सांसारिकामोदादिषु—वर्त्तितव्यम्।—सततं—गुणानुकीर्त्तनं—। येन—विच्युति—घटेत ;—सर्व्वदा साध्यम्—।

(१) प्रिय वत्स ! प्राक् त्वां यदब्रुवम्। तत्सविशेषं स्मर्त्तव्यम्। कदाचित् मोहवशत्या सांसारिकामोदादिषु मुधा न वर्त्तितव्यम्। परं सततं परमेशगुणानुकीर्त्तनं कर्त्तव्यम्। येन स्वकर्त्तव्यात्—विच्युति र्न घटेत ; तत्र सर्व्वदा यथा साध्यं यतितव्यम्।

(२) हे वत्स! अहं त्वामेकदा अब्रवम्। तत्-सविशेषमवधेहि। न कदाचित्त्वया सांसारिकामोदादिषु बाहु-ल्येन वर्त्तितव्यम्। गुरुमुखात् सततं शास्त्रगुणानुकीर्त्तनं श्रोतव्यम्। येन तस्मात् विच्युति र्न घटेत। एतत् सर्व्वदा तव साध्यमिति।

(३) अयि वत्स ! पुरा त्वां सर्व्वमब्रुवमधुना सविशेष-मवगच्छ कदाचित् केषु सांसारिकामोदादिषु कथं कथमपि वर्त्तितव्यम्। नक्तं दिवं सततं महर्णीयगुणानुकीर्त्तनं विधेयम्। येन तस्मात् विच्युतिः कदा न घटेत। एवं सर्व्वदा कायपातेनापि साध्यं तव।

---

# सन्धिनियमः

संस्कृतरचनायां प्रायश एव यत्र तत्र सन्धिसम्भवः, नितरामधोलिखितवाक्यं सर्व्वथा स्मर्त्तव्यं सुकुमारमतीनां शिक्षार्थिनां तथाहि—

सन्धिरेकपदे नित्यो नित्यो धातूपसर्गयोः ।
सूत्रेष्वपि तथा नित्यः सचान्यत्र विभाषितः ॥

समासवाक्येषु तथा उपसर्गधातुषु सूत्रेषु च सन्धिरवश्यमेव करणीयः । अकृते दोषः स्यात् ।

(क) 'विदारितारुणरुधिरच्छटोद्भाषितः, इत्यादौ 'विदारित-अरुणरुधिरच्छटा-उद्भाषितः' इत्यादि ।

(ख) 'व्यजेष्ट' 'समभिव्याहार' 'प्रोज्झितः' 'समुद्धरति' इत्यादौ—वि-अजेष्ट,—सं-अभि-वि-आ-हार, प्र-उज्झितः, सं-उत्-हरति, इत्यादि ।

(ग) सिद्धोवर्णः समाम्नायः, वास्मदोर्द्दयोश्च, क्लीवाक्लीवयोः क्लीवमवशेष्यं स चैकवद्वा, इत्यादौ—सिद्धः-वर्णः समाम्नायः, वा-अस्मदोः-द्वयोः च, क्लीव-अक्लीवयोः क्लीवं-अवशेष्यं सः-च-एक-वत्-वा-इत्यादि ।

समासादेरन्यत्र सन्धेर्व्विकल्पो ज्ञेयः । यत्र यत्र सन्धिकृते श्रवणकटुत्वं तथा अर्थस्य च दुर्ब्बोधत्वं घटते तत्र तत्र सन्धिर्न करणीया । यथा—मुग्धे कात्यतिकोपना, त्वानेन सहच्छे-

काव्यटवीं, इत्यादौ—मुग्धा, एका, अतिकोपना, एवं न्रा ( नरेण ) अनेन, सह, ऋच्छ, एकाकी, अटवीं, एवमेव सर्व्वत्र ज्ञातव्यम् ।

---

## यतिचिह्नम् ( Stops )

उच्चारणविच्छेदसूचको जिह्वाया विरामो यतिः । सा हि अस्मद्देशीयैः पण्डितैः छन्दःशास्त्रेषु विशेषेण विहिता । तद्‌ज्ञानाभिलषतस्तेष्वपि शास्त्रेषु अनुसन्धानीया । इह तु गद्यमये वाक्येऽधोलिखितसङ्ख्याङ्कपातेन च या पाश्चात्यपण्डितैरभिहिता, सैव वेदितव्या । यथा हि सा—

(१) ,—कमा (comma) चिह्नमेतत् एकसंख्यकोच्चारणकालं यावत् जिह्वायाः विरामरूपम् ।

(क) यादवः, केशवः, त्वम्, अहञ्च क्रीड़नार्थं यास्यामः ।

(ख) दीनो वा, विभवयुक्तो वा, न जातु पापमाचरेत् ।

(ग) किं करोमि, क्व गच्छामि, किमप्यवगन्तुं न शक्नोमि ।

(२) ;—सेमिकोलन् ( semicolon ) द्वितीयच्छेदः । अयं तावद्द्विसंख्यकोच्चारणकालपर्य्यन्तं विरामरूपः । स तु प्रायश एव क्षुद्रक्षुद्रवाक्येषु तथा किन्तु, यद्यपि, नितरां,

अतएव प्रभृति अव्ययपदानां पूर्व्वस्थपदान्ते एषामव्ययानामग्रतः निवेशनीयः। यथा—

(क) तत्र क्षुधिताय अन्नम्; तृषिताय जलम्; रोगिणे औषधम्; अर्थिने अर्थम् अर्पयन्ति।

(ख) बहुधोपदेशमवोचदाचार्य्यः; तथा अहमपि अनुनयामि; किन्तु वैराग्यप्रणोदितः स मे यवीयान् गृहं शिशुतनयाम्; तथा साध्वीमपि च जायामपहाय काननमवनीं गतः।

(ग) तदसौमोद्यमेन विधातव्यम्; यद्यपि तत्र कृतकार्य्यो न भवेः तर्हि का लज्जा?

(घ) ये खलु परच्छिद्रान्वेषिणः, ते हि प्रधानतः परेषां दोषमन्विषन्ति; नितरां स्वदोषं न पश्यन्ति।

(ङ) तस्मिन् यादृशो मे विश्वासः तेनानुमन्ये, ततः प्रत्याख्यातो न भविष्यसि; अतएव विकल्पमपहाय त्वरा गच्छ।

(३) :—कोलन् (colon) तृतीयच्छेदः। अयन्तु त्रिसंख्यकोच्चारणकालं यावत् विरामरूपः। अस्य यूरोपीयभाषान्तरे व्यवहारो विरलः। वर्त्तमाने जगति तदभाषानुकृतात् यत्र तत्र बाहुल्येन व्यवहारो दृश्यते। यथा—

(क) आदौ साकारोपासनां विना वाङ्मनसोरप्यगोचरस्य ब्रह्मणः कल्पनानोत्पद्येत: साकारवादिनां मतमेतत्।

(ख) संख्याकरणेषु तथा द्रव्यादिविषयनिराकरणेषु च प्राक् तृतीयच्छेदः देयः (colon) तदन्तेषु सरलरेखा योज्या।

यथा—पञ्चनवत्यधिकाष्टादशखृष्टीयशके ( १८९५ ) लोकगणना-विवरणे :—

एते……उत्पन्नाः, इयन्तो मृताः। इत्यादि। तस्य गृहकक्षे इयन्ति सज्जाद्रव्यानि :—एका खट्वा, त्रीणि तैल-चित्रालेख्यानि ; पञ्च पुस्तकाधाराः, द्वे विंशतिः ग्रन्थाः, रमणीयानि बहुविलासवस्तूनि। इत्यादि।

(४) ।—पूर्णच्छेदः, अयं किल वाक्यसमाप्तौ स्थापनीयः। एङ्ग्लोभाषायां (in English) यत्र (.) फुलष्टप् Fulstop योजनीयः, तत्र तदर्थे चास्य व्यवहारः। यथा (क) स गच्छति। दुःखमय एव संसारः।

(ख) त्यज दुर्जनसंसर्गं भज साधुसमागमम्।
कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम्॥

(५) ? –प्रश्नज्ञापकचिह्नमेतत् यथा—

(क) किं करोषि ? उद्धृतांशः सरलभाषयानुद्यताम् ? निन्दुकस्य का कथा ?

(६) ! —चिह्नमिदं सम्बुद्धौ, तथा घृणाहर्ष-विषाद-विस्मयादिषु, अहो-हा-अयि-भोः-अये-बत-हन्तप्रभृत्यव्ययवाक्येषु व्यवहरणीयम्। हे भगवन् ! मां रक्ष। अहो ! दुर्दैवमापतितम्। हा हा ! प्रिये ! जानकि ! एतदेव दर्शनम्। धिक् धिक् ! ! पापार्जितं धनम्।

( ७ ) - हाइफेन ( hyphen ) चिह्नमेतत् संयोजकम्। समस्यमानपदानां परस्परसम्बन्धस्थापकम्। यथा—

(क) सान्ध्य-समीरण-कम्पित-जल-नील-नलिनीव चञ्चल-लोचना इत एवाभिवर्त्तते। प्रभात-वाताहतकम्पिताकृतिः कुमुद्वती-रेणु-विसङ्ग-विग्रहम्।

(ख) मुद्राक्षरसन्निवेशकाः (Compositers) यदि सन्निविष्टपङ्क्त्यवशेषे शब्दगतमक्षरं पूर्णत्वमानेतुं न प्रभवन्ति; तर्हि क्षुद्रायतनयानया सरलरेखया पूर्व्ववर्त्तिपदांशं परवर्त्तिशब्दसमूहेन समं संयोजक इत्यभिज्ञानार्थं निवेश्य प्रतिबोधयन्ति। यथा पङ्क्त्यवशेषे अक्षरम् "उप" परवर्त्तिपङ्क्त्यग्रे "कारकः" इत्यादिस्थले पूर्व्वपङ्क्त्यवशेषे चिह्नमिदमर्पयन्ति। तेन बोद्धव्यं "उपकारकः" इति।

(८) " "—उद्धरणचिह्नम् ( Quotation mark ) इदं तावदन्यदीयवाक्योद्धरणे व्यवहार्य्यम्। यथा—

(क) तेनाभिहितं "तत्र दिवसेऽपि शृगाला विचरन्ति" इति। "नानृतात् पातकं महत्" इति साधूक्तात् कदापि मिथ्या न भाषेत। तस्य तातः आदिशति—"तिनकड़ि, डाकगृहात् टिकेट् द्वयं, षट् पोष्टकार्ड च गृहीत्वा तूर्णमागच्छ"। "फेउ फेउ" रवेण शब्दायन्ते सारमेयाः।

(९) '—लोपचिह्नम् ( Mark of ellipsis ) शब्दान्तर्गताक्षरलोपार्थमेतत् व्यवहरन्ति। नितरां संस्कृतभाषासु तदसम्भवात् वङ्गादिभाषानिर्म्मितपद्यादौ उदाहरणं द्रष्टव्यम्।

(१०) — ड्याश् ( dash ) भग्नचिह्नम्, इदं तावत्

आरब्धकथान्ते अन्यदीयकथाप्रसङ्गे, तथा यथेति अव्ययान्ते प्रयोज्यम्। यथा—

( क ) सुचिरं नगरवासेन शरीरं तव याद्दशमस्वस्थं वर्त्तते, तेन मन्ये विदेशभ्रमणं—दीर्घदीनं ग्रामावस्थितिश्व—अत्यतिशयं ते शुभं भविष्यति।

( ख ) महावंशोत्पन्नोऽयं सैनिकः;—इंरेजास्नौहिणीषु तथा जर्म्मणवाहिणीषु च अस्य प्रभूता प्रतिपत्तिरवलोक्यते।

( ग ) यथा—वीरचरिते। यथा—रामायणे। तथा—मनौ। तथा हि—याज्ञवल्क्यः।

(११) ( )—प्यारान्थिस् ( Paranthisis ) वा [ ] ब्राकेट् ( Braces ) बन्धनी। चिह्नमेतत् वाक्यान्तर्गतस्य कस्यापि पदस्य, उत वाक्यांशस्य वा व्याख्यायां तथा अप्रासङ्गिककथावतारणादिषु च व्यवहरणीयम्। यथा—

( क ) उज्जयिनीपतेः ( विक्रमादित्यस्य ) नवरत्नमण्डिता ( कालिदासधन्वन्तरिप्रमुखैर्नवकविप्रधानैः परिशोभिता ) परिषदासीत्। केन तस्याः ( मालवदुहितुः ) प्रतिकृतिः रचिता ?

( ख ) अथ [ अनन्तरम् ] तस्य [ शशकस्य ] वारः [ समयः ] समायातः [ उपस्थितः ] इत्यादि।

( १२ ) ......; * * * *; इमे चिह्ना अन्यदीयवाक्यग्रहणे तद्वाक्यान्तर्गताश्लीलांशस्य किमु अप्रयोजनीयतया कस्यचिदंशस्य वर्ज्जनाय व्यवहरणीयेति। यथा—

(१) सुरामत्तः सः सुण्डिकालयात्......(रूपजीविनो)-गृहम् अच्छत्। (२) भयविक्लवः*** शेषेतं दृष्ट्वा प्रकृतिस्थोऽस्मि। (३) आः! कः?——एषोऽहम्। इति।

दोषः—

"काव्यापकर्षका दोषाः" इत्युक्तः सर्व्वतः एव दोषः परिहर्त्तव्यः काव्यस्य। उक्तञ्च प्राक् "तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन। स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्।" इति। अतएव काव्यदोषो न चापेक्षणीयः, न वा मर्षणयोग्यश्च। ननु तर्हि क एव सः? यं विज्ञाय परिहर्त्तुं शक्यः इत्याकाङ्क्षायामाह—

दुःश्रवानुचितार्थत्वे ग्राम्यत्वं निहतार्थता।
क्लिष्टत्वमप्रतीतत्त्वं विरुद्धमतिकारिता॥
अविमृष्टविधेयांशभावः सन्दिग्धता तथा।
पदवाक्याश्रिता दोषाः * पदांशेऽपीरषु केचन॥

क्रमेणास्योदाहरणं ज्ञातव्यम्। तत्रादौ दुःश्रवत्वं परुषवर्णतया श्रुतिदुःखावहत्वं, तच्च पदगतं यथा—

"अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः।
आलिङ्गितः स तन्वङ्ग्या कार्त्तार्थ्यं लभते कदा॥" (क)

---

* एकमात्रस्य पदस्य दुष्टत्वं पददोषः, एकाधिकानां पदानां दोषयुक्तं वाक्यदोषः, पदानां परिवर्त्तनेऽपि दोषमातादवस्थ्यं ऽर्थदोष इति।

(क) स महदुडिम्भो युवा अनङ्गमङ्गलगृहापाङ्गाः कन्दर्पोत्सवमन्दिरायमाणाः·

अत्र कार्त्तार्थ्यमिति श्रुतिकटु। वाक्यगतं यथा भट्टौ—

"सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनताप्सीत् सममंस्त बन्धून्।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च॥"(ख)

इति, पदांशे यथा कुमारे—

"तदगच्छ सिद्धै कुरु देवकार्य्यम्" इत्यत्र 'द्धै' इति पदांशं दुष्टम्।

अनुचितार्थत्वम् अयतार्थत्वं वा पदगत यथा—

"तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिष्यते च या।
प्रयान्ति तामाशु गतिं यशस्विनो-
रणाश्वमेधे पशुतामुपागताः॥" (ग) इति

---

कटाक्षास्तेषां या भङ्गयः प्रकारास्तामां तरङ्गितः तरङ्गवदाचरणैः उत्तरोत्तरविवृद्धरूपः उपलक्षितया। महितया वा, तरवङ्ग्या कृशाङ्ग्या आलिङ्गितः सन् कार्त्तार्थं कृतार्थतां कदा लभते लप्स्यते प्राप्स्यतीतार्थः।

(ख) स राजा दशरथः वेदान् अध्यैष्ट अधीतवान् त्रिदशान् तिस्रो दशा बाल्य-यौवनप्रौढा अवस्था येषां तान् देवानित्यर्थः। अयष्ट यज्ञेनार्च्चितवान्, पितॄन् अताप्सीत् श्राद्धतर्पणादिभिः प्रीणितवान्, बन्धून् पितृव्याभ्रात्रादीन् सममंस्त सम्यक् मानीतवान्, षण्णां कामक्रोधादीनां वर्गः समूहः तं व्यजेष्ट विशेषेण जितवान्, नीतौ नीतिशास्त्रे अरंस्त रतवान्। किञ्चेति चार्थः, अरीन् शत्रून् समूलघातं मूलसूत्रसहितं यथातथेत्यर्थः, न्यवधीत् निहतवान्।

(ग) तपस्विभिश्चान्द्रायणादिकृच्छ्रव्रतपरायणैः जनैः या गतिः सुचिरेण सुदीर्घ-कालेन लभ्यते प्राप्यते सत्रिभिः याज्ञिकैः जनैः प्रयत्नतः अतिप्रयासेनेत्यर्थः, या गतिः च इष्यते वाञ्छ्यते, रणाश्वमेधे संग्रामरूपाश्वमेधयज्ञे पशुताम् वध्यच्छागलत्वम् उपागताः निहता

अत्र पशुपदं कातर्य्यमभिव्यनक्तीत्यनुचितार्थत्वं, वाक्यगतन्तद्यम्।

ग्राम्यत्वं * केवलं लोके एव स्थितत्वम्। पदगतं यथा—

"किं रुषा शोणितस्पर्द्धी गल्लस्ते स्पन्दते भृशम्" ( घ )

वाक्यगतं यथा—

"ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः।
करोति खादनं पानं सदैव तु यथा तथा॥" ( ङ )

प्रथमे गल्लशब्दः, द्वितीये गल्लादयाः शब्दा ग्राम्याः।

निहतार्थत्वम् उभयार्थकस्य शब्दस्य अप्रसिद्धेऽर्थे प्रयोगः, यथा—

"नवनीरदकान्तिनाम्बुकेलीप्रहतानां व्रजसुन्दरीकुचानाम्।
मदपुञ्जभरेण मोदमानं यमुनाशम्बरमम्बरं व्यतानीत्॥"

इति भावः, अतएव यशस्विनः कीर्त्तिमान् वीरा इति शेषः, तां गतिं स्वर्गगमनरूपामिति भावः, आशु शीघ्रं प्रयान्ति गच्छन्ति। अत्र कातर्य्यं दैन्यमित्यर्थः, पशवो हि पराधीनत्वात् सर्व्वदा दीना एव, तादृशवीराणान्तु स्वाधीनवृत्तित्वात् पशुत्वकीर्त्तनमतीवायुक्तमिति तात्पर्य्यम्।

* काव्येषु अलौकिकचमत्कारिपदप्रयोग एव युक्तः, न तु सामान्यजनप्रयोज्य पदप्रयोगः, तथात्वे काव्यस्य चमत्कारित्वं नश्यतीति भावः। ग्राम्यः ग्रामीजनः सामान्यजन इत्यर्थः, तस्य भावः ग्राम्यत्वं येन प्रयोगेण ग्राम्यत्वं प्रतीयते तादृशप्रयोगो ग्राम्यः, स तु सहृदयानामप्रीतिकरः इत्यस्य दोषत्वमिति सतां हृदयम्।

( घ ) रुषा कोपेन शोणितस्पर्द्धी रक्तनिभः ते तव गल्लः कपोलदेशः इत्यर्थः, भृशम् अतिशयं स्पन्दते स्फुरति। गल्लशब्दोऽत्र ग्राम्यः।

( ङ ) ताम्बूलभृतगल्लः ताम्बूलपूर्णवदनम् इत्यर्थः, अयं मानुषः भल्लं सुष्ठु इत्यर्थः, जल्पति कथयति किञ्चिति त्वयः, यथा तथा सदैव खादनं भोजनं पानञ्च करोति।

शम्बरशब्दो दैत्यविशेषे प्रसिद्धः, इह तु जले निहतार्थः। यमुनाशम्बरं यमुनाजलम् अम्बरम् आकाशं व्याप्तम्।

क्लिष्टत्वमर्थप्रतीतेर्व्यवहितत्वं पदगतं यथा—

"ताः क्वाप्यहो घनघटा विलयं प्रयाता ज्योत्स्नाश्चिराय विलासशीलाः, चीरोदजावसति जन्मभुवः प्रसन्ना अद्यानुरञ्जयति भास्वति दक्षिणाशम्॥"

अत्र चीरोदजा लक्ष्मीस्तस्याः वसतिः पद्मं तस्य जन्मभुवो जलानीत्यतिकष्टेन बोधः। वाक्यगतं यथा—

"धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः।
रज्यत्यपूर्व्वबन्धव्युत्पत्तेर्मानसं शोभाम्॥" (च)

अत्र धम्मिल्लस्य केशबन्धस्येत्यर्थः, शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धः क्लिष्टः।

अप्रतीतत्वमेकदेशशास्त्रान्तरमात्रप्रसिद्धत्वमर्थः। यथा—

"तीर्थेन परिधौताघो योगेन दलिताशयः।
तपसा क्षपितक्लेशो मुक्तप्रासन्नो महाशयः॥" इति

योगेन चित्तवृत्तिनिरोधेन दलितो नाशितः आशयो मिथ्याज्ञानजन्यः संस्कारविशेषो येन सः। आशयशब्दो वासनार्थो योगशास्त्रे एव प्रसिद्धः इति। विरुद्धमतिकारिता यथा—

---

(च) अपूर्व्वाबन्धे व्युत्पत्तिः ज्ञानं नैपुण्यमित्यर्थः, यस्याः तथाभूतायाः कुरङ्गशावाक्ष्याः मृगलोचनायाः धम्मिल्लस्य संयतकेशकलापस्य शोभां सौन्दर्य्यं प्रेक्ष्य कस्य मानसं मनः निकामम् अत्यर्थं न रज्यति न रक्तं भवति सर्व्वस्यैव रज्यतीत्यर्थः।

"उदारचरितो धीमान् सर्व्वलोकप्रियङ्करः ।
अकार्य्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥" (क) इति

अत्र कार्य्यं विना मित्रमिति विवक्षितम्, अकार्य्येषु मित्रमिति विरुद्धा प्रतीतिः ।

अविमृष्टः प्राधान्येनानिर्द्दिष्टो विधेयांशो यत्र तस्य भावः अविमृष्टविधेयांशभावः, विधेयाविमर्शो वा कथ्यते, यथा कुमारे—

"वपुर्व्विरूपाक्षमलक्ष्यजन्मता
　　दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि मृग्यते
　　तदस्ति किं व्यस्तमपि त्रिलोचने ॥" (ख)

अत्र अलक्ष्यं विधेयं तस्य च समासे गुणीभावादप्राधान्येन निर्द्देशः । यथा वा—

"अमुक्ता भवता नाथ, मुहूर्त्तमपि सा पुरा ।"

अत्र नञो विधेयत्वमेवोचितम्, यथा विक्रमोर्व्वशीये—

"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूरमनसशरारा ाकृष्टं न तस्य ।

(क) असौ प्रसिद्धः एकः एवेत्यर्थः, उदारं सुमहत् चरितं यस्य तादृशः, धीमान् प्रज्ञावान् सर्व्वलोकानां साधारणानामित्यर्थः, प्रियङ्करः प्रियकारी अकार्य्यमित्रम् अहेतुकः सुहृत्, तस्य सम्बन्धे इत्यर्थः, किं वर्णयामहे, वर्णनं कुर्म्मः, न किमपीति भावः ।

(ख) हे बालमृगाक्षि, मृगशावकलोचने, वपुः शरीरं हरस्येति शेषः, विरूपाणि विकृतरूपाणि अक्षीणि नेत्राणि यस्य तत् विरूपाक्षम् कुत्सितमिति भावः । अलक्ष्यम् अज्ञातं जन्म यस्य तस्य भावस्तत्ता, कुलमपि न ज्ञायते इत्यर्थः । तथा

अयमपि पटुर्धारासारो न बाणपरम्परा

कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्व्वशी ॥" (झ)

वाक्यगतो यथा महानाटके—

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः

सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।

धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा

स्वर्गग्रामटीकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥" (ञ)

"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्" इत्यनुशासनात् उद्देश्यस्य प्रथममनन्तरं विधेयस्य निर्द्देशो युक्तः, अत्रायमेव 'न्यक्कारः' इति वक्तुमुचितम् । उद्देश्यमुक्त्वैव विधेयाभिधानस्यौ-

---

दिगम्बरत्वेन नग्नत्वेन वसु धनं निवेदितं नास्तीति ज्ञापितमित्यर्थः । यदि वित्तं भवति तदा कथं दिगम्बरो भवति, अतो ज्ञेयो निधनोऽयमिति । अतो वरेषु उपयत्नेषु यत् रूपादिकमित्यर्थः । मृग्यते अन्विष्यते त्रिलोचने महेशे व्यस्तम् अपि एकमपि ममस्तं मा भूदिति भावः, अस्ति किम् ? नास्ति एवेत्यर्थः ।

( झ ) अयं नवजलधरः नूतनमेघः सन्नद्धः समुद्यतः दृप्तगामी निशाचरश्चेति स न, इदं दूराकृष्टं दूरात् आकृष्टं सुरधनुः इन्द्रायुधं तस्य निशाचरस्य शरासनं कार्म्मुकं न, अयमपि पटुः प्रबलः धारासारः वृष्टिधारापातः न, बाणपरम्परा शरवर्षणधारा कनकस्य निकषः कषणरेखा तद्वत् स्निग्धा स्फुरन्ती विद्युत् इयमिति शेषः । मम प्रिया उर्व्वशी न ।

( ञ ) मे मम अरयः विद्विष इति यत् अयमेव न्यक्कारः निकारः अवमानन-मित्यर्थः, तत्रापि अरिष्वपि, असौ अरिः राम इति भावः, तापसः तपस्वी क्षुद्र इति भावः, सोऽपि तापसोऽपि अत्रैव लङ्कायामेव आगतोऽपि इति शेषः, राक्षसकुलं निहन्ति नाशयति अहो आश्चर्य्यम् रावणो जीवति एतावति निकारे रावणस्य जीवनमाश्चर्य्यमित्यर्थः,

चित्यात्। तत्र च पदरचना विपरीता कृतेति वाक्यगतोऽयं दोष.। न खलु न्यक्कारे इदम्पदार्थत्वं विधीयते, अपि त्विदम्पदार्थ एव न्यक्कारत्वमिति, एवं किमेभिरित्यनेन भुजानां वृथात्वं विधीयते। न च वृथोच्छूनानां भुजानां वृथात्वं विधातुमुचितं किन्तूच्छूनानामेव। एवञ्च वृथात्वविशेषितमुच्छूनमत्र नानुवाद्यं किन्तूच्छूनत्वमात्रम्। रचना चात्र पदद्वयस्य विपरीतेति वाक्यदोषः। यथा वा—

"कान्तिमैकान्तिकीं बिभ्रत् कुमुदिन्याः शशी यथा।
आनन्दयति ते नेत्रे योऽसौ सुभ्रु समागतः॥" (ट)

अत्र 'असौ' इत्यत्र विधेयत्वमेव भवितुं युक्तं, तच्च यच्छब्दनिकटस्थतया अनुवाद्यत्वप्रतीतिकृत्। सन्दिग्धत्वं यथा काव्यप्रकाशे—

"आलिङ्गितस्तत्रभवान् सम्पराये जयश्रिया।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु॥" (ठ)

---

शक्रजीतम् इन्द्रजितं धिक् धिक् निन्दामीत्यर्थः, इन्द्रविजयिनोऽपि तापसात् पराजयो लब्ध इति भावः। प्रबोधितवता जागरितेन कुम्भकर्णेन वा किम्? न किमपि कार्य्यम् साधितमित्यर्थः, तथा स्वर्ग एव ग्रामटिका क्षुद्रग्रामः तस्या विलुण्ठनेन वृथा उच्छूनाः उद्धताः तैः एभिः मदीयैरित्यर्थः, भुजैः बाहुभिः विंशतिसंख्यकैरिति भावः, किम्? न किमपि प्रयोजनमित्यर्थः।

(ट) हे सुभ्रु, शोभनभ्रुयुगलशालिनि, शशी चन्द्रो यथा कुमुदिन्याः ऐकान्तिकीम् अतिशयां कान्तिं शोभां बिभ्रत् धारयन् तथा ते तव नेत्रे लोचने यः समागतः समुपस्थितः असौ आनन्दयति प्रीतिमुत्पादयति।

(ठ) सम्पराये युद्धे जयश्रिया आलिङ्गितस्तत्रभवान् पूज्यः त्वं वन्द्यां वन्दनीयां

अत्र 'बन्द्याम्' इति किं बन्दीभूतायाम् उत बन्दनीयामिति सन्देहः। व-बयोरभेदात् बन्द्यां नमस्याम् आशीःपरम्परां कर्णं कृत्वेति संबन्धः, अथवाशीःपरम्परां कर्णं कृत्वा बन्द्यां बन्दीभूतायां नार्य्यां कृपां कुर्व्विति संबन्धः।

वाक्यमात्रगतान् दोषानाह—

**वर्णानां प्रतिकूलत्वं सन्धौ विश्लेषकष्टते।**
**अधिकन्यूनकथितपदताऽक्रमता तथा॥**
**भग्नप्रक्रमता ख्यातिहतता सङ्करोऽपि च।**
**गर्भितत्वं तथा काव्ये दोषाः स्युर्व्वाक्यमात्रगाः॥**

वर्णानां रसानुगुणत्वं वक्ष्यते तद्वैपरीत्यं प्रतिकूलत्वम्। यथा वेण्याम्—

"कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्म्मर्य्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्॥ (ड)

---

नमस्यामित्यर्थः, आशीःपरम्पराम् आशीर्व्वादपङ्क्तिम् अर्थाज्जितशत्रुप्रयुक्तामित्यर्थः, कर्णं कृत्वा आकर्ण्य कृपां कुरु विधेहीत्यर्थः। आलिङ्गित इत्यनेनायाश्लत्वं सूचयति।

(ड) यः निर्म्मर्य्यादैः, मर्य्यादा धर्म्मव्यवस्था तद्रहितैरित्यर्थः। उदायुधैः अस्त्रधारिभिः मनुजपशुभिः पशुरूपैर्म्मनुष्यैर्भवद्भिः इदं गुरुपातकं महापातकम्

अत्र हि गाढबन्धत्वं दीर्घसमासत्वञ्च उचितम्। किन्तु तद्वैपरीत्यादेव दोषः।

सन्धौ विश्लेषो द्विविधः, व्याकरणलक्षणानुसारेण कृतः, अनुशासनमुल्लङ्घ्य स्वेच्छया कृतश्च। पूर्व्वः असकृदेव दोषः, द्वितीयस्तु सकृदपि। आद्योदाहरणं यथाह विश्वनाथः—

"मुखं पूर्णः शरच्चन्द्रो मृणालञ्च भुजद्वयम्।
दलिते उत्पले एते अक्षिणी अमलाङ्गि ते॥" (ढ)

द्वितीयार्द्धे एवंविधसन्धिविश्लेषस्य असकृत् प्रयोग एव दोषः। अनुशासनमुल्लङ्घ्य वृत्तभङ्गभयमात्रेण सन्धिविश्लेषस्य तु सकृदपि यथा चाह स्म स एव—

"राजते तारकाराजौ रत्नराशिरिवाम्बरे।
वासवाशामुखे भाति इन्दुश्चन्दनविन्दुवत्॥" (ण)

सन्धौ यष्टता श्रुतिदुःखावहत्वम् यथा—

"उर्व्व्यसावत्र तर्व्वालो मर्व्वन्ते चार्व्ववस्थितिः।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक्॥" (त)

आचार्य्यत्रिनाशकपर्य्यन्तमिति तात्पर्य्यम्। कृतम् अनुमतं वा दृष्टम् अयस् अहम् नरकरिपुणा कर्णेन माद्रेण नभीश्रकिरीटिना कर्णभीमाज्जं नसहितानामित्यर्थः, तेषां भवताम् अमृङ्वसेदोमांसैः रक्तवसामांसैः दिशां बलिं पूजां करोमि, तान् नाशयामीति भावः।

(ढ) हे अमलाङ्गि, ते तव एते अक्षिणी चक्षुषी दलिते प्रस्फुटिते उत्पले नीलोत्पलयुगलस्वरूपे इत्यर्थः। स्पष्टमन्यत्।

(ण) वासवाशामुखे पूर्व्वदिशि उपरिभागे इन्दुश्चन्द्रः चन्दनविन्दुवत् भाति, इदानीमपि पादपान्तरितापरांशतया कियदंशमात्र प्रकाशादिति भावः। स्पष्टोऽपरांशः।

(त) अत्र मर्व्वन्ते मरोरन्ते असौ उर्व्वी मही चार्व्ववस्थितिः सुष्ठु स्थिता,

अधिकपदता यथा—

"विरिञ्चि-दामोदर-रुद्ररूपैः सृष्टिस्थितिप्रत्यवहारहेतुम् ।
चिरन्तनं योगिगणैकलक्ष्यं सदाशिवं नौमि पिनाकपाणिम् ॥"

अत्र श्लोके 'पिनाकपाणिम्' इति विशेषणमधिकम् । कुमारे च यत्—

"तव प्रसादात् कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा ।
कुर्य्यां हरस्यापि पिनाकपाणे-
र्धैर्य्यच्युतिं के मम धन्विनोऽन्ये ॥" ( थ )

इत्यत्र च सातिशयदुष्प्रधर्षत्वसूचनाय 'पिनाकपाणेः' इति विशेषणपदं युक्तमेव ।

न्यूनपदता यथा वेण्याम्—

"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदे खिन्ने भजति नाद्यापि कुरुषु ॥" ( द )

---

तन्वाङ्गी तरुण्यः श्रेणी अत्र ऋजु सरलं यथा तथा गन्तुं मध्ये जातुं न शक्यते इत्यर्थः, तत् तस्मात् मनाक् ईषत् शिरः मस्तकं नमय नतं कुरु ।

( थ ) तव प्रसादात् अनुग्रहात् कुसुमायुधोऽपि अतिदुर्व्वलास्त्रोऽपि अहम् एकं मधुं वसन्तमिव सहायं लब्ध्वा पिनाकपाणौ यस्य स पिनाकपाणिः तस्य हरस्यापि हरः पिनाकी चेत्प्रतिदारुणः इति भावः, धैर्य्यच्युतिं धैर्य्यहानिं कुर्य्याम् शक्नुयामित्यर्थः, अन्ये धन्विनः धनुर्भृतः मम के ? न कोऽपीत्यर्थः ।

( द ) नृपसदसि राजसभायां तथाभूतां केशाम्बरयोराकृष्टामिति भावः ।

अत्र 'अस्माभिः' इति 'खिन्ने' इत्यस्मात् पूर्व्वं 'इत्थम्' इति च पदं न्यूनम्।

कथितपदत्वं यथा रामायणे—

"प्रियं चेद् भरतस्यैतद्रामप्रव्राजनं भवेत्।
मास्म मे भरतः कार्षीत् प्रेतकृत्यं कदाचन॥" (ध)

अत्र 'भरतः' इति पदं पुनः कथितं सर्व्वनाम्नैव अस्य परामर्शो युक्तः—'मास्म मेऽसौ सुतः' इत्यदुष्टत्वम्।

अक्रमत्वम्, अविद्यमानः क्रमः पदस्थितिक्रमो यत्र तत् अक्रमं तस्य भावः अक्रमत्वम् इति। यथा कुमारे—

"इयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया पिनाकिनः।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी॥" (न)

अत्र 'त्वम्' इति पदस्यानन्तरं चकारो युक्त एव।

पाञ्चालतनयां द्रौपदीं वने व्याधैः सार्द्धं वल्कलधरैः अद्भिः सचिरं दीर्घकालमुषितं स्थितं तथा विराटस्य आवासे सदने अनुचितः यः आरम्भः कर्म्म सूपकारत्वादिकमिति भावः। तत्र निभृतं समासक्तं यथा तथा स्थितं दृष्ट्वा गुरुः आर्य्यः युधिष्ठिर इति यावत्, खिन्न दुःखिते मयि खेदं क्षोभं भजति अद्यापि कुरुषु धार्त्तराष्ट्रकुलेष्वित्यर्थः, न खेदं भजतीत्यर्थः, कुरवस्तादृशनिकारकारिणोऽपि न राज्ञः खेदं जनयन्ति निकारक्षुभितं मां दृष्ट्वा खेदं करोति राजा इत्यहो महच्चित्रमिति काक्वा व्यज्यते।

(ध) चेत् यदि एतत् रामस्य प्रव्रजनमरण्यगमनं भरतस्य प्रियं भवेत् तदा भवतः कदाचन मे प्रेतकृतामौर्द्ध्वदैहिककार्य्यं मास्म कार्षीत् न करोतु।

(न) कलावतः शशिनः सा प्रसिद्धा कान्तिमती लावण्ययुक्ता कला रेखा अस्य

भग्नक्रमता—भग्नः प्रक्रमः उद्देशानुगुणः प्रस्तावो यस्मिन् तद्भग्नप्रक्रमं तस्य भावः भग्नक्रमता। यथा किराते—

"यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसंख्यामतिवर्त्तितुं वा।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः॥" ( प )

अत्र 'सुखलिप्सया' इत्यत्र 'सुखसमीहितुं वा' इति तुमन्तप्रयोग एव सर्व्वत्र युक्तः।

ख्यातिहतता प्रसिद्धित्यागः, स चानेकधा वर्त्तते। तेषां दिङ्मात्रमत्र प्रदर्श्यते। विस्तरशो ज्ञातुमिच्छुभिर्दर्पणादावनुसन्धानीयः, नात्रोच्यतेऽतिविस्तारभयात्। यच्च तत्—

"रवो वारिमुचां घोरो भेरीनामारवस्तथा।
पटहानां ध्वनिः कर्णौ पीड़यन्ति समन्ततः॥"

गर्ज्जनं धाराधराणामेव न रवः, एवं पटहानाम् आरवः प्रसिद्धः नतु भेरीणाम्, अपि ध्वनिर्मृदङ्गादीनां न पटहानाम्। अपि च—

"सरोजिनीकुमुद्वत्यौ निरीक्षेते परस्परम्।
कियत्यपि तमो हन्ति कृष्णपक्षेऽपि कौमुदी॥"

रात्रौ सरोजिन्या दिवसे कुमुद्वत्याश्च विकासः, कृष्णपक्षे कौमुदी च कविसमयेन विरुध्यते।

---

लोकस्य जगतः नेत्रकौमुदी नयनाभिराम इत्यर्थः। त्वञ्च एतत् द्वयं संप्रति पिनाकिनः हरस्य समागमप्रार्थनया सङ्गाभिलाषेण शोचनीयतां दीनत्वं गतम्।

( प ) यशः कीर्त्तिम् अधिगन्तुं लब्धुं, सुखस्य लिप्सया लाभेच्छया वा मनुष्य-

वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः सङ्करः यथा—

"किमिति न पश्यसि कोपं पादगतं बहुगुणमाद्रियस्वैनम् ।
ननु मुञ्च हृदयनाथं सदयं मनसस्तमोरूपम् ॥" इति

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि, इमं सदयमाद्रियस्व मनसस्तमोरूपं कोपं मुञ्च इत्यन्वयः। एकवाक्यगतत्वे तु क्लिष्टत्वमित्यस्माद्भेदः।

वाक्यान्तरे वाक्यान्तरप्रवेशो गर्भितत्वम्। यथा—

"परापकारनिरतैर्दुर्ज्जनैः सह सङ्गतिः।
कर्त्तव्यः साधुसंसर्गो न विधेया कदाचन ॥"

"चन्द्रं मुञ्च कुरङ्गाक्षि पश्य मानं नभोऽङ्गने"

अत्र प्रथमश्लोके तृतीयचरणवाक्यं वाक्यान्तरमध्ये प्रविष्टम्। द्वितीयेऽपि च मानं मुञ्च, चन्द्रं पश्येति कथितदोषस्य सङ्गतिः।

क्रमप्राप्तानर्थदोषानाह—

**दुष्क्रमग्राम्यकष्टत्वं व्याहतत्वमहेतुता।**
**अनवीकृतता पौनरुक्त्यं ख्यातिविरुद्धता।**
**अनुवादो विधेश्चैवमर्थदोषाः प्रकीर्त्तिताः ॥**

दुष्क्रमता—दुर्दुष्टो विरुद्ध इति यावत्, क्रमो वचनक्रमो यस्मिन् स दुष्क्रमः, तस्य भावोदुष्क्रमता। यथा—

---

संख्यां मनुष्यगणानाम् अतिवर्त्तितुम् अतिक्रमितुम् अमानुषीं क्रियां कर्त्तुमिति यावत्, वा निरुत्सुकानां निरुद्यमानाम् अभियोगभाजाम् उद्योगिनां निरुद्यमेनोद्योगमातन्वतामित्यर्थः। सिद्धिः समुत्सुकेन समुत्कण्ठिता कामिनी इव अङ्कम् उत्सङ्गम् उपैति आगच्छति।

"भूपालरत्न निर्दैन्यप्रदानप्रथितोत्सव ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥"

अत्र मातङ्गस्य प्रथमं याचनमुचितम् । यथा वा सचापं वाणमादत्ते । वर्णा वैश्यादयो मताः । विंशतिस्तु शताधिका। एवं वसन्तादिवर्णने प्रथमं प्रवालोद्गमस्य, ततः कुसुमोत्पत्ते-रनन्तरं पुष्पेषु शिलीमुखानामापतनमिति यथाक्रममेवैतेषा-माविष्करणमुचितम् । विशिष्टकारणं विना ततोऽन्यथा वर्णने दुष्क्रमता दोषः ।

ग्राम्यत्वं यथा—

"ताम्रभृङ्गारतुल्योऽयमर्को मज्जति वारिधौ ।" ( फ )

कष्टत्वम्—अर्थप्रतीतेर्व्यवहितत्वम् । यथा—

"सदा मध्ये यासामियममृतनिष्यन्दसरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥" (ब)

अत्र यासां कविरुचीनां मध्ये सुकुमारचित्रमध्यमात्मक-त्रिमार्गा भारती चमत्कारं वहति, ता गम्भीरकाव्यपरिचिताः

( फ ) ताम्रभृङ्गारेण रक्तवर्ण जलपात्रविशेषेण तुल्यः अर्कः सूर्यः वारिधौ समुद्रे निमज्जति अस्ताचलं गच्छतीत्यर्थः ।

( ब ) अमृतवत् निष्यन्दः विकाश इति यावत्, सरसा रसयुक्ता बहुमार्गा नाना रीतिसंघटिता उद्दामा प्रौढा इयं सरस्वती वाक् यासां रुचीनां मध्ये सदा परिमलं सौरभं वहति रुचीनां स्वदते इत्यर्थः, अन्यत्र बहुमार्गा त्रिपथगेत्यर्थः, उद्दामा उत्कटवेगा

कथमितरकाव्यवत् प्रसन्ना भवन्तु इत्येकोऽर्थः। यासामादित्य-प्रभानां मध्ये त्रिपथगा वर्त्तति, ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति द्वितीयोऽर्थः। अर्थद्वयमपि नितरां दुर्ब्बोधम्। शब्दानां परिवर्त्तनेऽपि कष्टतायास्तादवस्थ्यादयमर्थदोषः।

व्याहतत्वम्—कस्यचित् प्रागुत्कर्षमपकर्षं वाभिधाय पश्चात् तदन्यथाप्रतिपादनं व्याहतत्वं नाम। यथा—

"जहि शत्रुबलं कृत्स्नं जय विश्वम्भरामिमाम्।
तव नैकोऽपि विद्वेष्टा सर्व्वभूतानुकम्पिनः॥ (भ)
हरन्ति हृदयं यूनां न नवेन्दुकलादयः।
वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका॥" (म)

---

अमृतनिष्यन्दिनी सरस्वती मन्दाकिनीत्यर्थः, यासां सौरीणां रुचीनां किरणानां मध्ये सदा परिमलं देवाङ्गनानां विमर्द्दजनितगन्धं वहति, ता एता महतां स्फुरितेन सहजबोधेनेति भावः। मधुरा मधुरास्वादवत्यः रुचयः अभिकाङ्क्षा महाकाव्यं दुर्ब्बोधकाव्यं व्योमेव आकाशमिव तस्मिन् घनपरिचिताः अतिपरिचिता अपि रत्नाध्याहार्य्यः, केन कथं प्रसादं प्रसन्नतां यान्तु, न कथमपि प्रसन्ना भवन्तीत्यर्थः, अथवा ता एता महतां भास्वतामित्यर्थः, स्फुरितेन विकासेन मधुरा मनोहारिण्यः रुचयः प्रभाः महाकाव्यमिव व्योम तस्मिन् घनपरिचिताः मेघाच्छादिता इति यावत्, केन कथं प्रसादं यान्तु न कथमपि प्रसन्ना भवन्तीत्यर्थः।

(भ) कृत्स्नं समस्तं शत्रुबलम् अरातिसैन्यं जहि मारय त्वमिति शेषः। इमां विश्वम्भरां धरित्रीं जय विजयं कुरु। सर्व्वभूतानुकम्पिनः सकलजीवहितैषिणः तव एकोऽपि किं पुनर्ब्बहवः विद्वेष्टा अरिः न अस्तीति शेषः।

(म) यैः युवभिः लोकानां लोचनचन्द्रिका नयनानन्दिनीति यावत्, इयं तन्वी कृशाङ्गी क्षीणायतनेति यावत्, वीक्ष्यते समवलोक्यते नवेन्दुकलादयः अभिनवचन्द्रकलाप्रभृतयः केषां यूनां हृदयं न हरन्ति नाकर्षन्ति मोहयन्तीत्यर्थः।

अत्र पूर्व्वापरविरोधात् कथितदोषः। येषामिन्दुकला-नानन्दहेतुस्तेषामेवानन्दाय तन्वग्रा चन्द्रिकात्वारोपः।

अहेतुता-हेतोरवचनं निर्हेतुतेर्थः। यत्र वक्तव्योऽर्थोहेतुमपेक्षते तत्र तस्यानुक्तौ निर्हेतुत्वम्। यथा वेण्याम्—

"गृहीतं येनासीः परपरिभवान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्
विमोक्ष्ये शस्त्र त्वामहमपि ततः स्वस्ति भवते॥" (य)

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्तः इति निर्हेतुत्वम्।

अनवीकृतत्वम्—पूर्व्वमुक्तोऽर्थः पुनरभिधानीयश्चेत्तथाभिधानीयो यथा काचिद्विच्छित्तिरुपसम्पद्यते। तामन्तरेण तदभिधानेऽनवीकृतत्वम्। यथा—

"प्राप्ताः श्रियः सकलकामदुघास्ततः किम्?
दत्तं पदं शिरसि विद्विषतां ततः किम्?।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किम्?
कल्पस्थितं तनुभृतां तनुभिस्ततः किम्?॥" (र)

(य) हे शस्त्र, येन मत्पित्रेति शेषः, त्वं परपरिभवात् शत्रुभिः परिभवभयादित्यर्थः, नोचितम् अनुचितग्रहणमपीति यावत्, ब्राह्मणस्य शस्त्रग्रहणानुचितत्वादिति भावः। गृहीतम् अवलम्बितम् आसीः यस्य, मत्पितुः प्रभावात् कश्चिदपि लोक इति शेषः, तव न विषयः अपि सर्व्व एव जनस्तवगोचरीभूत इत्यर्थः, द्रोणस्य सर्व्वजयित्वादिति भावः। तेन मम पित्रा सुतशोकात् न तु भयात् त्वं परित्यक्तम् असि अहमपि त्वां विमोक्ष्ये त्यक्ष्यामि, ततः अतः परमित्यर्थः, भवते तुभ्यं स्वस्ति शुभं भूयादिति शेषः।

(र) सकलकामदुघाः सर्व्वकामनाप्रसविन्यः श्रियः सम्पदः प्राप्ता लोकैरिति

अत्र 'ततः किम्' इत्यनवीकृतम्। ततः किमित्यत्र किं तस्मादिति पदपरिवर्त्तनेऽपि दोषस्य तदवस्थत्वादर्थदोषोऽयम्।

पुनरुक्तम्—पूर्व्वमुक्तस्य पर्य्यायान्तरेणार्थतो वा पुनरभिधाने पुनरुक्तत्वम्। यथा वेण्याम्—

"अस्त्रज्वालावलीढप्रतिवलजलधेरन्तरौर्व्वायमाणे
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्व्वधन्वीश्वराणाम्।
कर्णालं सम्भ्रमेण व्रज कृप समरं मुञ्च हार्द्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरं कोभयस्यावकाशः॥ (ल)

अत्र चतुर्थपादार्थः पुनरुक्तः।

---

शेषः। ततः तस्मात् किम् न किमपीत्यर्थः, विद्विषताम् शत्रूणां शिरसि पदं दत्तं शत्रुपराभवेनापीति भावः। ततः किम्। विभवैः सम्पद्भिः प्रणयिनः बान्धवाः सन्तर्पिताः प्रीणिताः ततः किम्। तनुभृतां देहिनां तनुभिः देहैः कल्पम् आप्रलय-पर्य्यन्तमित्यर्थः, स्थितं प्राणिनः प्रलयपर्य्यन्तजीविनः इत्यर्थः। ततः किम् सर्व्वमेव जगत् मिथ्याविनश्वरञ्चेति पर्य्यवशितोऽर्थः।

(ल) अस्त्राणां ज्वालाभिः शिखाभिः अवलीढः ग्रस्तः यः प्रतिवलजलधिः प्रतिपक्षी यर्थनिकाणवः तस्य अन्तः अभ्यन्तरे और्व्वायमाणे बड़वाग्नौ इवाचरति सर्व्वधन्वीश्वराणां सर्व्वेषां महाधनुष्काणां गुरौ आचार्य्ये सेनानाथे मम पितरि अस्मिन् द्रोणे इति शेषः, स्थिते वर्त्तमाने हे कर्ण, सम्भ्रमेण भयेन अलं भयं मा कुरु इत्यर्थः। हे कृप, समरं संग्राममेव व्रज गच्छ, हे हार्द्दिक्य हृदिनन्दन, कृतवर्म्मन्नित्यर्थः, शङ्का भीतिं मुञ्च परित्यज चापद्वितीये धनुर्धरे ताते पितरि रणधुरां संग्रामभारं वहति सति भयस्य अवकाशः अवसरः कः? कुत्रापि भयस्य नैव सम्भव इति भावः।

ख्यातिविरुद्धता—या च सा—

"ततश्चकार समरे शितशूलधरो हरिः"

अत्र हरिः शूलं लोकेऽप्रसिद्धम्। शूलशब्दस्य पर्य्यायान्तरेणोपादानेऽपि दोषस्यास्य सद्भावः, इति प्रसिद्धहतत्वाद्भेदः। कविसमयख्यातान्याह विश्वनाथः—

मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्त्योः।
रक्तौ च क्रोधरागौ सरिदुदधिगतं पङ्कजेन्दीवरादि॥
तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसंघो।
ज्योत्स्ना पेया चकोरैर्जलधरदिवसे मानसं यान्ति हंसाः॥
पादाघातादशोकं विकसति बकुलं योषितामास्यमद्यै-
र्यूनामङ्गेषु हाराः स्फुटति च हृदयं विप्रयोगस्य तापैः।
मौर्व्वीरोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतो-
र्भिन्नं स्यादस्य वाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत्॥
अह्न्यम्भोजं निशायां विकशति कुमुदं चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां नाप्यशोके फलं स्यात्।
न स्याज्जातो वसन्ते न च कुसुमफले गन्धसारद्रुमाणा-
मित्याद्युन्नेयमन्यत् कविसमयगतं सत्कवीनां प्रबन्धे॥ (व)

---

(व) व्योम्नि आकाशे पापे च मालिन्यं मलिनता यशसि हासकीर्त्त्योश्च धवलता शुक्लत्वं वर्ण्यते, आकाशं पापञ्च कृष्णवर्णं यशः कीर्त्तिर्हासश्च श्वेतवर्णं वर्णनीयम् इत्यर्थः, क्रोधरागौ कोपानुरागौ रक्तौ रक्तवर्णौ वर्ण्येते इति शेषः। पङ्कजेन्दीवरादि पङ्कजं पद्मम्, इन्दीवरं नीलपद्मं सरिदुदधिगतं नदीसमुद्रगतं वर्ण्यते इति शेषः। रोलम्बमाला भ्रमरपंक्तिः। तोयाधारे वापितड़ागादिष्वर्थः, मरालादिक मरालः राजहंसः,

विधेर्व्विधेयस्य अनुवादः अप्रधान्येन निर्द्देशः, यथा— "प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशाम्" इत्यत्र शयितः प्रयत्नेन बोध्यसे इति विधेयम्।

प्रसङ्गतः रसदोषास्तावत् उच्यन्ते—

रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि।
प्रतिकूलविभागादिग्रहो दीप्तिः पुनः पुनः॥
अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः।
अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्य्ययः॥
इत्यादिकाः सहृदयैरसदोषाः प्रकीर्त्तिताः॥

रसस्य स्वशब्देन रसेतिशब्देन हास्यादिशब्देन वाऽभिधानम्। स्थायिनां हासादीनां सञ्चारीणां निर्व्वेदादीनाञ्च स्वनाम्ना कथनं दोषः।

प्रतिकूलानां विरुद्धानां विभावादीनां ग्रहो ग्रहणम्।

यथा—आदिमे निर्व्वेदादीनां शान्तसञ्चारिणाम्, वीरे च वैवर्ण्यत्रासादीनाम्, भयानकस्यानुभावादीनां ग्रहणम्।

पुनः पुनर्दीप्तिर्यथा कादम्बर्य्यां महाश्वेताया विलापवर्णने।

---

आदिपदेन सारङ्गप्रभृतीनां पक्षिसमूहानां ग्रहणम्। जलधरदिवसे वर्षासु, मानसं मानससरोवरं, योषितामास्यमद्यैः स्त्रीमुखसीत्कारैरित्यर्थः, विप्रयोगस्य वियोगस्य तापैः सन्तापैः, मौर्व्वी ज्या विशिखाः शराः। पुष्पकेतोः कामस्य। चन्द्रिका शुक्लपक्षे वर्णनीयेति। शिखिनां मयूराणाम्। गन्धसारद्रुमाणां चन्दनवृक्षाणाम्। स्पष्टमन्यत्।

अकाण्डेऽनुचितेऽवसरे प्रथमं प्रकटनं वेण्यां द्वितीयेऽङ्के यथा-नेकवीरसंक्षये प्रवृत्ते राज्ञोदुर्य्योधनस्य भानुमत्या प्रमोदवर्णनम्।

अकाण्डे च्छेदो वीरचरिते यथा रामभार्गवयोर्दूराधिरूढे संपराये राघवः "कङ्कणमोचनाय गच्छामि" इति।

अङ्गस्यातिविस्तृतिः यथा सुराङ्गनाविलासादिवर्णने किरातार्ज्जुनीये।

अङ्गिनोऽनुसन्धानं रत्नावल्याश्चतुर्थेऽङ्के यथा वाभ्रव्यागमने सागरिकाया विस्मृतिः।

प्रकृतयो दिव्याः, अदिव्याः, दिव्यादिव्याश्च, तेषु च धीरोदात्तादयः, तत्र यो यथाभूतस्तस्यावस्थावर्णने प्रकृतिविपर्य्ययो दोषः, यथा वीरचरिते रामस्य छद्मना वालिवधः। कुमारस्याष्टमे उत्तमदैवतयोः पार्व्वतीगिरिशयोः सम्भोगवर्णनम्।

कथितानां दोषाणां क्वचित् गुणत्वं तच्चान्यत्र गुणाख्याने ज्ञातव्यम्।

## अनुकरणे च सर्व्वेषां दोषाणां स्याददोषता।

यथा—"प्रलपत्येष वौधेयः स्कन्धस्ते यदि धावति" (अ)

अत्र 'धावति' इति पदं दुष्टम् किन्त्वनुकरणत्वाददुष्टमिति।

---

(अ) एष पुरोवर्त्ती वौधेयः मूर्खः प्रलपति जल्पति यदि चेत् ते तव स्कन्धः अंसः धावति चलतीत्यर्थः।

## गुणाः —

"काव्योत्कर्षका गुणाः" के ते इत्याकाङ्क्षायामाहुस्तावद्-भट्टपादाः—

ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥

आत्मनः खलु यथा हि शौर्य्यादयो गुणशब्दवाच्याः, नाकारस्य, तथा काव्ये रसस्यैव माधुर्य्यादयो गुणाः न वर्णानाम् । अचलस्थितयो नियतावस्थानाः । ते किल—

माधुर्य्यौजः प्रसादाख्यास्त्रयस्ते समुदीरिताः ॥

एष्वाद्यलक्षणमुक्तं काव्यप्रकाशकारेण—

आह्लादकत्वं 'माधुर्य्यम्' चित्तस्य द्रुतिकारणम् ।

आह्लादकत्वमानन्दजनकत्वम्, द्रुतिगलितत्वमिव ।

"करुणे विप्रलम्भे तत् शान्ते चातिशयान्वितम् ॥"

उक्तञ्च विश्वनाथेन —

मूर्द्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना ।
रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः ॥
अवृत्तिरल्पवृत्तिर्व्वा मधुरा रचना तथा ॥ (क)

---

(क) मूर्द्धि शिरसि वर्गस्य अन्त्यवर्णेन शेषवर्णेन युक्ताः ङ्क-ञ्च-प्रभृतयः वृतयः,

एतदुदाह्रियते तेन तत्रैव यथा—

"अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः ।
जनयन्ति मुहुर्यूनामन्तःसन्तापसन्ततिम् ॥" ( ख )

यथा वा कुमारसम्भवे—

"तदिदं क्रियतामनन्तरं
भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्ज्जना-
ननु मां प्रापय पत्युरन्तिकम् ॥ ( ग )

ओजः स्वरूपं तद्व्यञ्जकं वर्णादिकञ्चाह स एव—

**ओजस्वित्वस्य विस्ताररूपं दीप्तत्वमुच्यते ।**
**वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ॥**

---

ट ठ ड ढान् विना टादिर्व्यतिरिक्ताः इत्यर्थः, लघू ह्रस्वस्वरायुक्तौ रणौ च रकारो णकाराश्च वर्णाः तद्व्यक्तौ तस्य माधुर्यस्य व्यक्तौ प्रकटने कारणतां हेतुतां गताः हेतवो भवन्तीत्यर्थः, तथा वृत्तिः असमस्ता अल्पवृत्तिर्वा अल्पसमस्ता वा मधुरा मनोहारिणी रचना तद्व्यक्तौ कारणतां गतेति निष्कर्षार्थः ।

( ख ) अनङ्गस्य कन्दर्पस्य मङ्गलभुवः मङ्गलस्थानानि तस्याः कान्तायाः अपाङ्ग-भङ्गयः भ्रुकुटिल्यानि मुहुः वारं वारं यूनां अन्तःसन्तापसन्ततिम् अन्तःकरणस्य सन्तापातिशयं जनयन्ति उत्पादयन्ति ।

( ग ) हरनेत्राग्निना भस्मीभूते कामे विरहिण्या रतेर्वसन्तं प्रति विलापोक्तिरियम् । हे वसन्त, कामसख, तत् तस्मात् भवता इदम् अनन्तरम् अतःपरकरणीयं बन्धुजनप्रयोजनं मित्रकृत्यं क्रियताम् अनुष्ठीयताम् किं तदित्याह विधुरामिति ननु सखे, विधुरां कातरां मां ज्वलनातिसर्ज्जनात् अग्निप्रदानात् पत्युरन्तिकं स्वामिसन्निधिं प्रापय नय त्वमिति शेषः ।

वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ।
उपर्य्यधो द्वयोर्वा सरेफाष्टठडढैः सह ॥
शकारश्च षकारश्च तस्य व्यञ्जकतां गताः ।
तथा समासबहुला घटनौद्धत्यशालिनी ॥ (घ)

यथा वेण्याम्—

"चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि, भीमः ॥" (ङ)

---

(घ) चित्तस्य मनसः विस्ताररूपं दीप्तत्वं ज्वलितत्वम् ओजः उच्यते वीर-बीभत्स-रौद्रेषु अस्य ओजसः क्रमेण आधिक्यं वीररसे ओजः, बीभत्सरसे ततोऽपि अधिकमोजः रौद्रेऽपि तस्मादप्यधिकमित्यर्थः। वर्गस्य आद्यतृतीयाभ्यां क-ग-च-ज-ट-ड-त द-प-बैरित्यर्थः। युक्तौ तदान्तिमौ तयोराद्यतृतीयोः कगादीनामित्यर्थः। अन्तिमौ परवर्त्तिनौ ख-घ-छ-झ-ठ ढ-थ-ध-भाः इत्यर्थः वर्णौ यथा क्ख ग्घ इत्यादयः, तथा उपरि अधः द्वयोर्वा उपर्य्यध इत्यर्थः, सरेफाः रेफसहिता यथा अर्क, अग्र, आर्द्र कम्र इत्यादयः ट ठ ड ढैः सह टादिसहिता इत्यर्थः। शकारश्च षकारश्च एते वर्णाः तस्य ओजसः व्यञ्जकतां प्रकाशकत्वं गताः। तथा समासबहुला बहुसमासान्तपदा औद्धत्यशालिनी उत्कटा घटना रचना पदविन्यासः तस्य व्यञ्जकतां गतेति निष्कर्षः।

(ङ) द्रौपदीं प्रति युधिष्ठिरस्य उक्तिरियम्। हे देवि, भीमः चञ्चद्भ्यां चलद्भ्यां भुजाभ्यां भ्रमिता घूर्णिता या चण्डा भयङ्कराकारा गदा तया अभिघातेन प्रहारेण संचूर्णितम् ऊरुयुगलं यस्य तथाभूतस्य सुयोधनस्य स्त्यानेन विस्तृतेन अवनद्धम संलिप्त म

प्रसादस्वरूपं तद्व्यञ्जकान् वर्णांश्चाप्याह तत्र—

चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ।
स प्रसादः समस्तेषु रसेषु रचनासु च ॥
शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः ॥

यथा रामायणे—

"अश्वमेधं सहस्रञ्च सत्यञ्च तुलया धृतम् ।
तुलयित्वा तु पश्यामि सत्यमेवातिरिच्यते ॥"

यथा वा रघुवंशे अजविलापे :—

"गृहिणी सचिवः सखी मिथः
प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम् ॥" ( च )

पूर्व्वोक्तदोषाणां क्वचिददोषत्वं क्वचिद्गुणत्वमित्याह दर्पणकारः—

रक्तारि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।
रुद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ॥

---

घनेन गाढेन शोणः रक्तः पाणिर्यस्य तादृशः सन् तव कचान् केशान् उत्तंसयिष्यति संयस्यति भीमो गदया सुयोधनस्य भंक्ता । तव केशान् भूषयिष्यतीत्यर्थः ।

( च ) हे प्रिये, त्वं मम गृहिणी गृहस्वामिनी सचिवः मन्त्री मिथः एकान्ते सखी सहचारिणी तथा ललिते ललितविषये मनोज्ञ इत्यर्थः । कलाविधौ नृत्य·

यथा वेण्याम्—

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात् पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत् कर्म्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥" (छ)

उद्धतवाच्यं यथा वीरचरिते—

संवर्त्तप्रकटविवर्त्तसप्तपाथो-
नाथोर्म्मिव्यतिकरविभ्रमप्रचण्डः ।
निर्घोषः स्फुरति भृशं परःसहस्र-
व्यावल्गत्प्रबलगतागतास्त्रपाणाम् ॥ ( ज )"

---

गीतादिव्यापारे प्रियशिष्या अतः त्वां हरता करुणाविमुखेन निर्दयेन सताना ममनेन मे मम किं न हृतम् वद, सर्व्वमेव हृतमित्यर्थः ।

( छ ) पाण्डवीनां चमूनां सेनां मध्ये यो यः स्वभुजगुरुमदात् निजबाहुबलदर्पात् शस्त्रं बिभर्त्ति धरति, यः यः पाञ्चालगोत्रे द्रुपदवंशे शिशुः बालकः अधिकवयाः युवा प्रौढः स्थविरो वेत्यर्थः, वा अथवा गर्भशय्यां गतः मातृकुक्षिगतः इत्यर्थः, यो यस्तस्य कर्म्मणः मत् पितृवधस्येति भावः, साक्षी साक्षात् द्रष्टा दृष्ट्वापि अनिषेद्धेति भावः । तथा यश्च यश्च मयि रणे संग्रामव्यापारे इत्यर्थः, चरति तिष्ठति प्रतीपः प्रतिकूलः मद्विरोधमाचरिष्यतीति भावः । क्रोधान्धोऽहं तस्य तस्य स्वयं जगताम् अन्तकस्यापि कृतान्तस्यापीत्यर्थः, अन्तकः संहर्त्ता तान् सर्व्वान् नाशयिष्यामीति भावः ।

( ज ) संवर्त्ते परिवर्त्तने कल्पान्ते इत्यर्थः, प्रकटोविषमः विवर्त्तः परिणामो येषां तादृशाः ये सप्तपाथोनाथाः सागराः तेषाम् ऊर्म्मीणां तरङ्गाणां ये व्यतिकराः सम्मिलनानि तेषां यो विभ्रमः विलासः विषमगतिविशेषः, तद्वत् प्रचण्डः भयानकः दारुणः इत्यर्थः, परःसहस्राणां सहस्राधिकानां व्यावल्गतां प्रबलानां गतानां रणकर्म्मणा निहतानाम्

ग्राम्यत्वमधमोक्तिषु गुणः। यथाभिज्ञानशकुन्तले जालुकः "एत्तिके दाव एदस्स आगमे, अध मां मालेध कुट्टेध वा" ( झ ) इति वाक्ये 'मालेध' 'कुट्टेध' इति पदद्वयं ग्राम्यत्वेऽपि अधम-जनस्योक्तत्वाद्गुणः।

निहतार्थत्वं श्लेषादौ गुणमाह विश्वनाथः—

**स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते॥**

यथा—"पर्व्वतभेदिपवित्रं जैत्रं नरकस्य बहुमतं गहणम्।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत॥"( ञ )
अत्रेन्द्रपक्षे पवित्रशब्दो निहतार्थः। सिंहपक्षे मतङ्गशब्दो मातङ्गार्थेऽप्रयुक्तः।

---

अगतानां रणकर्म्मणि सताम् असुपाणां राक्षसानां निर्घोषः सिंहनादः भृशम् अत्यन्तं स्फुरति प्रसरति विस्तारयतीत्यर्थः।

( झ ) एतावांस्तावदेतस्यागमः, अथ मां मारयत, कुट्टयत वा।

( ञ ) हे जनाः, पृथिव्यां पतन् सुरसरिदम्भो गङ्गाजलं यूयं नमत। कीदृशम्? सर्व्वतभेदि हिमालयभेदकरम् पवित्रं पावनम्, नरकस्य पारलौकिकदुःखस्य जैत्रं जयशीलं विनाशकमित्यर्थः। बहुभिर्म्मतं पूजितम्। गहनं महावेगित्वात् दुरवगाहम्, दुरधिगम्यं बोधातीतमित्यर्थः, हरिमिव विष्णुमिव, पर्व्वतभेदी गोवर्द्धनधारी, स चासौ पवित्रश्चेति तम्, नरकस्य नरकनाम्नोऽसुरस्य जैत्रं विनाशकं पराजयकरम् गहनं दुर्ब्बोधतत्त्वम्। हरिमिव इन्द्रमिव पर्व्वतानां पक्षच्छेदकत्वात् पर्व्वतभेदी पवि वज्रं त्रायते धारयति पवित्रः स चा । स चेति तम्। जैत्रं जयशीलं नरकस्य मनुष्यस्य बहुमतं भृशं पूजितं गहनं दुर्ज्ञेयं हरिमिव सिंहमिव, "मृगाणाञ्च मृगेन्द्रोऽहम्" इति स्मरणात् सिंहस्य वन्दनीयत्वमागमे प्रसिद्धम्। पर्व्वतभेदी गिरिगह्वराश्रयत्वेन सोऽस्यास्तीति पवित्रो देवरूपत्वात् नमस्यत्वसूचनम् नरकस्य मनुष्यस्य, जैत्रम्, बहून् मतङ्गान् हन्तीति तम्।

**गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः ॥**

यथा कुमारे—"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥" ( ट )

अत्र वक्तृवाच्ययोस्तदर्थबोधतया न दोषः ।

**सन्दिग्धत्वं गुणो व्याजस्तुतिपर्य्यवसायि चेत् ॥**

यथा—"पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयो र्गहनम् ॥" ( ठ )

अत्र विशेषणपदानां सन्देहयोग्यत्वेऽपि व्याजस्तुतिपर्य्यवसानाद्गुणत्वम् ।

**गुणः क्वाप्यधिकं पदम् ॥** यथा—

---

( ट ) हे विधे, पुरुषार्थप्रवर्त्तिनीं पुरुषार्थौ भोगापवर्गौ तयोः प्रवर्त्तिनीं सम्पादयित्रीं प्रकृतिं मूलकारणं त्वाम् आमनन्ति कथयन्ति पण्डिता इति शेषः । त्वामेव तद्दर्शिनं तस्याः प्रकृतेः द्रष्टारं साक्षिणमित्यर्थः, अतएव उदासीनं कूटस्थम् असंसृष्टमिति यावत्, पुरुषम् आत्मानं विदुः जानन्ति तत्त्वार्थदर्शिन इति शेषः ।

( ठ ) राज्ञि दरिद्रस्योक्तिरियम् । हे देव संप्रत्यावयोः गहनं गृहं समं त्वत्तो धनलाभे तु मद्गृहमनेवम्भावात् पश्चात् समं न भवतीत्यर्थः । पृथूनि कार्त्तस्वरस्य सुवर्णस्य पात्राणि यत्र, भूषिताः रत्नालङ्कारमण्डिताः निःशेषपरिजना यत्र, विहरन्तीभिः करेणुभिर्गहनं दुर्गमं राजसदनमीदृशं, दरिद्रसदनन्तु पृथुकानां शिशूनां क्षुधया आर्त्त-स्वरस्य पात्रं भुवि क्षपिताः सुप्ताः निःशेषपरिजना यत्र शयनास्तरणाभावात्, तथा विलेगत्तं कुत्सितसतां मूषिकपिपीलिकादीनां रेणुभिर्गहनं व्याप्तम्, कुत्सायां कः ।

"आचरति दुर्ज्जनो यत् सहसा मनसोऽप्यगोचरानर्थान् ।
तत्र न जाने जाने स्पृशति मनः किन्तु नैव निष्ठुरताम् ॥" (ड)

अत्र न न जाने इत्यनेनायोगव्यवच्छेदः, द्वितीये जाने इति अन्ययोगव्यवच्छेदः, इति वैचित्र्यातिशयः ।

**सम्भ्रमे विस्मये हर्षे विषादेऽप्यधिकं पदम् ॥**

गुण एव ज्ञातव्यः ; सम्भ्रमे यथारघौ—

"अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्च्चिषं ततः सन्दधे दृशमुदग्रतारकम् ॥" ( ढ )

विस्मये हर्षे च द्विरुक्तिर्यथा भ्रमराष्टके—

"दृष्ट्वा स्फीतोऽभवदलिरसौ लेख्यपद्मं विशालं
चित्रं ! चित्रं ! किमिति ! किमिति ! व्याहरन् निष्पपात ।
नास्मिन् गन्धो न च मधुकणो नास्ति तत् सौकुमार्य्यं
घूर्णन् मूर्द्धा वत ! नतशिरा व्रीड़या निर्ज्जगाम ॥" ( ञ )

---

( ड ) दुर्ज्जनः शठः सहसा हठात् मनसोऽपि अगोचरान् अर्थान् यत् आचरति अनुतिष्ठति तत् न जाने न जाने किन्तु मनः निष्ठुरतां नैव स्पृशति । दुर्ज्जनस्य दौर्ज्जन्यं ज्ञायते परं तस्य अनिष्टं कर्त्तुं नेच्छामीति भावः ।

( ढ ) हरधनुर्भङ्गानन्तरं कृतसीतोद्वाहं रामादाय अयोध्यां प्रति प्रस्थितस्य दशरथस्य क्रुद्धं परशुरामं दृष्ट्वा सम्भ्रमोक्तिरियम् । सः परशुरामः अर्घ्यम् अर्घ्यं गृहाणेति शेषः । इति एवं वादिनं नृपं दशरथम् अनवेक्ष्य न विगणय्येत्यर्थः, यतः यस्यां दिशि भरताग्रजः रामः ततः तत्र क्षत्रकोपदहनार्च्चिषं क्षत्रियान् प्रति य एव कोपः क्रोधः स एव दहनः अनलः तस्य अर्च्चिषा शिखा यस्य तत् । उदग्रतारकम् उत् उद्‌गतं स्फुरित-मित्यर्थः, तारकं नेत्रगोलकमित्यर्थः, यस्य तत् तथाभूतं चक्षुः सन्दधे पातयामास ।

( ञ ) असौ अलिर्भ्रमरः विशालं सुमहत् लेख्यपद्मम् अङ्कितकमलं दृष्ट्वा स्फीतः

विषादो चापि तत्र—

"रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजालम् ।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा ! हन्त ! हन्त ! नलिनीं गज उज्जहार ॥" (ट)

**उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः ॥**

"गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद, माति मामलमिति क्षामाक्षरोल्लापिनी-
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु
किम् ॥ (ठ)

---

अतिशयहर्षान्वित इत्यर्थः अभवत् । चित्रं चित्रम् अतिशयमाश्चर्यमाश्चर्यं किमिति किमिति व्याहरन् समुच्चरन् निष्पपात तत्र चिन्तितपद्मे इति शेषः । तस्मिन् लेख्यपद्मे न गन्धः न च मधुकणः मकरन्दबिन्दुः न तस्य सौकुमार्य्यं कोमलत्वम् अस्ति इति दृष्ट्वेति शेषः । बत दैवेन मूर्द्धा शिरः घूर्णन् कम्पयन् व्रीड़या लज्जया नतशिराः नमितमूर्द्धा सन् निर्जगाम तस्मात्प्रस्थितः सन् अन्यत्र प्रयस्थे इत्यर्थः ।

(ट) रात्रिः रजनी गमिष्यति प्रभाता भविष्यतीत्यर्थः, सुप्रभातं भविष्यति, भास्वान् सविता उदेष्यति उत्थास्यति पद्मजालं पद्मसमूहः हसिष्यति विकसिष्यति कोषगते पद्मकोरकस्थे द्विरेफे भ्रमरे इत्थं एवं विचिन्तयति सति हा हन्त हन्त !! विषादसूचकमव्ययमेतत् त्रयं गजः करी नलिनीं पद्मम् उज्जहार उत्पाटयामास ।

(ठ) सख्या रात्रिवृत्तान्तकथनमिदम् । गाढम् दृढम् एव आलिङ्गनं स्वञ्जनं तेन वामनीकृतः खर्व्वीकृतः कुचः स्तनौ यस्याः सा गाढालिङ्गनवामनीकृतकुचा,

अत्र पीड़येत्यादियोग्यस्य पदस्य न्यूनता हर्षग्लानिसम्भोग-प्रकर्षबोधनद्वारा रसं पुष्णातीति गुणत्वम् ।

**विहितस्यानुवाद्यत्वे कथितपदत्वं गुणः ॥**

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।

सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥" ( ङ )

अत्र ताम्रपदस्य कथितपदत्वेऽपि उत्तरवाक्येऽनुवाद्यत्वान्न दोषः ।

**गर्भितत्वं गुणः क्वापि पतत्प्रकर्षता तथा ॥**

---

सा चासौ प्रोद्भिन्नः विकसितः रोमाणाम् उद्गमः बहिर्मुखोपस्थितिः यस्याः सा प्रोभिन्न-रोमोद्गमा चेति पदद्वयेन कर्म्मधारयः । सान्द्रः घनः एव शृङ्गारसः शृङ्गाररूपं जलं तस्य अतिरेकेण आधिक्येन विगलत् स्खलत् श्रीमतो नितम्बात् कटिदेशात् "पश्चान्नितम्बः स्त्रीकट्याः क्लीवे तु जघनं पुरः" इत्यमरः । अम्बरं वस्त्रं यस्याः सा । हे मानद, मानार्पणकारिन्, मा मां पीड़य मां मातिपीड़य अलं बहुव्यापारेणेति भावः । क्षामः क्षीणः तस्य अल्पस्य क्षुद्रस्य अक्षरस्य उल्लापिनी काकुवाक्प्रोक्तवती । पीड़येत्यादेरुक्तत्वादल्पत्वमक्षरस्य, मानदस्य पीड़ाकरत्वमनुपपन्नमित्यवगमाय तत्पदेन सम्बोधनम् । एते तावन्निषेधाभासाविधिषु पर्य्यवसन्नाः । निष्पन्दत्वेन किं मृतेति वितर्कचतुष्टयं सुप्ता निद्रायिता अतिनिष्पन्दत्वेन मृतेति अन्ततत्वे लयः अवहिर्भावे विशेषलयश्च बोध्यम् ।

( ङ ) सर्व्वप्रकाशकत्वात् सविता सूर्य्यः ताम्रः रक्तः सन् उदेति उद्गच्छति, ताम्र एव रक्त एव अस्तमेति च अस्तं गच्छति च । तथा हि महतां सज्जनानां सम्पत्तौ सम्पदि विपत्तौ विपदि च एकरूपता तुल्यता सम्पदि विपदि च महान्तः समभावेनैवावतिष्ठन्ते इति भावः ।

गर्भितत्वं यथा—

"दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमः
यस्मात् प्रादुरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम्" ॥(ढ)

अत्र 'वदन्त एव हि' इत्यादिवाक्यं वाक्यान्तरमध्ये प्रवेशात् चमत्कारातिशयमावहति ।

'पतत्प्रकर्षता'मश्वदभुजे'त्यादि ( ५५ ) पूर्व्वमुक्तम् । तत्र चतुर्थपादे सुकुमारार्थतया शब्दाडम्बरत्यागो गुणः ।

**ग्राम्यत्वमधमोक्तिषु—गुणः ।**

"एसो ससहरविंबो दीसइ हैअंगवीणपिंडोव्व ।
एदे अ रस्सिसमोहा पडन्ति आसासु दुग्धधाराव्व ॥" (ण)

---

( ढ ) समग्रां पृथिवीं जित्वा विप्रसात् कृतवन्तं परशुरामं वीक्ष्य जनानामुक्तिः । दिङ्मातङ्गानां दिग्गजानां घटाभिः सङ्घैः चतुष्टयैरिति भावः, विभक्ता विभज्य गृहीताः चतस्रः आघाटाः सीमानः यस्याः तादृशी मही पृथिवी साध्यते उपार्ज्यते महामहिमशालिभिरिति शेषः । सा मही सिद्धापि विप्राय प्रतिपाद्यते समर्प्यते वदन्त एव वयं रोमाञ्चिताः सञ्जातरोमहर्षाः जाता इति शेषः । पश्यत अवलोकयत अपरं किं वक्तव्यमिति शेषः, यस्मात् रामात् इदं कथाद्भुतम् अद्भुतकथेत्यर्थः, प्रादुरभूत् जाता, यत्रैव च रामे अस्तं गतं तस्मै रामाय नमः नमस्कुर्महे ।

( ण ) एष दृष्टिपथवर्त्ती शशधरविम्बः चन्द्रमा हैयङ्गवीनपिण्ड इव नवनीतगोलक इवेत्यर्थः, दृश्यते अवलोक्यते मयेति शेषः । एते च रश्मिसमूहाः किरणजालाः आशासु दिक्षु दुग्धधारा इव पतन्ति ।

एष शशधरबिम्बो दृश्यते हैयंगवीनपिण्ड इव ।
एते च रश्मिसमूहाः पतन्ति आशासु दुग्धधारा इव ॥"

अत्र दुग्धपदं ग्राम्यमपि वक्तुर्विदूषकस्याधमत्वप्रीतिकरत्वाद्-गुण एव ।

**निर्हेतुता तु ख्यातार्थे दोषतां नैव गच्छति ॥**

यथा कुमारे—

"चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखन्तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥" (त)

अत्र रात्रौ पद्मस्य सङ्कोचः दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुङ्क्ते' इति हेतुं ना पेक्षते ।

**सम्भाव्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः ॥**

यथा विक्रमोर्व्वशीये—

"क्वाकार्य्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।

---

त) लोला चपला परिभ्रमणशीला इत्यर्थः, लक्ष्मीः कान्त्यभिमानिनी देवता चन्द्रं गता रात्राविति भावः, पद्मगुणान् कमलस्थितिजनितसुखानीति यावत् न भुङ्क्ते नास्वादयति, पद्माश्रिता दिवसे इति भावः, अम्भोजं विकसतीति कविसमयप्रसिद्धेः । चान्द्रमसीं चान्द्रीम् अभिख्यां शोभां न भुङ्क्ते, न किन्तु उमायाः पार्व्वत्या मुखं प्रतिपद्य प्राप्य द्विसंश्रयां चन्द्रकमलवासजनितामिति भावः, प्रीतिम् आनन्दम् अवाप प्राप । पार्व्वत्या वदनं चन्द्रः कमले च नेत्रे तेषाञ्च दिवारात्रं तुल्यविकासित्वादिति भावः ।

किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं धास्यति ॥ (थ)

अस्मिन्नेव हि प्रथमाङ्कानां वितर्कमतिशङ्काहृतोनामभिलाषाङ्कोत्सुक्यास्मृतिदैन्यचिन्ताभिस्तिरस्कारः, इति।

---

## रीतिः—

पदविन्यासप्रणाली रीतिः। सा च त्रिविधा इति वामनः लाटो सहितास्ता चतुर्विधा इति विश्वनाथप्रभृतयः, षड्विधाश्च भोजराजादयः। तच्च यत्:—

वैदर्भी चाथ पाञ्चाली गौडीयावन्तिका तथा।
लाटीया मागधी चेति षोढ़ा रीतिर्निगद्यते ॥

इति—

आसान्तु प्रधानतो भेदमाह आचार्य्यो दण्डी:—

---

(थ) अकार्य्यम् अकरणीयं कुत्सितमार्गगमनमित्यर्थः, क्व कुल? शशलक्ष्मणः शशधरस्य कुलं वंशश्च क्व? प्रथितयशसः सोमवंशोत्पन्नस्य मे असत्कार्य्यं कथमपि नोचितमिति भावः। सा उर्व्वशी भूयोऽपि पुनरपि दृश्येत, तामवेक्षितुं पुनः किं शक्नोमीत्यर्थः। मे मम श्रुतं ज्ञानं दोषाणाम् अकार्य्याणां प्रशमाय निवृत्तये, अहो इति खेदे कोऽपेऽपि, मुखं तस्या इति शेषः, कान्तं रमणीयम्। अपकल्मषाः कल्मषशून्याः निष्पापाः कृतधियः विद्वांसः किं वक्ष्यन्ति? एतदवस्थं मां समीक्ष्य गर्हयिष्यन्तीत्यर्थः। सा उर्व्वशी स्वप्नेऽपि दुर्लभा दुष्प्रापनीयेति यावत्। हे चेतः हृदय, स्वास्थ्यं धैर्य्यम् उपेहि अवलम्बस्व कः धन्यः श्लाघ्यः भाग्यवान् इत्यर्थः, युवा खलु निश्चयन् अधरं तस्या इति शेषः। धास्यति परिपास्यति। यः पास्यति स एव धन्य इत्यर्थः।

अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।
तत्र वैदर्भगौड़ीयौ वर्ण्यते प्रस्फुटान्तरौ ॥

प्रस्फुटान्तरौ सुकुमारविकटात्मकत्वेन अत्यन्तविसदृशौ ।
तावाह स एव :—

श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोज.कान्तिसमाधयः ॥
इति वैदर्भमार्गस्य प्राणाः दशगुणाः स्मृताः ।
एषां विपर्य्ययः प्रायो दृश्यते गौड़वर्त्मनि ॥

वैदर्भीस्वरूपमाह विश्वनाथः—

माधुर्य्यव्यञ्जकैर्व्वर्णैः रचना ललितात्मिका ।
अवृत्तिरल्पवृत्तिर्व्वा वैदर्भीरीतिरिष्यते ॥

ललितात्मिका माधुर्य्यगुणयुता, वृत्तिः समासः, यथा हि कुमारे रतिः—

तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्ज्जनान्ननु मां प्रापय पत्युरन्तिकम् ॥(८)

वैदर्भीविरुद्धधर्म्मवती पदरचना गौड़ी। सा च दीर्घसमासादिना बन्धवैकटारूपम् । तत्राह पुरुषोत्तमः—

(८) हे वसन्त ! तत् तस्मात् भवता इदम् अनन्तरम् अतःपरकरणीयम् बन्धुजनप्रयोज ' बन्धुजनकृत्यं क्रियताम् अनुष्ठीयताम् किं तदित्याह विधुरामिति ननु सखे "समः प्राणः सखामतः" विधुरां कातरां मां ज्वलनातिसर्ज्जनात् वह्निप्रदानात् पत्युरन्तिकं स्वामिसमीपं प्रापय नय त्वमिति शेषः ॥

**बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च गौड़ीया**
**रीतिरनुप्रास-महिम-परतन्त्राऽस्तोभयाक्या च ॥**

इति

यथा वेण्यां भीमः—"चञ्चद्भुजभ्रमितचण्डगदाभिघात" इति सर्वं पूर्व्वमुक्तम्। अधिकन्तु स्वलाघाति ग्रन्थे ज्ञेयम्।

—*—

## अलङ्कारः—

यथेह लोके हारादयः शरीरस्य रूपयौवनादिकृतशोभां पुष्णन्तोऽलङ्कारपदवाच्याः तथा शब्दार्थरूपस्य काव्यशरीरस्य श्लेषादिगुणकृतवैचित्र्यं पुष्णन्तोऽनुप्रासादय इति। अतएव काव्यदोषादीन् पूर्व्वमुक्त्वेदानीं तद्व्याकर्त्तुकामेन भेदबहुलेषु तेषु विस्तारभिया दिङ्मात्रम् प्रदर्श्यते। तत्रालङ्कारानुपक्रमस्य आह स्म आचार्य्यपदो दण्डी :—

**काव्यशोभाकरान् धर्म्मानलङ्कारान् प्रचक्षते ॥**

तेऽपि द्विविधाः, शब्दगताः अर्थगताश्च। शब्दगता अनुप्रासयमकादयः। तत्राह दर्पणकारः—

**अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत् ॥**

स्वरवैसादृश्येऽपि व्यञ्जनमात्रसादृश्यम् अनुप्रासः, स च रसानुगुणो वर्णानां प्रकर्षेण न्यासः। यथा—

लताकुञ्जं गुञ्जन् मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन्।

मकम्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि ॥(क)

यमकलक्षणमाह स एव—

सत्यर्थे पृथगर्थाया: स्वरव्यञ्जनसंहते:।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥ (१)

अत्र द्वयोरपि पदयो: क्वचित् सार्थकत्वं क्वचिन्निरर्थकत्वम्, क्वचिदेकस्य सार्थकत्वमपरस्य निरर्थकत्वमत उक्तम् 'सत्यर्थे' इति, तेनैव 'दमोमोद' इत्यादेर्विविक्तविषयत्वम् * सूचितम्। एतच्च पदपादार्द्धश्लोकावृत्तित्वेन पादाद्यावृत्तेश्चानेकविधतया प्रभूतमतभेदम् † अतस्तेषां दिङ्मात्र- ⁂ मुदाक्रियते। यथा माघे—

---

(क) गुञ्जन्त: अव्यक्तमधुरध्वनिं कुर्वन्त: मदवन्त: सोल्लासा: अलीनां भ्रमराणां पुञ्जा: समूहा: यस्मिन् तादृशं लताकुञ्जं वल्लरीपुञ्जं चपलयन् मुखरयन् कम्पयन्नित्यर्थ:, अङ्गं गात्रं प्राणिनामिति शेष:, समालिङ्गन् संस्पृशन् द्रुततरं सद्य: सपदि अनङ्गं कामं प्रबलयन् वर्द्धयन् दलितं प्रस्फुटितम् अरविन्दं नलिनं तरलयन् चञ्चलीकुर्वन् रजोवृन्दं रजसां परागाणां वृन्दं चयं विन्दन् लभमान: प्राप्नुवन्नित्यर्थ:। मरुत् समीरण: दिशि दिशि समन्तात् मकरन्दं पुष्परसं सौरभमित्यर्थ:, किरति क्षिपति। अत्र प्रथमे चरणे 'ञ्ज' द्वितीये 'ङ्ग' परार्द्धे च 'न्द' वर्णानामसकृदावृत्ति:।

---

(१) अर्थे सति विद्यमाने पृथगर्थाया: भिन्नार्थाया: स्वरव्यञ्जनसंहते: तेनैव क्रमेण पूर्व्वानुसृतक्रमेणेत्यर्थ:, आवृत्ति: असकृदेवोच्चारणं यमकं विनिगद्यते कथ्यते।

* विविक्तविषयत्वं विभिन्नविषयत्वम्।

† प्रभूतमतभेदम् अनेकप्रकारम्। नानाप्रकारमित्यर्थ:।

⁂ दिङ्मात्रं प्रकारान्तरोपलक्षणमल्पमित्यर्थ:।

नवपलाश-पलाशवनं पुरः
स्फुटपराग-परागपङ्कजम् ।
मृदुल-तान्त-लतान्तमलोकयत्
स सुरभिं सुरभिं सुमनोभरैः ॥ (क)

अत्र पदावृत्तिः पलाशपलाशेति। सुरभिं सुरभिमित्यत्र च द्वयोः सार्थकत्वम्। लतान्तलतान्तेत्यत्र प्रथमस्य निरर्थकत्वम्। परागपरागेत्यत्र द्वितीयस्य। एवमन्यत्राप्युदाहार्य्यम्।

श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते ॥ *

स च वर्णप्रत्ययप्रकृतिपदादिश्लेषाद्बहुविधः। यथा माघे—

प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्त्तुरभू-
न्न पतिष्यतः करसहस्रमपि ॥ (ख)

---

(क) राजसूयाभिमन्त्रितस्य पथि गच्छतः कृष्णस्य वसन्ताविर्भावदर्शनवर्णनमिदम्। सः कृष्णः पुरः अग्रतः नवानि पलाशानि पत्राणि येषां तादृशं पलाशवनं किंशुकारण्यं यत्र तं तथोक्तम्, स्फुटानि विकसितानि परागैः रजोभिः परागगतानि व्याप्तानि पङ्कजानि पद्मानि यत्र, तथाविधं मृदुलाभिः कोमलाभिः ताम्ताभिः पल्लवकुसुमभरैरानताभिः लताभिः वल्लीभिः अन्तं रम्यं तथा सुमनसां पुष्पाणां भरैः समूहैः सुरभिं सुगन्धं वसन्तम् अलोकयत् अपश्यत् सम्पूर्णमित्यर्थः।

* श्लिष्टैः बह्वर्थयुक्तैः पदैः सुबन्ततिङन्तरूपैः अनेकानाम् एकाधिकानाम् अर्थानाम् अभिधाने अभिधया प्रतिपादने श्लेष इष्यते, अभिधया बह्वर्थप्रतिपादनमेव श्लेष इति फलितार्थः।

(ख) सूर्य्यास्तवर्णनमिदम्। विधौ विधातरि चन्द्रे च प्रतिकूलतां विरोधिताम्

अत्र विधावित्यत्र विधुविधिशब्दयोरुकारेकारयोरीकाररूपत्वाद् वर्णश्लेषः, करेत्यत्र प्रकृतिश्लेषोऽपि। "पृथुकार्त्तस्वरपात्रम्" इत्यादि पूर्वोक्ते श्लोके पदभङ्गे विभक्तिसमासयोरपि वैलक्षण्यात् पदश्लेषो न तु प्रकृतिश्लेषः।

इह तावत् स्वभावोक्तिरुपमादयो बहवोऽर्थालङ्काराः। तेषु स्वभावोक्तेर्व्वस्तुस्वभाववर्णनस्वरूपत्वात् स्वभाववर्णनञ्च वस्तूनां प्रकृतञ्चेत्तद्वस्तूनि प्रत्यक्षमिव दर्शयित्वा सहृदयमनांसि नितरामाकर्षतीति तस्या अतीव चमत्कारित्वात् सैव प्रथममुदाह्रियते। यदाह स्म—

स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम् ॥

यथा मम संयुक्तासयम्बरे—

पुष्पस्पर्शनलालितैरलिकुलैर्व्याप्तं वनं सर्व्वतः

---

उदयोन्मुखत्वञ्च उपगते प्राप्ते सति बहुसाधनता विविधोपायवत्त्वं वैफल्यम् एति प्राप्नोति। हि तथा हि पतिष्यतः अस्तं गमिष्यतः दिनभर्त्तुः सूर्य्यस्य कराणां किरणानां सहस्रमपि अवलम्बनाय आश्रयाय अस्तमयावघातायेति यावत् न अभूत्। अथ च पतिष्यतः स्खलिष्यतो जनस्य करद्वयमपि पतनप्रतिघाताय भवति, तस्य तु करसहस्रमप्यवलम्बनाय नाभूदिति भावः। अर्थद्वयमपि श्लेषेण समर्थयति प्रतिकूलतामिति। विधौ चन्द्रे प्रतिकूलतां विरुद्धफलभागित्वमनुदयभागित्वमिति यावत्। बहुसाधनता बहुस्थितुपायशालित्वं विफलतामिति। तथा च कालान्तरे सूर्य्यास्तगमनं प्रति तत्कालीनकिरणानां प्रतिबन्धकत्वं कल्प्यते। एवञ्च सन्ध्याकाले तत्कालीनकिरणरूपप्रतिबन्धकानां सद्भावेऽपि सूर्य्यास्तगमनसम्भवत्येति प्रथमार्थसमर्थनम्। पक्षे विधौ दैवे प्रतिकूलतामनभिमतफलभावनान्मुखतामुपगते सति बह्वभिमतफलोपायशालित्वं विफलतामितीत्यर्थः।

ईषन्म्लानरुचं शिरीषमुकुलं संसृज्य रूपोन्नतिम्।
चित्ताह्लादकरश्छदेश्च विटपो कान्तापि रागोज्ज्वला
आमुक्तः पवनः करोति प्रसभं चित्तोद्भवास्वादनाम्॥

यथा वा अभिज्ञानशकुन्तले कञ्चुकिनो जरावर्णनम्। सप्तमाङ्के सर्व्वदमनस्य सिंहशावकास्कन्दनविक्रमादिवर्णनञ्च।

प्रस्फुटं सुन्दरं साम्यमुपमेत्यभिधीयते॥

प्रस्फुटमिति रूपकादेर्गम्यसाम्याद्भेदाय, सुन्दरं वैचित्र्यजनकम्, प्रस्तुतोत्कर्षजन्यचमत्कारः, तेन चमत्कारस्याजनकं सादृश्यं नोपमालङ्कारः, यथा—'गौरिव गवयः' इत्यत्र नायमलङ्कारः; साम्यं सादृश्यम्। तच्च क्रियागतं गुणगतम् उभयगतञ्चेति। अत्राद्यं यथाभिज्ञानशकुन्तले—

क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः।
निर्व्वास्यतः प्रदीपस्य शिखेव जरतो मतिः॥ (क)

अत्र 'आयाति' 'लङ्घ्यते' इत्यत्र क्रियाद्वयस्य उपमेये उपमाने च साम्यम्। गुणगतं यथा कुमारे—

हरस्तु किञ्चित् परिलुप्तधैर्य्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि॥ (ख)

---

(क) जरतः जरां गच्छतः स्थविरस्येत्यर्थः। मतिर्बुद्धिर्निर्व्वास्यतः निर्व्वाणं यास्यतः प्रदीपस्य शिखेव क्षणात् अल्पक्षणेनैव प्रबोधं प्रकृष्टज्ञानं विकाशञ्च आयाति प्राप्नोति पुनः क्षणात् तमसा मोहेन तिमिरेण लङ्घ्यते आक्रम्यते आव्रियते इत्यर्थः।

(ख) हरस्तु चन्द्रोदयस्य आरम्भे अम्बुराशिः समुद्र इव किञ्चित् ईषत् परिलुप्तं विनष्टं धैर्य्यं यस्य तथाभूतः सन् बिम्बफलाधरोष्ठे उमायाः पार्व्वत्याः मुखे विलोचनानि नेत्राणि व्यापारयामास पातयामास चुम्बनार्थं साभिलाषमद्राक्षीदिति भावः।

अत्र परिलुप्तधैर्य्यं गुण उभयत्रापि समानः। उभयगतं यथोत्तरचरिते—

त्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते।
धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः॥ (ग)

अत्र स्नपयतीति क्रियासाम्यं, स्नेहनिष्यन्दिनीधवलबहल-मुग्धा' इति गुणसादृश्यञ्च।

मालोपमामाह विश्वनाथः—

**मालोपमा यदेकस्योपमानं बहु दृश्यते॥ यथा—**

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च॥ (घ)

प्रकाशितविभिन्नरूपयोरुपमेययोरतिसाम्यप्रदर्शनाय काल्प-निकोऽभेदारोपो रूपकम्, यथाह न्यायवागीशः—

**अभेदो भाषते यस्मिन् उपमानोपमेययोः।**
**रूपकं कथ्यते सद्भिरलङ्कारोत्तमं यथा—॥**

तन्वि त्वद्वदनाम्भोजं लोलालकमधुव्रतम्।
न कस्य हरते चेतो लसद्दशनकेशरम्॥ (ङ)

---

(ग) ते तव, धवला बहला मुग्धा अतिमनोहारिणी स्नेहनिष्यन्दिनी स्नेहवर्षिणी दृष्टिः दुग्धकुल्येव क्षीरसरिदिव हृदयेशं जीवितेश्वरं स्नपयति आर्द्रयतीत्यर्थः।

(घ) स हिमवान् प्रभामहत्या प्रभोज्ज्वलया शिखया दीप इव, त्रिमार्गगया मन्दाकिन्या त्रिदिवस्य स्वर्गस्य मार्ग इव तथा संस्कारवत्या विशुद्धया गिरा वाचा मनीषीव विद्वानिव तया पार्वत्या पूतश्च पवित्रीकृतश्च विभूषितश्च अलङ्कृतश्च एतैर्भूषयतीत्यर्थः।

(ङ) लोलाश्चते अलकाश्चेति लोलालकाः चञ्चलचूर्णकेशा एव मधुव्रता भ्रमरा यस्मिन्-

अत्र वदने अम्भोजस्य, अलके मधुव्रतस्य, दशने च केशरस्याभेदारोपः।

**सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्॥**

इति भट्टपादाः। प्रकृतस्य उपमेयस्य, समेन उपमानेन। सम्भावनञ्च उत्कटकोटिकः संशयः, अप्रस्तुतकोटेरुत्कटत्वञ्च प्रस्तुतकोटेर्निगरणेन जायते, निगरणञ्च प्रस्तुतस्य क्वचिदनुपादानेन क्वचिदुपात्तस्याप्यधःकरणेन भवति यदुक्तम्—

**विषयस्यानुपादानेऽप्युपादाने च सूरयः।**
**अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते॥ (क)**

विषयः प्रस्तुतम्। यथा मृच्छकटिके—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता॥ (ख)

---

तत् तथोक्तं लसन्तः प्रदीप्ताः प्रकाशिताः इत्यर्थः, दशनाः दन्ता एव केशराः किञ्जल्का यस्मिन् तत् तथोक्तम्। त्वत् तव वदनाम्भोजं पद्मं हे तन्वि कृशाङ्गि, कस्य जनस्य चेतः चित्तं न हरते आकर्षतीत्यर्थः, अपितु सर्व्वेषामेव चित्तमाकर्षतीति भावः।

(क) सूरयः कवयः विद्वांस इति यावत्, विषयस्य प्रस्तुतस्य अनुपादाने अग्रहणे, उपादाने ग्रहणेऽपि अधःकरणमात्रेण निगीर्णत्वं निगरणं प्रचक्षते कथयन्ति अधःकरणमेव निगरणमिति फलितम्।

(ख) तमः अन्धकारम् अङ्गानि अवयवानि लिम्पतीव लिप्तानि करोतीव नभः अन्तरीक्षम् अञ्जनं कज्जलं वर्षतीव दृष्टिः चक्षुः असतां पुरुषाणां सेवेव विफलतां निष्फलतां गता दर्शनव्यापाररहित्यादिति भावः। अत्र तमःप्रसरसम्पातरूपौ विषयौ लेपनवर्षणाभ्याम् अधःकृताविति बोध्यम्।

अत्र तमसः प्रसरसम्पातादिरूपो विषयो नोपात्तः। उत्तरचरिते यथा—

समयः स वर्त्तत इवैष यत्र मां
समनन्दयत् सुमुखि गौतमार्पितः।
अयमागृहीतकमनीयकङ्कण-
स्तवमूर्त्तिमानिव महोत्सवः करः॥ (ग)

अत्र विषयः करः उपात्तोऽपि मूर्त्तिमहोत्सवरूपेणाध्यवसितः।

अतिशयोक्तिमाह न्यायवागीशः—

लौकिकार्थानतिक्रम्य योक्तिः सातिशया मता॥

यथा—

अयि कृशोदरि गच्छ शनैः शनैरियमतीव समुन्नतमेदिनी।
प्रतनुमध्यमिदं तव भूरिणा कुचभरेण कदाचन भज्यते॥ (घ)

---

(ग) हे सुमुखि, एष स समयः वर्त्तत इव, यत्र अयं गौतमेन गौतमनन्दनेन शतानन्देन अर्पितः समन्त्रं प्रदत्तः आगृहीतं धृतं कङ्कणं, हस्ताभरणविशेषः, हस्तसूत्रं वा येन तादृशः तव करः मूर्त्तिमान् देहवद्धः महोत्सव इव मां समनन्दयत् अतिशयमानन्दयतीत्यर्थः।

(घ) अयि कृशोदरि, हे क्षीणमध्ये, शनैः शनैर्मन्दं मन्दं गच्छ याहि, यतः इयमतीव अतिशया समुन्नतमेदिनी उन्नतावनताभूमिरित्यर्थः। तव इदं प्रतनुमध्यम् अतिशयक्षीणकटिं कदाचन कर्हिचित् भूरिणा सातिशयेन कुचभरेण स्तनस्थौल्येनेत्यर्थः भज्यते द्विधा क्रियते।

उपमेयस्य यदाधिक्यं स एव व्यतिरेकः। यथोच्यते मम्मटभट्टेन :—

**उपमानाद्यदन्यस्य व्यतिरेकः स एव सः॥**

अन्यस्य उपमेयस्य, व्यतिरेकः आधिक्यम्। स एव व्यतिरेकालङ्कारः। यथा कुमारे :—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखन्तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः॥ (ङ)

अत्रोपमानभूतचन्द्रपद्मापेक्षया उपमेयस्य उमामुखस्याधिक्यगुणवत्त्वकथनात् व्यतिरेकालङ्कारः।

प्रतीयमानसादृश्ययोर्वाक्ययोरेकस्यापि धर्म्मस्य पौनरुक्तिभिया शब्दान्तरेण निर्देशः प्रतिवस्तूपमा, यथाह विश्वनाथः—

**प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः।**
**एकोऽपि धर्म्मः सामान्यो यत्र निर्दिश्यते पृथक्॥**

---

(ङ) लोला चञ्चला लक्ष्मीः शोभा चन्द्रं गता रात्राविति भावः। पद्मगुणान् सरोजस्थितिजनितसुखानीति यावत्। न भुङ्क्ते नास्वादयति, सरोजाश्रिता दिवसे इति भावः। दिवसे कमलं प्रफुल्लतीति कविसमयप्रसिद्धिः। चान्द्रमसीं चन्द्रजनितां चान्द्रीमित्यर्थः। अभिख्यां शोभां न भुङ्क्ते, तु किन्तु उमायाः गौर्याः मुखं प्रतिपद्य प्राप्य द्विसंश्रयां चन्द्रकमलाश्रमजनितामिति भावः। प्रीतिम् आनन्दम् अवाप प्राप। उमाया वदनं चन्द्रः कमलं च नैव शोभाश्च रात्रिन्दिवं समानत्वादिति भावः।

यथा कुमारे :—

मधुश्च ते मन्मथ, साहचर्य्यादसावनुक्तोऽपि सहाय एव ।
समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य ॥ (च)

अत्रानुक्तस्यापि सहजसहायस्य स्वतएव साहाय्यसम्पादने प्रवृत्तिरित्येक एवार्थः शब्दान्तरेण निर्दिष्टः ।

**अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ।**
**निदर्शना हि सेयं स्यादाचार्य्येण यथोदिता ॥(छ)**

यथा मालविकाग्निमित्रे :—

अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता ।
परिकल्पितो विधात्रा बाणः कामस्य विषदिग्धः (ज)

---

(च) हे मन्मथ, मदन, असौ अयमयवसौत्यर्थः, मधुर्व्वसन्तः अनुक्तोऽपि अकथितोऽपि साहचर्य्यात् सहचरत्वात् ते तव सहाय एव भविष्यतीति शेषः । हुताशनस्य वह्नेर्नोदयिता सहायः भव इति समीरणो वायुः केन व्यादिश्यते नियुज्यते न केनापीत्यर्थः ।

(छ) वस्तुनो विषयस्य सम्बन्धोऽन्वयोऽभवन् असम्भवन् अघटमान इत्यर्थः । उपमायाः सादृश्यस्य परिकल्पकः प्रतिपादकः सेयं हि निदर्शना आचार्य्येण मम्मटेन यथोदिता प्रतिपादिता ।

(ज) विधात्रा वेधसा अव्याजसुन्दरीम् अव्याजेन अकापटेन सर्व्वथावचनीयतापरिहारिणेत्यर्थः । सुन्दरीं शोभनां तां मालविकां ललितेन हेलया हस्तपदादिविन्यासेनेत्यर्थः । विज्ञानेन संगीतकलापरिज्ञानेन योजयता शिल्पनिपुणतां कुर्व्वतेत्यर्थः । कामस्य मदनस्य विषदिग्धः विषलिप्तः बाणः इषुरिव परिकल्पितः संसृष्टः । विष-

क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ (झ)

अत्र मन्मत्या सूर्य्यवंशवर्णनमुडुपेन सागरतरणमिवे-त्युपमायां पर्य्यवस्यति ।

**दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिविम्बनम् ॥**

सधर्म्मस्य समानधर्म्मस्य वस्तुनो विषयस्य प्रतिविम्बनं प्रणिधानेव गम्यसाम्यत्वम् । प्रतिवस्तूपमायामेकस्यैव धर्म्मस्य भङ्ग्यन्तरेण निर्द्देश इत्यस्माद् भेदः । यथा मालविकाग्निमित्रे

कदा मुखं वरतनु कारणादृते
तवागतं क्षणमपि कोपपात्रताम् ।
अपर्व्वणि ग्रहकलुषेन्दुमण्डला
विभावरी कथय कथं भविष्यति ॥ (ञ)

---

दिग्धो बाणो यथा तुदति तथेयं स्वभावसुन्दर्य्यपि विभ्रमादिना मन्मनसि कामानल-मुद्दीप्य पीड़यतीति भावः ।

(झ) सूर्य्यः प्रभवति अस्मादिति प्रभवः कारणं यस्य स वंशः क्व ? अल्पविषयो यस्याः तथाभूता मतिश्च क्व ? नानयोः सङ्गतिः कदाचिदपि भवितुमर्हतीति क्वद्वय-स्यार्थः । अहं मोहात् अज्ञानात् उडुपेन भेलेन दुस्तरं सागरं तितीर्षुः अस्मि । अत्र मन्मत्या सूर्य्यवंशवर्णनरूपं वस्तु असवत् उपमायां परिकल्पते इति बोध्यम् ।

(ञ) अयि वरतनु, देवाभीप्सिते, तव मुखं कारणादृते कारणं विना अपराधादि-हेतुं विनेत्यर्थः, कदा कस्मिन् काले क्षणमपि अल्पकालमपि कोपपात्रतां क्रोधभागि-ताम् आगतं प्राप्तम् । अपि तु क्रोधहेतुं दृष्ट्वैव कुप्यसि अन्यथा कथमिति भावः । हेतुशून्ये क्रोधमनुचितं तद्दृष्टान्तेन दृढ़यति विभावरीति, विभावरी रात्रिः अपर्व्वणि

यत्र साधर्म्म्येण वैधर्म्म्येण वा सामान्यं विशेषेण विशेषो वा सामान्येन समर्थ्यते अर्थात् सोपपत्तिकतया दृढ़ः क्रियते सोऽर्थान्तरन्यासः। तदुच्यते भट्टपादैः—

**सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।**
**यत्र सोऽर्थान्तरन्यासः साधर्म्म्येणेतरेण वा ॥**

समर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभावेऽर्थान्तरन्यासः, दृष्टान्ते प्रतिवस्तूपमायाञ्च न तथेति परस्परं भेदः। सामान्यं विशेषेण यथा माघे :—

बृहत् सहायः कार्य्यान्तं क्षोदीयानपि गच्छति।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ॥ (ट)

अत्र द्वितीयार्द्धगतेन विशेषेणार्थेन पूर्व्वार्द्धगतः सामान्योऽर्थः समर्थ्यते। विशेषः सामान्येन यथा तत्रैव :—

यावदर्थगतां वाचमेवमादाय माधवः।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥ (ठ)

---

पूर्णिमाप्रतिपत्सन्धिकालभिन्नं यदकल्पेन्दुमण्डलं यस्यां राहुणा कल्पितं ग्रस्तम् इन्दुमण्डलं चन्द्रमण्डलं यस्यां सा तथाभूता कथं भविष्यति ? न कथमपीत्यर्थः। तत् कथय। पूर्णिमायामेव राहुणा चन्द्रमण्डलं ग्रस्यते किन्तु इतरस्यां निशायां तत् कथयेत्यर्थः। अत्र मुखस्य विभावर्य्याश्च साधर्म्म्येण प्रतिबिम्बनात् दृष्टान्तोऽलङ्कारः।

(ट) क्षोदीयानपि अतिक्षुद्रोऽपि बृहत्सहायः महासहायः सन् कार्य्यान्तं गच्छति, नगापगा गिरिनिर्झरिणी महानद्या सम्भूय मिलित्वा अम्भोधिं समुद्रम् अभ्येति प्राप्नोति।

(ठ) माधवः कृष्णः एवम् उक्तप्रकारां यावान् योऽर्थः इति यावदर्थं साफल्येऽ-

अत्र द्वितीयार्द्धगतेन सामान्येनार्थेन प्रथमार्द्धगतो विशेषोऽर्थः समर्थ्यते। वैधर्म्येण यथा कुमारे :—

इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्ज्जनः॥ (ड)

अत्र द्वितीयार्द्धगतेन सामान्येनार्थेन प्रथमार्द्धगतो विशेषोऽर्थो वैधर्म्येण समर्थ्यते।

यत्र प्रस्तुतानामप्रस्तुतानां वा एकधर्म्मसम्बन्धस्तदा तुल्ययोगितेत्याह विश्वनाथः—

**पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्।**
**एकधर्म्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता॥**

यथा कुमारे :—

यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे।
भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम्॥ (ढ)

---

व्ययीभावः यावदर्धवदानि यस्याः तां वाच्यम् आदाय उक्त्वेत्यर्थः विरराम, महीयांसः महत्तराः प्रकृत्या स्वभावेन मितभाषिणः अल्पवादिनो भवन्तीति शेषः।

(ड) इत्थम् अनेन प्रकारेण आराध्यमानोऽपि सेव्यमानोऽपि स तारक इति पूर्व्वेणान्वयः। भुवनत्रयं त्रिभुवनं क्लिश्नाति तापयति, दुर्ज्जनः प्रत्यपकारेण शाम्येत् उपकारेण न। अत्र क्लेशप्रशमने विरुद्धधर्म्माविति बोध्यम्।

(ढ) सर्व्वशैलाः सर्व्वे पर्व्वताः दोहदक्षे दोहनकुशले मेरौ दोग्धरि दोहके स्थिते

अत्र हिमवद्वर्णनस्य प्रकृतत्वात् तद्गतौषधिरत्नानां द्वयानामपि प्रकृतत्वम्, तेषां दोहनक्रियारूपैकसमानधर्म्मसम्बन्धात् केवलप्राकरणिकविषयोऽयमलङ्कारः। तत्रैव च :—

नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात् कदलीविशेषाः।
लब्धापि लोके परिणाहि रूपं
जातास्तदूर्व्वोरुपमानबाह्याः॥ (घ)

अत्र नागेन्द्रहस्तानां कदलीविशेषाणाञ्च द्वयानामप्यप्रस्तुतानां परिणाहिरूपलाभक्रियायाः समानधर्म्मस्य सम्बन्धात् प्रकरणिकविषयकमिदमुदाहरणम्।

अप्रस्तुतप्रस्तुतयोरेकधर्म्माभिसम्बन्धो दीपकम्। यथाह विश्वनाथ :—

अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते॥

यथा माघे :—

बलावलेपादधुनापि पूर्व्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा।
सती च योषित् प्रकृतिश्च निश्चला
पुमांसमभ्येति भवान्तरेष्वपि॥ (ङ)

---

सतीत्यर्थः। यं हिमालय वत्सं परिकल्प्य पृथुना राज्ञा उपदिष्टां निर्द्दिष्टां धरित्रीं भास्वन्ति प्रभापूर्णानि रत्नानि महौषधीश्च दुदुहुः।

(घ) नागेन्द्रहस्ता गजशुण्डादण्डा इत्यर्थः, त्वचि चर्म्मणि कर्कशत्वात् काठिन्यात्, कदलीविशेषाः एकान्तशैत्यात् अतिशीतलत्वात् लोके जगति परिणाहि विशालं रूपं लब्ध्वापि तदूर्व्वोः तस्याः पार्व्वत्याः ऊर्व्वोः उपमीयते अनेनेति उपमानं तस्मात् बाह्याः परित्यक्ता जाताः प्राप्तेत्यर्थः।

अत्र प्रस्तुतायाः प्रकृतेरप्रस्तुतायाः पतिव्रतायाश्च जन्मान्तरेऽपि स्वकीयपुरुषानुगमनरूपैकक्रियासम्बन्धः ।

एकाधिकायाः क्रियायाः एककर्तृत्वे क्रियादीपकमाह स एव यथा :—

**अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ।**

यथोत्तरचरिते :—

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च सम्मीलयति च ॥ (थ)

वस्तुसादृश्यात् कविप्रौढोक्तिसमुद्भूतो यो बोधः स भ्रान्तिमान् । यथाह विश्वनाथः—

**साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता ॥**

---

(त) जिगीषुणा तेन शिशुपालेन बलावलेपात् बलदर्पात् अधुनापि इदानीमपि पूर्ववत् प्राक्तनजन्मनीव जगत् प्रबाध्यते प्रपीड्यते । सती साध्वी योषित् रमणी निश्चला प्रकृतिः स्वभावश्च भवान्तरेष्वपि अन्यस्मिन्नपि जन्मनि पुमांसं पुरुषम् अभ्येति प्राप्नोति ।

(थ) हे प्रिये, तव स्पर्शे स्पर्शे प्रतिस्पर्शे सुखमिति वा दुःखमिति वा प्रमोहो वा निद्रा वा विषविसर्पः विषस्य व्याप्ततता किमु ? मदः मद्यपानजनितावस्था किमु विनिश्चेतुं विशेषेण निर्द्धारयितुं न शक्यः, हि यतः परिमूढः विवश इत्यर्थः, इन्द्रियगणो येन तादृशो मम विकारः चैतन्यं भ्रमयति च सम्मीलयति च आवृणोति च ।

प्रतिभोत्थितेति 'शुक्तिकायां रजतम्' इति भ्रान्तिर्नामालङ्कारस्य विषयः। यथा—

महाराज, श्रीमन्, जगति यशसा ते धवलिते
पयः पारावारं परमपुरुषोऽयं मृगयते।
कपर्द्दी कैलासं करिवरमथायं कुलिशभृत्
कलानाथं राहुः कमलभवनो हंसमधुना॥ (द)

अत्र भोजराजस्य यशसा धवलीकृते जगति सर्व्वत्रापि परमपुरुषादीनां समुद्रादिभ्रान्तिः कविप्रतिभोत्थितेति भ्रान्तिमानलङ्कारः।

प्रस्तुतं निषिध्याप्रकृतस्य स्थापनमपह्नुतिः। तदुच्यते विश्वनाथेन :—

**प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः॥**

अत्रापि कविप्रौढ़ोक्तिसिद्धमेव। यथा—

नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः।
नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः॥ (ध)

---

(द) हे श्रीमन् महाराज, ते तव यशसा जगति धवलीते शुक्लीकृते अधुना अयं परमपुरुषः पयः परावारं क्षीरसमुद्रं कपर्द्दी हरः कैलासम् अयं कुलिशभृत् इन्द्रः करिवरम् ऐरावतं राहुः सिंहिकेयः कलानाथं चन्द्रं चन्द्रस्य षोड़शभागैकभागमित्यर्थः। कमलभवनः ब्रह्मा हंसं मृगयते अन्विष्यति।

(ध) इदं नभोमण्डलम् आकाशमण्डलं न, अम्बुराशिः समुद्रः, एताश्च ताराः नक्षत्राणि न, अवाः नवीनाः फेनानां भङ्गाः छेदाः। अयं शशी चन्द्रो न, कुण्डलितः मण्डलाकारेण स्थितः फणीन्द्रः शेषः, असौ कलङ्कः न, शयितः मुरारिः माधवः।

अत्र हि प्रकृतानां प्रस्तुतानामित्यर्थः, नभोमण्डलादीनां प्रतिषेधेन अम्बुराशिप्रभृतीनामप्रस्तुतानां स्थापनम् ।

समसनं समासः वाक्यानां संक्षेपः । यत्र संक्षेपेणोक्तिः सा समासोक्तिः । यथोच्यते आग्नेये :—

यत्रोक्ताद्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः ।
सा समासोक्तिरुदिता संक्षेपार्थतया बुधैः ॥

अत्र यत् तत्समानविशेषेण इत्युक्तं तदुपलक्षणम्; तेन तत्समानकार्य्यैः, तत्समानलिङ्गैश्च गृह्यते । यत्र समैर्विशेषणैः कार्य्यैर्लिङ्गैश्च उक्तात् प्रस्तुतादप्रस्तुताद्वाऽन्यो यथाक्रममप्रस्तुतः प्रस्तुतो वार्थो बोध्यते सा संक्षेपोक्तिस्वरूपत्वात् 'समासेन संक्षेपेणोक्तिः' इति व्युत्पत्त्या समासोक्तिः कथिता । संक्षेपश्च एकस्य वचनेनोभयप्रतिपत्तिरिति । अदर्शे, अप्रस्तुताद्वाच्यात् प्रस्तुतस्य गम्यत्वे समासोक्तिरित्यभिहितम् । नव्यास्तु तद्वैपरित्येन प्रस्तुतादप्रस्तुतप्रतीतौ समासोक्तिः, अप्रस्तुतात् प्रस्तुतप्रतीतावप्रस्तुतप्रशंसेत्याहुः । वाच्ये प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः समासोक्तिरिति विश्वनाथादयः । वस्तुतस्तु उभयथापि समासोक्तेरेवाभ्युपगमस्यौचित्यात्तदनुगुणमेव प्राचीनरीत्या लक्षणमुक्तमस्माभिः । क्रमेणोदाहरणं यथा रघौ :—

श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः ।
उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः ॥(न)

(न) श्रुतिसुखाः श्रवणानन्दिनः भ्रमराणां स्वनाः गुञ्जनानि गीतय इव यासां ताः तथा कुसुमानि कोमला दन्तानां रुचः प्रभा यासां तथाविधाः उपवनान्तलताः

अत्र विशेषणसाम्यात् कार्य्यसाम्याच्च प्रस्तुतादुन्मत्तता-रूपार्थादप्रस्तुतो नर्त्तकीरूपोऽर्थः प्रतीयते।

चातकस्त्रिचतुरान् पयःकणान् याचते जलधरं पिपासितः।
सोऽपि पूरयति भूयसाम्भसा चित्रमत्र महतामुदारता॥ (प)

अत्र अप्रस्तुताच्चातकाज्जलधराच्च कार्य्यसाम्यात् प्रस्तुतो याचकः उदाराशयो धनपतिश्च बोध्यते।

यत्राप्रस्तुतस्यापि वस्तुनः प्रशंसा क्रियते, तामप्रस्तुतप्रशंसा-माह दण्डी यथा—

**अप्रस्तुतप्रशंसा स्यादपक्रान्तेषु या स्तुतिः।**
**तन्मुखेन प्रस्तुतस्य निन्दा यत्र प्रतीयते॥**

अपक्रान्तेषु अप्रस्तुतेषु अप्रस्तुतानामित्यर्थः, षष्ठ्यर्थेऽत्र सप्तमी। यथा माघे—

पादाहतं यदुत्थाय मूर्द्धानमधिरोहति।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः॥ (फ)

---

पवनाहतैः अनिलताडनैः किसलयैः नवीनपल्लवैः मत्तैः लयाख्यसङ्गीताङ्गहस्तचालन-सहितैः पाणिभिः करैरिव मधुः सुशोभिरे।

(प) चातकः सारङ्गः मेघवारिप-पक्षिविशेषः, पिपासितः सन् जलधरं मेघं त्रिचतुरान् तत्संख्यकान् पयःकणान् वारिबिन्दून् याचते प्रार्थयते; सोऽपि जल-धरोऽपि भूयसा प्रचुरेण अम्भसा वारिणा पूरयति तत्प्रार्थनमिति शेषः।

(फ) यत् पादाहतं चरणताडितं यत् पादाहन्तुरिति शेषः, मूर्द्धानं मस्तकम् अधिरोहति आक्रामति, तत् रजः अपमाने एव पराभवेऽपि स्वस्थात् देहिनः वरं मनाक् प्रियम् भवतीति शेषः।

च अप्रस्तुतस्य रजसः प्रशंसामुखेन प्रस्तुतस्य अपमान-सहिष्णोर्निन्दा प्रतीयते। यथा वा—

स्वैरं विहरति स्वैरं शेते स्वैरञ्च जल्पति।
भिक्षुकः सुखी लोके राजचोरभयोज्झितः॥ (ब)

कोऽपि दुःखी चिन्तार्त्तः सन् यतिं सन्तोषसारं दृष्ट्वैव-मुवाच। अत्र तेन दुःखिना भिक्षुप्रशंसा तावत् प्रारब्धा। कोऽपि नास्ति परं दुःखदग्ध एवं विचारयामास इति अप्रस्तुतप्रशंसा।

स्तुतिमुखेन निन्दा, निन्दामुखेन वा स्तुतिर्व्याजस्तुतिः। यदाहुर्भट्टचरणाः—

व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा॥

निन्दायाः स्तुतिरूपेण, स्तुतेर्निन्दारूपेण वा पर्य्यवसाने व्याजरूपा स्तुतिरिति व्याजस्तुतिः। मुखे आपाततः, अन्यथा यथाक्रमं स्तुत्यां निन्दायां वा रूढिः पर्य्यवसानम्। क्रमे-णोदाहरणम् यथा—

त्यक्त्वा राज्यं गिरमनुसरन् स्त्रीवशान्मूढबुद्धे-
राज्ञो भ्रान्त्वा गहनविपिने हारयन् मुग्धकान्ताम्।

---

(ब) लोके संसारे राजचोरोज्झितः राजा च चोरश्च राजचोरौ तयोर्भयं तस्मादुज्झितः त्यक्तः भिक्षुकः यतिः सुखी, कथं सुखी? यतः स्वैरं स्वाधीनं विहरति क्रीडति स्वैरं शेते स्वपिति, स्वैरं जल्पति भाषते। कोऽपि नास्ति परं दुःखदग्ध एवं विचारयामास।

सख्यं बद्धा कपिभिरसमं लङ्घयन् कीर्त्तिरय्यां
पूर्वेषां वो विलयमनयो हेमलङ्कां किमेतत् ॥ (भ)

अत्र स्त्रीवशवर्त्तिनो मूढधियो नरपतेर्वचनप्रतिपालनम्, पूर्व्वेषां सगरसुतानां कीर्त्तिलङ्घनादिकञ्चापाततो निन्देव प्रतिभाति, चरमे च पितुः प्रतिज्ञा संरक्षिता, दुस्तरं तोयनिधिमुत्तीर्य्य दुःसहप्रतापो वनितापहारो दशाननो विजितः समूलमुन्मूलितश्चेत्यहो दुष्करं कृतमिति सर्व्वमेव स्तुत्यां पर्य्यवस्यतीति निन्दायाः स्तुतिरूपेण पर्य्यवसाने व्याजस्तुतिः। प्रशंसामुखेन निन्दा यथा—

युक्तं तवैतत् रघुवंशभूपते:
सतां हि सख्यु: परिपालनं व्रतम्।
इतः स्तुति: का जगदीश, निर्म्मला
भवान् यदर्थं व्यवधीन्निरागसम् ॥ (म)

---

(भ) रामं प्रति कस्यचिदुक्तिरियम्। हे राम, स्त्रीवशात् स्त्रैणत्वात् मूढबुद्धे: दुष्टमतेरित्यर्थ:, राज्ञ: अयोध्याधिपतेर्दशरथस्येत्यर्थ:, गि ,वाक्यं 'त्वं वनं गच्छ' इति वाचम् अनुसरन् राज्यं त्यक्त्वा गहनविपिने घोरारण्ये मुग्धकान्ती सुन्दरीं वनितां हारयन् निकषात्मजेनेति शेष:, कपिभिर्व्वानरै: असमम् अतुलनीयं सौख्यं सौहृदं बद्धा सम्पाद्य कृत्वेत्यर्थ:, व: युष्माकं पूर्व्वेषां पूर्व्वपुरुषाणां सगरवंशीयानामित्यर्थ:, अग्र्यां महतीं कीर्त्तिं सागरमित्यर्थ:, लङ्घन् सेतुबन्धनेन तरन्नित्यर्थ:, हेमलङ्कां स्वर्णलङ्कापुरीं विलयं विध्वंसम् अनय: प्रापितवानसि किमेतत् ?

(म) रामं प्रति वालिराजस्योक्तिरियम्। हे रघुवंशभूपते, तव एतत् सुग्रीवप्रीतिकरणमिति भाव:। युक्तम् सङ्गतं हि यत: सतां साधूनां सख्यु: सौहार्द्दस्य परिपालनं परिरक्षणं व्रतम् अवश्यकर्त्तव्यमित्यर्थ:, हे जगदीश, इत: अस्मात् परं निर्म्मला

अत्र प्रियबन्धोः संरक्षणमुचितमेवेति तव सुग्रीवसहायत्वं युक्तमेवेत्यागतस्ततः स्तुतिरपि मित्रकार्य्यार्थं निरपराधस्य जीर्ण-कलेवरस्य शाखामृगस्य मे हननं सर्वथा गर्हितमेवेति चरमे निन्दायां पर्य्यवस्यतीति स्तुतेर्निन्दायां प्रत्यवसाने व्याजस्तुतिः।

यत्रैकमेव वाक्यं तैरेव पदैर्भिन्नैर्वा पदैरनेकमर्थं वक्ति स एव श्लेषः। यथाह वाग्भटः—

**पदैस्तैरेव भिन्नैर्वा वाक्यं वक्त्येकमेव हि।**
**अनेकमर्थं यत्रासौ श्लेष इत्युच्यते यथा—॥**

आनन्दमुल्लासयतः समन्तात् करैव सन्तापकरैः प्रजानाम्।
यस्योदये क्षोभमवाप्य राज्ञो जग्राह वेलां किल सिन्धुनाथः॥(य)

अत्र यस्य राज्ञश्चन्द्रस्योदये क्षोभमवाप्य सिन्धुनाथः समुद्रः वेलां मर्य्यादां जग्राह। शीतकरैः करैः किरणैर्लोकानां समन्तात् हर्षमुत्पादयतः इत्यर्थः, एव श्लेषः। भिन्न-पदैर्यथा—

कुर्व्वन् कुवलयोल्लासं रम्याम्भोजश्रियं हरन्।
रेजे राजापि तच्चित्रं निशान्ते कान्तिमत्तया॥ (र)

---

अतिविस्मृता स्तुतिः का ? यदर्थं यस्याः स्तुत्याः कृते इत्यर्थः, भवान् निरायसं निरपराधं मामिति शेषः, व्यवधीत् निहतवान्।

(य) यस्य राज्ञः चन्द्रस्योदये क्षोभमवाप्य किलेति श्रूयते, सिन्धुनाथः सिन्धुदेशा-धिपो वेलामञ्जलिच्छेदादिकां जग्राह। सदाज्ञां गृहीतवानित्यर्थः, कीदृशस्य असन्ताप-करैः करैः प्रजानां समन्तादानन्दमुल्लासयतो वर्द्धयतः।

(र) चित्रं यो राजा चन्द्रो निशान्ते प्रभाते कान्तिमत्तया कान्तिमत्त्वेन रराज।

उपमानस्योपमेयत्वकल्पनं प्रतीपमाह विश्वनाथः—

प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् ।
निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ॥

क्रमेणोदाहरणं यथा—

यत्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये, तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ (ख)

मुखं यदि किमिन्दुना यदि चलाञ्चले लोचने
किमुत्पलकदम्बकैर्यदि तरङ्गभङ्गिर्भ्रुवौ ।
किमात्मभवधन्वना यदि सुसंयताः कुन्तलाः
किमम्बुवहडम्बरैर्यदि तनुरियं किं श्रिया ॥ (ग)

---

कुवलयोल्लासं भूवलयोल्लासं कुर्व्वन् रम्यां शोभनां भोजश्रियं भोजराजलक्ष्मीं हरन् गच्छन् रेजे अत्यधिकां शोभां विकाशयतीत्यर्थः ।

(ख) प्रकृतां सीतां प्रति रामस्योक्तिरियम् । हे प्रिये, तव नेत्रयोः समाना कान्तिर्यस्य तादृशं यत् इन्दीवरं नीलोत्पलं तत् सलिले जले मग्नं विनष्टम् । तव मुखच्छायानुकारी त्वन्मुखसदृशदीप्तिरित्यर्थः, शशी शशधरः मेघैरन्तरितः तिरोहितः, येऽपि तव गमनानुकारिणी गतिर्येषां तादृशाः राजहंसाः, तेऽपि गताः मानसमिति शेषः । मानसे हंसानां वर्षासु गमनं कविसमयप्रसिद्धत्वादिति भावः । अतः दैवेन प्रतिकूलविधिनेत्यर्थः, तव सादृश्ये न यो विनोदः कथमपि चित्तसन्तोषः तन्मात्रमपि न क्षम्यते न सह्यते । सादृश्यदर्शनादयो हि विरहिणां विनोदा इति लोक-प्रसिद्धत्वादिति भावः ।

(ग) यदि मुखं तस्या विद्यते इति शेषः, तदा इन्दुना चन्द्रेण किम् ? न किमपि प्रयोजनमित्यर्थः । तन्मुखेनैव इन्दुकार्य्यस्य समाधानादिति भावः । यदि चले

प्रथमे प्रसिद्धानामुपमावस्तूनामिन्दीवरादीनामुपमेयत्वप्रकल्पनम्, द्वितीये इन्दुप्रभृतीनां निष्फलत्वकथनम् ।

सहोक्तिलक्षणमाह वाग्भटः—

**सहोक्तिः सा भवेद्यत्र कार्य्यकारणयोः सह ।**
**समुत्पत्तिकथा हेतोर्वक्तुं तज्जन्मशक्तताम् ॥**

अर्थात् यत्र हेतोः कारणस्य तज्जन्मशक्ततां कार्य्योत्पत्तिशक्ततां वक्तुं कार्य्यकारणयोः सह समुत्पत्तिकथा समकालमुत्पादनवार्त्ता भवति सा सहोक्तिर्भवेत् । यथा—

आदत्ते सह यशसा नमयति सार्द्धं मदेन संग्रामे ।
सह विद्विषां श्रियासौ कोदण्डं कर्षति श्रीमान् ॥ (ख)

---

चञ्चले प्रान्तभागे अपाङ्गावित्यर्थः ययोः, तादृशी लोचने विद्येते तस्या इति शेषः, तदा उत्पलानाम् इन्दीवराणां कदम्बकैः समूहैः किम् ? न किमपीत्यर्थः, तत्कार्य्यस्य लोचनाभ्यामेव समाधानादिति भावः । यदि तरङ्गस्येव भङ्गिः कौटिल्यं ययोः, तादृश्यौ भ्रुवौ विद्येते तस्या इति शेषः । तदा आत्मभवस्य अनङ्गस्य धन्वना धनुषा किम् ? नैव प्रयोजनमस्तीत्यर्थः, कामकार्म्मुककार्य्यस्य तद्भ्रुयुगलाभ्यामेव समाधानादिति भावः । यदि सुसंयताः सुष्ठुबद्धाः कुन्तलाः केशाः विद्यन्ते तस्या इति शेषः । तदा अम्बुवहानां मेघानां डम्बरैः विस्तरैः किम् ? नैव प्रयोजनमस्तीत्यर्थः । अत्रापि पूर्व्ववदेव हेतुर्द्रष्टव्यः । यदि इयं तनुः शरीरं विद्यते तस्या इति शेषः । तदा श्रिया लक्ष्म्या किम् ? नैव प्रयोजनमस्तीत्यर्थः, अत्रापि पूर्व्ववदेव हेतुर्व्वोध्यः ।

(ख) असौ श्रीमान् वीरः कोदण्डं धनुः विद्विषां मदेन सह नमयति । विद्विषां श्रिया लक्ष्म्या शोभया वा सह कोदण्डं धनुः कर्षति । विद्विषां यशसा सह आदत्ते गृह्णातीत्यर्थः ।

अत्र यश आदत्ते इति कार्य्यम्। कोदण्डग्रहणन्तु यशोग्रहणकारणम्। कारणस्य कोदण्डस्य तज्जन्मनि कार्य्योत्पत्तौ यशोग्रहणरूपायां शक्तिर्नास्ति।

वाक्यस्य पदार्थस्य वा हेतुरूपेणोक्तौ काव्यलिङ्गम्। यथाह विश्वनाथः—

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्॥

यथोत्तररचरिते—

रे हस्त दक्षिण, मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम्।
रामस्य गात्रमसि दुर्भरगर्भखिन्न-
सीताप्रवासनपटोः करुणा कुतस्ते?॥ (स)

अत्र करुणाया अभावे 'रामस्य गात्रमसि' इति वाक्यम्; 'दुर्भरगर्भखिन्नसीताप्रवासनपटोः' इति पदार्थश्च हेतुः।

यत्र कारणसद्भावं विना कार्य्यस्य दर्शनं दृश्यते सा विभावना। यथाह विश्वनाथः—

विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते॥

---

(स) हे दक्षिणहस्त, मृतस्य द्विजस्य शिशोः जीवातवे जीवनाय शूद्रमुनौ शूद्र-पुत्रे कृपाणम् असिं विसृज शूद्रमुनिं प्रहर इत्यर्थः। कथमहमीदृशमकार्य्यं करवाणीत्याशङ्क्य तवाकरणीयं नास्तीति प्रमाणयन्नाह—रामस्येति, दुर्भरेण वोढुमशक्येन गर्भेण खिन्ना क्लान्ता या सीता तस्याः प्रवासने निर्व्वासने पटोः दक्षस्य रामस्य गात्रम् अङ्गमसि, ते तव करुणा कुतः?

कुमारे यथा—

अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥ (छ)

अत्र मेघोदयकुसुमरूपकारणयोरभावेऽपि वर्षफलरूपकार्ययोरभिधानम् ।

उक्तनिमित्ता, अनुक्तनिमित्ता, अचिन्त्यनिमित्ता चेति त्रिधा विशेषोक्तिरुच्यते यथा—

**सति हेतौ फलाभावे विशेषोक्तिस्त्रिधा च सा ।**
**उक्तानुक्तानिमित्तस्याप्यचिन्त्यत्वे च कुत्रचित् ॥**

क्रमेणोदाहरणं यथा—

धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः ।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥ (ज)

अत्र धनादिरूपहेतुसत्त्वेऽपि उन्मादादिरूपफलाभावः महामहिमशालित्वस्यात्र निमित्तमुक्तम् । अत्रैव चतुर्थपादे 'कियन्तः सन्ति भूतले' इति पाठे निमित्तमनुक्तं भवति ।

---

(छ) वः युष्माकम् अतर्कितोपपन्नम् अभावितोपस्थितं दर्शनं मे मम अपगतो मेघानामुदयो यत्र तादृशं वर्षं तथा न दृष्टं कुसुमं यस्य तथाभूतं फलं प्रतिभाति ।

(ज) ते जनाः धनिनोऽपि धनवन्तोऽपि निरुन्मादाः उन्मादरहिता अप्रमत्ता इत्यर्थः, युवानोऽपि तरुणा अपि न चञ्चलाः चापल्यरहिता इत्यर्थः । प्रभवः निग्रहानुग्रहसमर्थाः अपि अप्रमत्ता अवहिता इत्यर्थः, अतः महामहिमशालिनः महाप्रतापयुक्तस्य इत्यर्थः ।

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥ (क)

अत्र तनुहरणेऽपि बलाहरणे निमित्तमचिन्त्यम् ।

विषमलक्षणमाह वाग्भटाचार्य्यः—

**वस्तुनो यत्र सम्बन्धमनौचित्येन केनचित् ।**
**असम्भाव्यं वदेद् वक्ता तमाहुर्विषमं यथा ॥**

यत्र केनचिदनौचित्येनानवसरतया वस्तुनः पदार्थस्य सम्बन्धमसम्भाव्यं वक्ता वदेत्, कवयस्तं विषमालङ्कारमाहुः । यथा—

क्वेदं तव वपुर्वत्से कदलीगर्भकोमलम् ।
क्वायं राजीमति क्वोग्रदायी व्रतपरिग्रहः ॥ (ख)

यत्र वाक्ये आरम्भे शब्दार्थकृतं विरुद्धत्वमाभाति तत्त्वतो न स एव विरोधः । यथाहुर्भट्टचरणाः—

**विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ॥**

---

(क) स प्रसिद्धः कुसुमायुधः एकः एकाकीत्यर्थः, त्रीणि जगन्ति स्वर्गमर्त्यपातालानि जयति । शम्भुना शिवेन तनुम् अङ्गं हरतापि यस्य कुसुमायुधस्य बलं सामर्थ्यं न हृतम् शिवनेत्राग्निना दग्धोऽपि स सकलं जगत् मोहयतीति भावः ।

(ख) हे वत्से, बाले, इदं राजीमति कदलीगर्भकोमलं रम्भाफलवत् पेलवं तव वपुः क्व? अयं क्वोग्रदायी दुःखार्पणकारी कठोरनियमानुष्ठायीत्यर्थः, व्रतपरिग्रहः इन्द्रियादिनिग्रहनियमाङ्गीकारः क्व? उभयोर्महदन्तरमित्यर्थः । अत्र सुकोमलस्य तव वपुषो दीक्षानुचिता । दीक्षासम्बन्धः, तथासम्भाव्यं कथं वदसि गच्छीण्यसि अनयोरत्यन्तमन्तरमिति फलितार्थः ।

व्यधिकरणयोरिव धर्मयोः सामान्याधिकरण्येन निर्देशो विरोधः। अयमेव विरोधाभास इत्युच्यते। यथा रघौ—

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव॥ (ग)
जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः॥ (घ)

प्रथमे भगवतः प्रभावस्यातिशयित्वादापाततः प्रतीयमानस्य विरोधस्य समाधानम्, द्वितीये नञ्तत्पुरुषसमासे विरोधः, बहुव्रीहिणा परिहारः।

**परं परं प्रति यदा पूर्वपूर्वस्य हेतुता।**
**तदा कारणमाला स्यात् दर्पणाकारसम्मता॥**

यथा—

जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते।

---

(ग) हे देव, को जनः अजस्य जन्मरहितस्य अथ च जन्म गृह्णतः जायमानस्येत्यर्थः, निरीहस्य निश्चेष्टस्य अथ च हता द्विषः शत्रवो येन तथोक्तस्य स्वपतः निद्राणस्य अथ च जागरूकस्य तव याथार्थ्यं तत्त्वं वेद जानाति न कोऽपीत्यर्थः। विष्णुं प्रति देवानां स्तुतिरियम्।

(घ) हे देव, त्वं जगतां योनिः प्रभवः, स्वयम् अयोनिः नास्ति योनिः प्रभवो यस्य यथाभूतः। जगताम् अन्तरसि अन्तः नाशक इत्यर्थः। त्वं जगताम् आदिः मूलकारणम् स्वयं नास्ति आदिर्यस्य तथोक्तः। जगताम् ईशः स्वामी प्रभुरित्यर्थः, स्वयं निरीश्वरः स्वामिरहितः इत्यर्थः।

गुणप्रकर्षेण जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः ॥ (ङ)

यत्र निर्द्धारितात् सारात् ततस्ततः सारं सारं निर्द्धार्य्यते तत्सारमाहुर्भट्टपादाः—

**उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः ॥**

यथा—

राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्व्वस्वम् ॥ (च)

यत्र पूर्व्वं पूर्व्वं परवाक्येन निषेधात् स्थापनं तदेकावलीमाह विश्वनाथः यथा हि—

**पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम् ।**
**स्थाप्यतेऽपोह्यते वा चेत् स्यात्तदेकावली द्विधा ॥**

पूर्व्वं पूर्व्वं प्रति यथोत्तरस्य वस्तुनो विशेषणत्वेन यत् स्थापनं निषेधो वा सम्भवति सा द्विधा बुधैरेकावली कथ्यते। तयोरादिमाया विशेषणेनोदाहरणं यथा—

(ङ) जितेन्द्रियत्वम् इन्द्रियायत्तं विनयस्य शिष्टाचारस्य कारणं हेतुः, विनयात् गुणप्रकर्षः गुणानां प्राधान्यम् अवाप्यते लभ्यते। गुणप्रकर्षेण जनः लोकः अनुरज्यते सम्पदः जनानाम् अनुरागः प्रभवो यासां तथाविधा हि लोकानुरागेणैव सम्पदो लभ्यते इति भावः ।

(च) राज्ये राज्यमध्ये वसुधा लोकवासभूता धरणीत्यर्थः, सारं श्रेष्ठ इत्यर्थः, वसुधायां पुरं नगरं पुरे नगरे सौधं हर्म्यं सौधे हर्म्ये तल्पं शय्या तल्पे शय्यायाम् अनङ्गसर्व्वस्वं वराङ्गना उत्तमा रमणी सारमित्यनेन सर्व्वत्र सम्बन्धः ।

सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम् ।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं मधुवर्षि च ॥ (छ)

अत्र अम्भोजं तस्य भृङ्गम् इत्यादिक्रमेण विशेषणं विधीयते अपरं यथा भट्टी—

न तज्जलं यत्र सुचारुपङ्कजं
न पङ्कजं तद् यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः ॥ (ज)

अत्र क्रमेण पूर्वं पूर्वं वाक्यं परवाक्येन निषेधः ।

## दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते ॥

'मूषिकेण दण्डो भक्षितः' इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवतीति न्यायो दण्डापूपिका तयाऽर्थान्तरबोधनमर्थापत्तिः । यथा रघौ—

---

(छ) यत्र यस्मिन् सरः तड़ागं विकसितानि प्रस्फुटितानि अम्भोजानि सरोरुहाणि दृश्यन्तीत्यर्थः, यस्मिन् तत् तथोक्तम् । अम्भोजं भृङ्गैः भ्रमरैः सङ्गतं युक्तं भृङ्गाः ससङ्गीताः गुञ्जनकारिणः । सङ्गीतं गुञ्जनञ्च मधुवर्षि मधुस्रावि अतिमधुरमित्यर्थः ।

(ज) तत् जलं न आसीदिति शेषः । यत् जलं सुचारुपङ्कजं न, सुचारूणि पङ्कजानि यस्मिन् तत् तथोक्तम् । तत् पङ्कजं पद्मं न, यत् अलीनं षट्पदं लीनं निषण्णः षट्पदः भ्रमरः यत्रेति लीनषट्पदं भ्रमराधिष्ठितं तथा न भवतीति तथोक्तम् अनिषण्णमधुव्रतम् । सर्व्वेष्वेव कमलेषु मधुव्रता निषेदुरित्यर्थः । असौ षट्पदः भ्रमरः न, यः कलं मनोज्ञं यथा स्यात् तथा न जुगुञ्ज न झङ्कारं कृतवान्, सर्व्वेत्र भ्रमराः सुष्ठु गुञ्जितवन्त इत्यर्थः । तत् गुञ्जितम् अव्यक्तमधुरध्वनं न, यत् मनः श्रोतृचित्तं न जहार वशीचकार तन्मयमकरोदिति यावत् सर्व्वमेवालिरुतं मनोहरमभूदित्यर्थः ।

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥ (आ)

अतिकठिनं लौहमपि तापेन गलितं भवतीति तदपेक्षयातिसुकुमारस्य मनुष्यहृदयस्य गलनं सुतरामायातीति अर्थापत्तिः ।

यत्र प्रश्ने सति तदुत्तरं व्यक्तं गूढमुभयमपि वा स एव प्रश्नोत्तरालङ्कारः । यथाह वाग्भटः—

प्रश्ने यत्रोत्तरं व्यक्तं गूढं व्याप्याथवोभयम् ।
प्रश्नोत्तरं तथोक्तानां संसर्गः सङ्करं विदुः ॥

यत्र यथोक्तानां शब्दार्थानामलङ्काराणामुक्तानामिकत्र एकदा संसर्गो भवनं स सङ्करालङ्कारः । प्रश्नोत्तरोदाहरणं यथा—

अस्मिन्नपारसंसारसागरे मज्जतां सताम् ।
किं समालम्बनं साधो ! रागद्वेषपरिक्षयः ॥ (अ)

---

(आ) सः अजः सहजां स्वाभाविकीमपि धीरतां धैर्य्यम् अपहाय त्यक्त्वा बाष्पगद्गदं बाष्पेण नेत्रजलेन गद्गदम् अस्पष्टध्वनियुक्तं यथा स्यात् तथा अतिजडितकण्ठस्वरेणेत्यर्थः, विललाप चक्रन्द । तथा हि अभितप्तम् अत्यधिकोष्णम् अयोऽपि लौहमपि मार्दवं मृदुतां कोमलतामित्यर्थः भजते प्राप्नोतीत्यर्थः, शरीरिषु देहधारिषु का एव कथा ? न कापीत्यर्थः । इन्दुमतीविरहे अजस्य विलापोक्तिरियम् ।

(अ) हे साधो, अस्मिन् इह जगतीत्यर्थः, अपारः पाररहित एव संसारसागरः समुद्रः तस्मिन् तथोक्ते निमज्जतां मग्नानां सतां साधूनां समालम्बनम् आश्रयभूतं किमिति प्रश्ने व्यक्तमुत्तरम् रागद्वेषपरिक्षयः रागद्वेषयोर्विनाश इत्यर्थः ।

क्व वसन्ति श्रियो नित्यं भूभृतां वद कोविद ।
असावतिशयः कोऽपि यदुक्तमपि नोह्यते ॥ (ट)
किमिभं श्लाघ्यमाख्याति पक्षिणं कः कुतो यशः ।
गरुड़ः कीदृशो नित्यं दानवारिविराजितः ॥ (ठ)

---

प्रयोगिका एते तावदलङ्काराः लोकव्यवहार्य्याः ; इतोऽधिकालङ्कारज्ञानमिच्छुना दर्पणादिग्रन्थाः अनुसन्धानीया इति दिक् ।

---

(ट) हे कोविद, विद्वन्, भूभृतां राज्ञां श्रियः सौभाग्यानीत्यर्थः, क्व कुत्र वसन्ति इति वद । असौ अतिशयः कोऽपि यत् उक्तमपि व्यक्तार्थमपि न उह्यते न ज्ञायते ? "असौ" खड्गे, इत्युत्तरं गूढम् ।

(ठ) ऐभं करिणं श्लाघ्यं स्पृहणीयं किम् ? दानवारि मदजलम् । पक्षिणं क आख्याति विः पक्षी । यशः कुतो भवति ? आजितः संग्रामात् । गरुडो नित्यं कीदृग् भवति ? दानवारिविराजितः, दानवारिः नारायणः तेन विराजितः शोभितः । अत्र प्राग् अनुक्तत्वात् पश्चादुक्तत्वाद् गूढव्यक्तः ।

## प्रबन्धविषयाः—

इह तावत् कथितेषु विविधप्रबन्धेषु चेतनाचेतनभेदेन विवरणात्मकरचनाधोलिखितानुक्रमेण विभज्यते विद्वद्भिः। तत्र चेतनपदार्थाः मानवादयः; ते च जातिधर्म्मैर्बहुविधाः यथा पाश्चात्य-प्रतीच्य-हूण-मागध-पौण्ड्रप्रभृतयः। तत्रापि च ब्राह्मण-चण्डाल-धीवरादयः उत्तमाधमभेदेन संख्यातीताः।

अपरे हीनप्राणिनः स्थूलतः भूचर-खेचर-जलचरभेदेन त्रिविधाः। हस्ति-महिष-सिंहादयः भूचराः। पीक-मयूर-सारस-शुकाश्च खेचराः। मीन-कच्छप-नक्रादयः उदकान्त-श्चारिणः। भेक-वृश्चिक-सर्पादयः सरीसृपाः। पिपीलिका-मक्षिकादयः कीटाः, प्रजापतिमधुमक्षिकाप्रभृतयः पतङ्गाः।

## प्रबन्धानामाभाषाः (Hints)

एषु च मानवजातीयप्रबन्धरचनायाम्—प्रथमतो-मानवः कस्मिन् देशीयः, का तस्य भाषा, क वा धर्म्मः पुरावृत्तञ्च किम्, कीदृशी वा सामाजिकावस्था, कीदृशं नैतिक मानसिकविशेषत्वञ्च इत्यादि विषयान् विषदीकृत्य व्याख्यात-व्यम्। अपि नाम यदि तस्य श्रेणीविषयिणी रचना तर्हि विभिन्नदेशेषु तत् तत् श्रेणीयाः केनोपायेन स्वस्वजीविकां निर्व्वाहयन्ति, उत आचारपद्धतिः तेषां कीदृशीति सविशेषं वर्णितव्यम्।

इतरप्राणिविषयकरचनायाम्—को जातीयः सः, तस्याकृति-प्रकृतिस्वभाववर्णायुष्कालावासाहारप्रणाली-प्रभृतीन् विषदीकृत्य लिखनीयम्। सोऽपि मानवानामुपकारी चेत् कं कमुपकारमेव विदधाति सः। यद्यप्यनुपकारी तर्हि वा किं नामानुपकारं घटयतीति सर्व्वं सुसम्पादनीयम्।

एवञ्चापरस्यामचेतनविषयिणीरचनायाम्—कुरु-पाञ्चाल-काशी-काञ्चीप्रभृतयः जनपदाः। नैसर्गिकदृश्यानि पर्व्वत-नदी-प्रस्रवण-वनोपवनानि, शिल्पजातवस्तूनि—चीन-प्राकारकाचकाचन ( गाला ) निर्म्माणप्रणालीप्रभृतीनि। खनि-जानि—लोहाभ्र-हेम-गन्धकादीनि। स्वभावजानि—भू-कम्पादित्यग्रहणप्रचण्डवायुप्रवाहप्रभृतीनि।

एतेषु पुनः स्थानविषयकरचनायाम्—किमभिधेयं तत्स्थानं कुत्र तस्यावस्थानं, सीमा चापि का, दैर्घ्यं विस्तारः, परिमाणफलञ्च किमिति सर्व्वमुल्लेखणीयम्। अपि तु केन पथा तदभिगन्तुं प्रभवन्ति जनाः, तत्रत्यानामधिवासिनां का संख्या का वा जातिः, किमपि च शारीरिकगठनं, कोऽपि धर्म्मः, किमपि वा नैतिकविशेषत्वं, का वा सामाजिकी रीतिः, शासनप्रणाली वा का, तत्रत्योत्पन्नानि द्रव्याणि कानि, प्रधानानि द्रष्टव्यानि कानि, तत् संक्षिप्तविवरणं संक्षिप्तैति-हासिकतत्त्वञ्च यथायथं व्यवहर्त्तव्यम्।

पण्यवीथीविषयिणीरचनायाम्—कियत् परि-

साथमायतनं तस्याः, कति कति द्रव्याणि तत्रोपलभ्यते, कस्माद्वा तानि समागतानि, केन कस्मिन् समये सा स्थापिता, प्रत्यहं तत्र क्रयविक्रयिणः समागमोऽभवत् किं न वा, अस्ति चेत् प्राह्णे किमु पराह्णे, कति आपणाः ते च स्थायिनः किं न वा, कियत् परिमाणमुल्कस्य तत्र कार्य्यमास्ते तत्रत्यानां लोकानां कोयानुपकारो घटते तेनेत्यादि सविशेषं वर्णनीयम्।

गिरिविषयिणीरचनायाम्—कुत्र तस्यावस्थानम्, आयतनञ्च किम्, किंवा तुङ्गातुङ्गत्वं तस्य, कति विधाः पशवः पक्षिणश्च तमधिवसन्ति, किमपि देवायतनम् अस्ति न वा, अस्ति चेत् तस्येतिवृत्तं, मनुष्याः यदि तमध्यासते तर्हि ते कति सभ्याः कति वासभ्याः, गिरिशिखरात् को देशः, का का नदी किमपि वा नगरं दृष्टिपथे संपतन्ति किं नवा, अपि गिरिशृङ्गं किमु प्रस्रवणञ्च विद्यते चेत् तदुल्लेखनीयम्। इतिहासेन सह शैलस्य सम्बन्धो यदि वर्त्तते तर्हि कदा कस्मिन्नेव तद्वृत्तमुपपन्नं तत्सर्व्वं सविशेषं वक्तव्यमिति।

नदीविषयिणीरचनायाम्—कस्मात् सा उत्पन्ना, कीयती विस्तृतिस्तस्याः स्रोतसा गतिश्च कीदृशी, ततः शाखा-नदीप्रादुर्भूता चेत् का तस्याः सीमा, तदुभयरोधसि समुन्नतो ग्रामः किमु नगरं वर्त्तते चेत् जलवर्त्मना तत्र सार्थवाहा वाणिज्यार्थं पण्यसम्भारं नेतुं प्रभवन्ति नवा इत्यादिकं सर्व्वं वर्णनीयम्।

**शिल्पजातवस्तुविषयकरचानायाम्**—( अर्थात् ताजमहलस्य वा चीनप्राचीरादीनां सम्बन्धे रचना चेत् ) वस्तुनः परिचयः, अवस्थानस्थानं, आयतनं, निर्म्माणस्योपादानादिकञ्च यथायथं वर्णनीयम्। एवमपि च कया प्रणाल्या केनोद्देशेन किमर्थं कदा कस्याज्ञया वा निर्म्मितमासीदिति सर्व्वमुपस्थातव्यम्।

**काचविषयिणीरचनायाम्**—काचस्योपादानं निर्म्माणरीतिः, व्यवहारस्य प्रकारः, कस्मिन् कस्मिन् स्थले प्रदेशे वा तस्य कति कति कार्य्यालयाः वर्त्तन्ते इत्यादि विवृतव्यम्।

**खनिजद्रव्यविषयकरचनायाम्**—वस्तुनः आकृतिः, तस्य वर्णः, कति गुणाः, क्व केनोपायेन तत् लभ्यम्। अविशुद्धरूपेण किमु संशोध्य व्यवहार्य्यम्। आकरतः कया प्रणाल्या समुद्धरणीयमित्यादि सविशेषं लेखनीयम्।

**नैसर्गिकविषयिणीरचनायाम्**—सूर्य्यस्य तथा चन्द्रस्य वा ग्रहणे किं वीजं, कदा कस्मिन्नेव समये तत् घटते, आर्य्यपादानां तत्र कीदृशी धारणा, तदा किं किं कार्य्यं कर्त्तुमुपदिशन्ति ते। अधुनातनानां ग्रहणविषयकं मतं पूर्व्वतनाः जानन्ति किं न वा इत्यादि यथायथं वर्णनीयम्।

**भूकम्पसम्बन्धिरचनायाम्**—कम्पनस्य हेतुः, तत्रार्य्यधर्म्मावलम्बिनां साधारणजनानां वा कीदृशी धारणा, कम्पनादृग्तः कोऽपि शब्दः समुत्पद्यते नवा, अस्ति चेत् कीदृशः सः,

तस्मादपि कियदनिष्टं, कियती वानुभूतिः, कीयानप्युपकारश्च प्रभवन्ति जगतामित्यादि समुल्लेख्यम् ।

**उद्भिज्जसम्बन्धिनीरचनायाम्**—के ते उद्भिज्जाः का तेषां श्रेणी, तैर्लोकाः कानि कानि कार्य्याणि कर्त्तुं प्रभवन्ति, उद्भिज्जानामङ्कुराः कया रीत्या शाखाप्रशाखया काण्डरूपेण च परिणताः सन्ति, एवं केरुपायैर्व्यवहारोपयुक्ताः क्रियन्ते सभ्यैरिति विवरणात्मकरचनायां समासतः समावलम्बनीयं । सन्दर्भरचनासु रचयितुर्नवनवोन्मेषविनी प्रतिभैव हि सर्व्वोपरि वरिवर्त्तीत्यास्तां विस्तरया गिरा । अत आदर्शप्रबन्धो यथा—

## कोकिलः—

विश्वेऽस्मिन् निखिलपतत्रिनिकरेषु पिकस्तावत् हि कविजनानां किमु तेषां पांशुपादनिरक्षरहालिकानामपि प्रियो विहङ्गमः। अस्य वर्णः प्रगाढ़श्यामः; चरणौ धूम्रवर्णौ; सुगोले च रक्ते चक्षुषी; संख्येयतः काकसादृश्योऽस्मिन् वर्त्तते बाहुल्येन। अतएवोच्यते कविना—“काकः कृष्णः पिकः कृष्णस्तभेदः पिककाकयोः। वसन्ते समुपायाते काकः काकः पिकः पिकः॥” इति अपि हि काकविषये वर्त्तते जनश्रुतिः कविवाक्यञ्च यथा—“नराणां नापितो धूर्त्तः पक्षिधूर्त्तश्च वायसः” इति तदन्वर्थं एव काके परिलक्ष्यते प्रतिमात्रम्। वस्तुतः पक्षिकुलेषु वायस इव चञ्चलो धूर्त्तश्च नापरः कोऽपि दृश्यते समवगम्यते च क्वचित्। किन्तु तमपि

चटुलं पिकवधू: चातुर्य्येण पराजित्य तस्योपरि सर्व्वथा वरिवर्त्तते। सा हि प्रसववेलायां काककुलायमुपगम्य तस्य डिम्बानि अधःपातयित्वा तस्मिन्नपि च नीड़े स्वितान्यपि स्वाण्डानि सूते। ततः पिककैतवानभिज्ञा काकी निजडिम्बमवबोध्य तानि दीर्घदिनमात्मशरीरतापेन परितापयति। तदनु च प्राप्ते काले तस्मिन्नण्डे स्फुटिते तद्गतशावकान् स्वीयशिशून् परिबोध्य आत्मानमपि वञ्चयित्वा आहार्य्यादिदाने स्तानपि पिकपोतान् परिपोषयति, अवतिष्ठते च च्छायेव तेषामनुसततम्; प्रसाधयति च जीवनं रात्रिन्दिवं सपत्नेभ्यः रक्षति च तान् नितरामाहुः कोकिलपर्य्यायमधिकृत्य आर्य्यमिश्राः— "वनप्रियः परभृतस्ताम्राक्षः कोकिलः पिकः। कलकण्ठः काकपुष्टः—॥" इति यदप्ययं जातिः बाहुल्येन काकपालितः तथापि कदा काकभक्ष्यं कदर्थं भोज्यं हेलया निजभक्षाय न परिकल्पयते। संप्राप्ते आत्मवयसि उपमातरं वायसीं वञ्चयित्वा स्वजातिधर्म्मेण वनोपवनं विलसति। तर्हि प्रधानतोऽस्य भक्ष्याणि रम्भाविम्बफले लतिकाजातानि च कानिचित् वन्यक्षुद्रफलानि।

अपि नाम एष खलु विहगः शुकादिवत्र शिक्षरामनामोच्चरति। तथापि नियम्यैनं पिञ्जरे परिपोषयन्ति अनेकश एव विलासिनः पक्ष्याङ्गनाश्च; केवलमस्य सुकण्ठोत्थकाकलिमाकर्णनार्थम्। अतएवाहुः पण्डिताः "कोकिलानां स्वरो रूपम्" वस्तुतः यद्यप्ययं कुरूपः तथापि सुस्वरेण तोषयति

सर्व्वान् पर्य्याप्तेन। वसन्ते यर्हि चुतमुकुलसंप्रोयमानानिल-कम्पनसमुत्पन्नपत्रान्तरीणो भूत्वायं भीतो भीतः सद्यश्च काषायितकण्ठेन रौति तर्हि मनस्विनामुत योगिनामपि मनसाञ्चल्यमुपपद्यते। सुतरामाह कविराजकुलमुकुटमणिः श्रीमान् कालिदासः कुमारसम्भवे काव्ये—

चुताङ्कुरस्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज।
मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य॥

अपि च तत्रैव। अकालवसन्तसमागमे यद्यपि ध्याननिरतस्य शम्भोः कोकिलकुजनेन ध्यानच्युतिर्घटते इति संमन्य अङ्गुलिसङ्केतेन तान् स्मरानुचरान् वारयति—

लतागृहद्वारगतोऽथ नन्दी वामप्रकोष्ठार्पितहेमवेत्रः।
मुखार्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान् जगेपीत्॥

इति। अयमेव हि पक्षी षट्स्वपि ऋतुषु पुष्पसमये एव बाहुल्येन कूजति। तत्रत्यः स्वरोऽस्य जनाह्लादकरः कविजनवर्णनीयश्च नितरामुच्यते कविना—

"भद्रं कृतं कृतं मौनं कोकिलैर्जलदागमे।
दर्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम्॥ इति

नूनं वसन्तेतरकालेष्वयं मौनमवलम्बते इति यत् कवीनां जनश्रुतिश्च प्रसिद्धिरस्ति तन्नास्माकमभिमतम्। समवगच्छति सर्व्वेवास्माभिः पिच्छरावश्चोऽयं विहगः सर्व्वेष्वपि हि कालेषु शब्दायते किन्तु वसन्तकालोचितचित्तोन्मादकरः तत्तत्र कालं कालमपि न वक्तीति विशेषः। भवतु तथापि वस्य

पुष्पसमयोचितकण्ठस्वरत: ऋषभादीनां पञ्चम: स्वर: समुपजायते इत्याह नारद:—

"निषादं कुञ्जरो रौति गौर्ऋषभं किल ।
अजो रौति च गान्धारं षड्जं रौति मयूरक: ॥
मध्यमं रौति क्रौञ्चोऽसौ धैवतं रौति चातक: ।
पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् ॥

इति । अहो ! धन्यः पक्षी धन्यं ते जन्म ! यन्निविडमन्यतरकोटरान्तरेषु जन्माभिलभ्य सुधाधवलितप्रासादादितलवासिनां तथाजीवनवाणीचरणसंसेविनां पर्णकुटीरोदरतलवासिनां कवीनां च हृष्टं तुल्यमूल्येन संचिनोषि त्वमित्यलं पर्य्याप्तेन ।

अनुशीलनी Exercises

१ । शुकपक्षिविषये—(१) प्राप्तिस्थानम् । (२) आकारादीनां वर्णना (३) स्वभाव: । (४) संयद्दायां नियम: ।

२ । गर्दभविषये—(१) वासस्थानम् । (२) आकारादीनां वर्णना । (३) स्वभाव: (४) मनुष्याणां कस्मिन् विषये उपकारी अयम् ? कृतमांसभक्षणेन भूरुवायोर्मलिनतामपाकरोति । (५) प्रकारभेद: । (६) कथं लोका: न पालयति ।

## वर्षा ( ऋतु: )—

भारतेऽस्मिन् वर्षनिर्द्धारणे षट्सु ऋतुषु वर्षा आषाढ़श्रावणाख्यं मासद्वयं परिकल्पयन्ति पूर्व्वाचार्य्या: । एता: किल गुरुकठोरक्लेशदा: जनानाम् । अस्मिन्नेव समये सदैव नभस्तलो निविड़तमिस्रान्धकारवन्नीलजीमूतमालयावृतोऽस्ति । नं तावदत्र प्राय एव लोकलाऽऽसभया कुललनेव चपला-

नभसि भीता भीता समन्तात् सञ्चर्य्य नयनपथवर्त्तिनो भूत्वा भूयस्तस्मिन्नेव लीयते अत्यतितराम्। एवं तदन्तरिते मुहुर्मुहुरप-चिते तुमुलवत् स्तनितनिर्घोषः समुद्भूय भूयोभूयो विभीषयति जन्तुनतिमात्रम्।

अथ्यच्च हि नियतनीरधरनिस्यन्दितधारया सदैवाऽऽर्द्रमुपपधरणीपृष्ठम्। तेनैव हि पिच्छिलितानि राजवर्त्मानि; पन्थो-पन्थानश्च निरत्यतिशयकर्द्दमक्लिन्ना जाताः। एवमपि तत्र जीर्णपर्णकुटीरोदरवासिनामुटजाच्छादनमन्तरेण भूयसैव कन्था-दिवस्तुचयाः जलसिक्ताः समाजाताः। विशेषतो निखिलेऽस्मिन् तपनकिरणविरहेण विमुग्धाः खलु तावन्तश्चराचराश्चातिशयेन। केवलं निपानाविलोदकान्तश्चारिणो मण्डूकान् अन्तरेणैकोऽपि स्वचित्तशुद्धिमनुभवन्ति लेशतोऽपि, किन्तु ते हि स्वजातीयैः समं गोष्ठीसुखमनुभूय मोदमानाः रात्रिन्दिवं मकमकायन्ते परमाह्लादम्।

जातु अन्तरान्तरा प्रवाति प्रबलं किल प्रभञ्जनो दिवा-रात्राणि व्याप्याविरतम्। नियतवर्षणेन आकीर्णो ह्रदः, उद्वे-जिता नदी, प्रवाति च पयःप्रणाली; वारिपूर्णापि निम्ना धरित्री; तस्मादेव हि कृमिव्यालादीनामधःस्थामावासावनौ जलप्लावन-तया ते धायन्ति गृहिणां गृहम्। तेन हि समयेऽस्मिन् कति जनास्तेषां दशनस्पर्शेनाकालिकमहानिद्रामवलम्बन्ते।

नूनमिदानीं नष्टोज्झिकादितः समुत्पन्ना मशकाः यत्र तत्र मिलीभूय सन्ध्यायामुत प्रातः किमिव विचित्रं ध्वनन्तीति

विदितवन्तोऽत्रत्यजनाः। प्रमाणयन्ति संप्रति शारीरिकतत्त्व-विशेषज्ञाः मशका एव विविधसंक्रामकरोगाणून् सञ्चीय जीव-शोणितैः समं मिश्रयन्ति ; तेन च देशेऽस्मिन् वसन्तादयो-दुर्द्दमनीयाः इतरे च कति रोगाः शतं सहस्रमपि जीवं प्रभुधर्म्मेण सुशास्य कृतान्तपुरमुपस्थापयन्ति इमे किल नष्टाः धूर्त्ताः नगण्याः कोटाः। एवमपि प्रतिनियतजलपातेन मानव-पोतास्तेषां स्वभावजानि कुर्द्दनलम्फनादिकार्य्याणि विधातुम-समर्थतया भग्नस्वास्थ्याः ; प्रौढ़ाः सन्ततं जलेन प्रतिरुद्धमानाः दैनन्दिनं कर्म्म कथं कथमपि कष्टैरुपपादयन्ति ; वृद्धाश्च स्नानाहारकर्म्मणि प्रतिक्षणं प्रमादं गणयन्ति। नितरामिदानीं गृहाभ्यन्तरासीनाः भवितुमर्हन्ति सर्वे ते हि जनाः। तस्माच्च प्रायशः कार्य्यहीनतया वृथामोदैः किमु नगण्यासक्तक्रीड़ादिभिः दिवसमुत्थापयितुं समोहन्ते।

अपरञ्च निदाघतापदग्धाः क्षुद्रमहत्तराः घासाः विविधाश्च वल्लर्य्यः पङ्किलभूमिमासाद्यास्मिन् समये शाखाप्रशाखैराच्छा-दयन्ति प्रायश एव श्यामलां भूमिम्। तत्र च वृश्चिकादिगर-लिनः सुखेन उषित्वा कस्मिन् कस्मिन्नपि उद्वेजयन्ति दंशन्ति वा तत्रत्यान् जनान्। इत्यादि भूयिष्ठदोषयुक्ता अपि वर्षा जगतामुपकारमपि समासादयन्ति।

दृश्यते तावदेता धरणीपृष्ठविलग्नानि पूतिगन्धमयानि दीर्घदिनपर्य्युषितजीवदेहमांसास्थीनि, अन्यान्यान्यपि च दूषितवस्तूनि जलैः संप्लाव्य दूराद्दूरतरमपसारयन्ति एवमाकाः-

माकीर्णमपि नष्टं वायुराशिमपर्य्याप्तवारिप्लावनैः संशोध्य जगतां स्वास्थ्यं जनयन्ति। विशेषतोऽन्यत्तु ज-खरतरसूरकरै-रूषरीकृतभूमेरपि सरसतामापादयन्ति। तेन हि समयेऽस्मिन् कृषीवलाः ओषध्युत्तमं धान्यं वपन्ति। यदेव जगतां प्रधान-खाद्यरूपं परिकल्पयन्ति सभ्याः। शास्त्रवाक्यमपि यथा—

> धान्यानां रुंचकी राजन् सर्व्वं 'गत्हुत्तमम्।
> निवृहीतं हि मुखे यत्नं न कुर्य्यात् प्राणधारणम्॥ इति

वस्तुतः धान्यसदृशमपरं किमपि खाद्यं विश्वेऽस्मिन् अस्ति किं नवेति महानेव सन्देहः। भवत्वेतत् वितथमवि-तथं वा वचः, तत्र मामकानां विचारसहं; परन्तु समयेऽस्मिन् यर्हि नीपकिसलयगुच्छान्तरान्तरा विजृम्भितानि शतसहस्रशः शुभ्रकिञ्जल्कमयानि कुसुमानि, आपिङ्गलोन्मुक्तपरागाङ्कुरित-वर्त्तुलदेहाः कोरकाश्च दिशं मुखरीकृत्य समन्तात् सौरभ-मातन्वन्ति किमु काननावनौ प्रबुद्धानि कनकप्रतिमकण्टकित-काय-केतकप्रसूनकुलानि स्वसूक्ष्मपरागान् मरुत्सहायेन एक-स्मादन्यं ततोऽपि परं देशं वाहयन्ति। शालिक्षेत्राणि च अनन्यसुलभां स्निग्धश्यामतामासाद्य अननुभूतामानन्दरस-धारामुपनयन्ति जनानां चेतसि अत्यतिमात्रम्। तर्हि क एव प्रत्यभिलपितुमुत्सहन्ते यत् प्रावृषमन्तरा एतादृशीं श्रिय-मभिधत्ते अन्य ऋतुरिति।

अन्यच्च—पुरा विविधकारणकूटेन समयेऽस्मिन् यादृशं क्लेशं समनुभवन् जनाः। सम्प्रति महोदारचरितैर्दयाचित-

विभिन्नमहानुभवैः राजपुरुषैश्च लौहवर्त्माऽर्णवयानसेतुप्रभृतिं निर्माय तादृशं क्लेशं बाहुल्येनोपसमयन्तीति नातिरञ्जितं वचः वक्तुं समीहन्ते केऽपि सभ्याः। नापि वा तेषामेषा स्तुतिरित्यपि च समभिव्यक्तुं प्रभवन्ति सहृदयाः। यथा तत्र प्रावृट्वारि-संक्षोभितां महापूरप्रसविणीं सरितमुपतर्त्तुं नौरेव प्राधान्ये-नावलम्बनमासीत् जनानाम्। तेन च प्रायश एव वात्या-भिलुब्धया स्रोतस्विन्या भग्नतरीतया आरोहिणः जलनिमग्नाः जाताः, किन्तु तादृशेषु प्राणहानिसम्भवेषु कर्म्मणि सम्प्रति वैदेशिकसार्थवाहाः वाष्पपरिचालितं जलयानं नियोज्य तादृशात् सङ्कटात् परिरक्षन्ति, जनयन्ति च त्वरितगमनेन जनाना कार्य्यसौकर्य्यमशेषविधं सौख्यञ्च। एवं लौहवर्त्मना वाष्पीय-शकटं व्यवस्थाप्य सर्वेष्वपि ऋतुषु समानभावेन दूराद्दूरान्तरितं देशं कार्य्यञ्च सुगमयन्ति। महावर्त्तविद्यमानायां नाविक-चित्तक्षोभजनन्यां नदीकुलप्रधानायां पद्मायां तथा अन्यान्यायाञ्च लोकविस्मयकरं सेतुं निर्म्माय मामकानां गमनसौकर्यं विद-धति बाहुल्येन, किं बहुना प्रधानेषु राजमार्गेषु इष्टकोपल-खण्डान् विन्यस्य कर्द्दमजनितक्लेशात् गोमहिषपरिचालित-शकटान् तथा पादचारिणो जनान् उद्धृत्य सुखयन्ति अति-मात्रम्। नितरां पुराकालसदृशं वर्षावारिजनितक्लेशमिदानी-मनुभवन्ति कथञ्चिदिति वक्तुं न प्रभवन्ति केऽपि सहृदयाः। यदिच्छया हि एतादृशो मतिर्जायते देशहितैषिणां तं महा-महीयसं सर्व्वान्तःकरणेन प्रार्थयामहे यदुत्तरोत्तरेण ते

इतोऽपि भूयिष्ठं भद्रं विदधीरन् धरित्रीदेव्या इति अलं विस्तरेण।

अनुशीलना Exercises.

१। शीतकालविषये। (१) संज्ञा, प्राकृतिकं दृश्यं तस्य वर्णना। (२) कस्मिन् शीताधिक्यो भवेत्। (३) किं सुखकरं। (४) किमसुखकरं वा। (५) उपसंहारः।

२। वसन्तकालविषये—(१) स्वभावदृश्यं तस्य वर्णना। (२) वृक्षलतादयः पल्लविता भवन्ति। (३) शस्यस्य कर्त्तनसंग्रहश्च। लोकानां किं सुखकरं, असुखकरं वा। (५) साधारणानां मानसिकावस्थावर्णनञ्च।

## इंराजजातिः—

पुरा किलाधिवसन्ति कति क्षुद्रजातीयाः नराः विभिन्नांशेन व्रीटनद्वीपम्। ते हि अन्योऽन्यं कलहं समुत्पादयन्तः सुचिरं कालं नयन्तिस्म। ततो बहुतिथावचिते रोमानीयाः व्रीटनं विजित्य स्वप्रभुधर्म्मेण तत्रत्यान् शासितुमारेभिरे। तेषां शासनसमये ते च द्वीपवासिनः विजेतॄणामाचारधर्म्मादिकमनुकृत्य शनैः शनैरुन्नतिपदवीमधिरोहन्तिस्म; एवं विजेतारोऽपि राजवर्त्मादिप्रभूतदेशहितकराणि कार्य्याणि विधाय सभ्यजनपदवाच्यत्वेन तद्देशमनयन्। ततो गच्छता कालेन तेषामधिकारसमये एंलोसाक्सनजातीयाः व्रीटनीयान् विजित्य स्वीयभुजवीर्य्येणाशामुष्द्वीपवासिनो मनुजान्। अनन्तरं ते व्रीटनस्य इंलण्ड नाम विधाय परस्परादानप्रदानादिविवाहक्रियया, दृढ़बन्धनबद्धाः समबजायत। परं पूर्व्वप्रवर्त्तितशिक्षायाः क्रमविकाशेनेदानींतनेंराजजातित्वेन परिणतिरघटतेति संक्षिप्तं पुरावृत्तम् इंराजानाम्।

समवलोकयन्ते इह तावदेते जातीयाः कर्त्तव्यतत्पराः कार्य्य-कुशलाश्च। परम् एषां कर्म्ममयजीवनमार्गेषु निखिलबाधाविप्रति-पत्तिसमुपस्थितेष्वपि व्यक्तिगतस्वार्थपरतासद्भावेषु च न कदाचिन्नि-जकर्त्तव्यतोऽत्यतिलवापि विच्युतिर्घटते। अपि नाम ते निष्कर्म्म-जीवनं तथा आलस्यपरतन्त्र' जनं निरतिशयं घृणास्पदमामनन्ति, एवमपि यानि कानिचित्कार्य्याणि कर्त्तुमपि न समीहन्ते कदा-चित्किञ्चिन्मात्रम्। नितरां कर्म्मबहुले वर्त्तमाने जगति शाश्व-तिका कार्य्यकुशलता तेषां करतलाधिगतामलकवत् चिरायत्त्व-मिति निःसन्देहं वचः तात्त्विकमेवानुकीर्त्तनञ्च।

नूनमहो! कार्य्यसौकर्य्याय यादृशं नियमानुवर्त्तित्व' युक्तं मानवानां तत् सविशेषं विज्ञानमस्ति इंराजानाम्। तस्मादेव ते दैनन्दिननगन्यकार्य्यनिर्व्वाहार्थमपि निर्द्दिष्टसमयं विधाय कृत्स्न-जीवनव्यापानि यावन्ति कार्य्याणि नियमानुप्राणितानि विहि-तानि; परमनन्यसाधारणाध्यवसायमहिम्ना सभ्यजगति परमविधे-येभ्योऽपि संप्रति अग्रे सरत्वमुपगम्यते।

हन्त! निखिलजनपदेषु ये तावन्तः सन्ति स्वदेशवत्सला-स्तेष्विमे मुख्यतमाः। एषामल्पशिक्षितानां क्षुद्रजनानामपि सदृशाः अपरे केऽपि सहृदयाः निजावासभूमिं स्वजातीयं नगण्यं मन्यन्ते वा तुल्येन प्रीतिप्रवणचक्षुषा द्रष्टुं प्रभवन्ति। परं स्थितेऽपि तेषां परस्परविद्रोहे वहिःशत्रुता निजदेशस्य तथा जातीयस्वाधीनता-याश्च पुष्कलत्व' विधातुं शक्तोर्म्मित्वस्य च समवायो जायते। जगतामितिहासे एतेषां तुल्याः नान्ये केऽपि जातीयाः श्रमशीलाः

समवलोक्यन्ते । नूनं वाणिज्यार्थमेते एकतोऽपरं ततोऽन्यं तस्मादपि च परं देशमटित्वा भूखण्डस्य प्रतीच्यखण्डात् प्राच्यभागं यावत् श्रमानुषिकपरिश्रमेण क्रयविक्रयकार्य्यं विधाय शीतोष्णादिनैसर्गिकं क्लेशं सहन्ते । परं वर्त्तन्ते तत् देशे शतशः अपरिमितार्थपतयः, विद्यन्ते च तेषामगणितदासदासीजनाः तथापि ते तान् प्रति कार्य्यभारं समर्प्य न लभन्ते स्वल्पमात्रामपि तुष्टिम् । नितरां बहून्यपि कार्य्याणि स्वहस्तेन निर्व्वाहयन्तः, प्रभूतानि चेत् धनानि स्वयं पर्य्यवेक्षणेनान्यान्योपायेन च स्वायत्तानि कुर्व्वन्ति । तत्रत्याः स्त्रियः पुरुषाश्च तुल्येन शारीरिकेन तथा मानसिकेन च श्रमेण आत्मनः स्वजातीयानाञ्चाभ्युदयं सततं कामयन्ते । अध्यवसायेन ते यादृशं दुष्करं गुरुकठोरञ्च कर्म्म सम्यक् निर्व्वाहयन्ति, मन्यामहे तानृते नान्ये केऽपि वर्त्तन्ते वसुधायां क्वापि संप्रति तत्सदृशा जातय एवं हि बहुशोविघ्नैः पुनः पुनर्निवार्य्यमाणा अपि लोकलोलितवादविक्षुब्धहृदयाश्च ते स्वाभीष्टान् प्रति अवाधमव्याहतञ्च यत्नमास्थायात्मनः कर्म्म सततं समुत्पादयन्ति निरन्तरम् । ।

किन्तु हा कष्टं ! मामकानां दुर्भागधेयानामतिमात्रम् ; यदेषामनन्यसाधारणं गुणग्राममपहाय निकृष्टेषु बहिर्ल्ललितेषु आपातमधुरदर्शनेषु भारतीयानामनुपयुक्तेषु चटुलविषयेषु वस्तुषु वा नितान्तरसिका वयमिदानीमुपगताः । अतः प्रार्थयामहे भगवतश्चरणारविन्दे कायमनोवाक्यै रतिशयम् ; येनाचिरेण सर्व्वमत्याहितमपहाय स धाता भारतीयान् तत्सादृश्यान् विदध्यात् झटिति वाहुल्येनेति कृतं विस्तरेण ।

## अनुशीलनी :—

अधोलिखितमाभासमवलम्ब्य प्रबन्धो रचितव्यः —

१ । राजपुतजातीनाम्—साधारणवर्णना, दैहिकगठनं, परिच्छेदधारणप्रणाली, भक्ष्यं, भाषा, धर्म्मः, प्रकृतिः, जीवनोपायः, सामाजिकावस्था, पूर्व्वतनानां वीरत्वम्, स्वदेशप्रीतिविषयिनी कापि आख्यायिका ।

२ । शिखजातीयानाम्—शिखानां भारते कुत्र निवासः, देहगठनं, वस्त्रग्रहणप्रणाली, खाद्यादि, भाषा, शिखधर्म्मस्य प्रवर्त्तकः, सामाजिकावस्था, वीरत्वम् ।

३ । चीनदेशीयानाम्—वासस्थानं, दैहिकगठनं, वस्त्रग्रहणप्रणाली, खाद्यादि, भाषा, समाजिकावस्था, धर्म्मः, आचारः ।

---

## गौ :—

गृहपालितेषु पशुषु गौरेव मानवानामतिप्रयोजनीयो जन्तुः । अयं किल प्रायशः पूर्णे वयसि त्रिहस्तपरिमितोर्द्ध्वः पञ्चहस्तदीर्घश्च संवृत्तः । अस्य तावत् हनुतः आरभ्य कण्ठतलं यावत् गलकम्बलः, अंसोपरि ककुद्, दीर्घकेशाग्रयुक्तः पुच्छः, नातिह्रस्वौ कर्णौ, द्वेचापि शृङ्गे, चत्वारश्चरणाः, तेषां मध्यविभक्ताः, वेदसंख्यकाः खुराः प्रतिक्षणमिवायं कर्णलाङ्गुलताड़नैः तथा गात्रचर्म्मस्पन्दनेन

च मक्षिकायाः मशकस्य च दंशनादात्मानं रक्षति। रोमन्थाय ते च भूमिमधिशय्य कृत्स्नं दिवसम्।

नूनं जन्तुरेषः स्त्रीपुंभेदेन द्विविधो। पुरुषजातीयं वृष-षण्ड-बलीवर्द्दादिसंज्ञया, स्त्रियं पयस्वी-गवीप्रभृत्याख्यया च विशेषयन्त्यार्य्यमिश्राः। अपि नाम पुरुषजातीयमिमं मुष्कहीनं कृत्वा सकटोद्वहने हलचालने तथान्येष्वपि प्रभूतकार्य्येषु नियोजयन्ति कृषीबलाः।

अपरा स्त्रीजातीया गौः दशमासं गर्भं विधृत्य सकृत् शावकमेकं प्रसूय किञ्चिदूनवर्षमेकं दुग्धमर्पयति अर्थिभ्योऽतिमात्रम्। मानवशिशूनां तत् प्रधानं खाद्यम्। ऋते च तद्दुग्धं केवलं मातृस्तन्यपानेन स्वल्पसंख्यका एव बाला जगति प्रवर्द्धिता आसन्। एवमपि हि बलहीनस्य तथा रोगिणश्च परमहितकरं पथ्यमेव दुग्धम्। आयुर्वेदे तथार्थशास्त्रे चास्य प्रभूता प्रशंसा आचार्य्यसुश्रुतादिभिर्महर्षिभिः संगीय्यते। यथा हि—"अन्नादष्टगुणं पिष्टं, पिष्टादष्टगुणं पयः" इत्यादि। पाश्चात्यचिकित्साशास्त्रेऽप्यस्य गुणः निरतिशयं कीर्त्त्यते तत्रत्यैः शास्त्रकारैः।

नूनमयं जन्तुः श्वेतकृष्णादिविभिन्नवर्णसङ्करेणागणितवर्णो धरणीपृष्ठे सर्व्वत्र समवलोक्यते। कुत्र जलवातानुकूलैर्हृष्टपुष्टाङ्गः, कुत्र वा प्रतिकूले तेषां क्षीणाङ्ग इति। प्रधानतः पशुरयं शस्य-कल्काहारेण धारयति प्राणान्। प्राग्देशेषु भयालपुराभिधेयस्थानस्य गौः हृष्टपुष्टाङ्गत्वेन प्रसिद्धः, स्त्रीगौरपि च तत्रत्या समधिका दुग्धवती सातिशया सुदर्शना च।

भारतेऽस्मिन् गोदुग्धतो दधि-नवनीतादीनि नानाविधानि द्रव्याणि समुत्पाद्य तेषु शर्करादिसुस्वाद्यवस्तुनिकरमिश्रणैः परमोपादेयानि खाद्यानि समुत्पादयन्ति तत्तद्द्रव्यनिर्म्माणकाः गोपादयो मिष्टान्नकारकाः ।

एवं हि दृश्यते तावत् गोमूत्रं गोमयं क्षीरं दधि सर्पिरिति पञ्चगव्यानि देवस्नानपूजनादिमङ्गलकार्य्येषु नियुक्तानि सनातनधर्म्मप्रतिष्ठकैराचार्य्यवर्य्यैः । आयुर्व्वेदादिविविधशास्त्रेषु च बाहुल्येनैषामैकैकशोऽपि बहुगुणोऽस्माभिः समवलोक्यते । न केवलं तेषु तेषु शास्त्रेषु प्रशंसा श्रुतावपि चास्ते—'आयुष्कं घृतम्' इत्यादि । लौकायतिके वेदविरुद्धवादे च—'यावज्जीवेत् सुखं जीवेद्दृणं कृत्वा घृतं पिबेत्' इति वादोऽस्ति ।

लोकव्यवहारे च दृश्यते कलुषितां भूमिं विशोधयति गोमयेन । तच्च विविधोपायेन पुनर्व्यवहरन्ति सभ्याः, एके शुष्कं कृत्वा वह्निना सन्दीप्य अन्नं पचन्ति अन्ये क्षेत्रे प्रक्षिप्य शस्यानामुत्कर्षमातन्वन्ति; अपरे पूतिगन्धमपाकुर्व्वन्ति च । गोमूत्रं नानारुजाभिव्याप्तस्य परमौषधम् । तच्च विविधोपायेन भेषजैः समं रोगशान्तये परिकल्पयन्ति चिकित्सकाः । निर्णेजकाश्च वस्त्रादीनि तेन परिष्कुर्व्वन्ति । गोचर्म्मणा पादुकादीनि तथा हयनियमनरश्मिप्रभृतीनि विविधद्रव्याणि समुत्पादयन्ति चर्म्मकाराः । एवं गोः शृङ्गं खुरञ्च द्रवीकृत्य शीरिशनाम संयोजकद्रव्यम्, अस्थ्ना खड्गकर्त्तकादीनां करग्रहणस्थानं निर्म्मायन्ति निर्म्मातारः । श्रूयते समवगम्यते च संवादसमवाहिनीपत्रिकातः वैदेशिकाः गोलो-

मानि प्रासादप्राकारादिनिर्म्माणसंयोजकद्रव्यैः समं संमथ्य तेषामुपकरणानामतिदृढ़त्वमामयन्ति। मृतस्य गोः मांसास्थीनि स्थानस्योर्वरत्वं वितन्वन्ति। अतएवेदृगुपकारकं जन्तुं लक्षीकृत्य गायन्ति जलदगम्भीरनिर्घोषिणार्य्यपादाः—

'गवी धात्री तथा पृथ्वी ब्राह्मणी राजपत्नीका।
आत्ममाता गुरोः पत्नी सप्त ता मातरः स्मृताः॥' इति

' हंहो! कष्टं!! कष्टमतीवात्याहितं दग्धभागधेयानामस्माकम्। मातृसदृशीमतुलनीयामपि तां पाश्चात्यास्तथा म्लेच्छाः व्यापाद्य सोदरं पूरयन्ति। तेन हि वर्त्तमानेऽस्मिन् भारते गोसमजाः क्रमेण विरला भवितुमुपसर्पन्ति। विद्यते चास्यापरो हेतुः— पुरा सहृदयाः गोचारणार्थं प्रभूतां भूमिं तथा वापीतड़ागञ्च नियोज्य गोकुलानामायतिं समुन्नयन्; किन्तु संप्रति गोचारणभूमेरभावात् गवां स्वेच्छाहारविहारविरहतया क्रमेण तत्कुलानि क्षीणानि यान्ति। अतः प्रार्थयामहे भक्तिपूर्णेन चेतसा गोमातरं येनाचिरेण तेषां क्षेत्रपतीनां पालकानाञ्च तादृशीं दुर्म्मतिमपाकृत्य विदधातु भद्रं गोदेवतेति कृतमधिकवाग्बाहुल्येन।

## अनुशीलनी:—

अधोलिखितमाभासमवलम्ब्य प्रबन्धो रचितव्यः—

१। महिषविषये—आकारः, स्वभावः, प्राप्तिस्थानञ्च, गृहपालितस्य, तथा वन्यस्यापि च स्वभावः, दलवद्धेन विच-

रन्ति, जलमयं, पङ्किलस्थानमेषां प्रियः, दुग्धात् घृतमुत्पद्यते, चर्म्मास्थिशृङ्गेभ्यः विविधानि द्रव्याणि प्रभवन्ति ।

२ । मेषविषये—आकारः, सर्व्वत्र सुलभः, शीतप्रधानदेशेऽस्य लोम्नः बहुविधानि, राङ्कववस्त्रानि समुत्पदयन्ति, तेषामुत्तमाधमक्रमेण तारतम्यम्, स्पेनदेशे तथा पर्त्तुगाले च मेरिणोनाम मेषः उत्तमलोमत्वेन प्रसिद्धः, लोम्नः कम्बलादीनि जायन्ते, पूरकपिण्डदाने लोम्नः च प्रयोजनमस्ति, चर्म्मनः पादुका वाद्ययन्त्रादीनि प्रभवन्ति, दुग्धं मुस्वच्चतस्यौषधम् ।

३ । अश्वविषये—प्राप्तिस्थानं, प्रकारभेदः, शकटवाही, मृगयार्थिनां परमसहायः, आकारः, उपकारिता, द्रव्यवाही, सैनिकानां तथा राजपुरुषाणां त्वरितगमनाय व्यवहारः, वसायाः 'सावान' नामकवस्तु जायते, कङ्कालात् दात्रादीनां करग्रहनस्थानमुत्पद्यते ।

४ । गर्द्दभविषये—कष्टसहिष्णुः, गृहपालितः, अरण्येऽपि सुसुलभः, अश्वाकृतितुण्ड, कर्णौ दीर्घौ, दृढ़ा एव चरणाः, अश्वखुरवत् खुराः, दीर्घं शरीरं, धूसरोवर्णः, कर्कशशब्दः, शान्ता प्रकृतिश्च, भारवाही, सर्वत्र गमनशीलः, सदयव्यवहारेण सर्व्वकार्य्योपयोगी, निर्द्दयव्यवहारेण किमपि कारयितुं शक्नोति ।

—०००(०)०००—

## पिपीलिका :—

इह किल वसुधायामगणितप्राणिगणगणनायां पिपीलिकातिक्षुद्रकाया कीटजातीया प्राणी। इयं तावत् श्रेणीवर्णविभेदेन बहुविधा। कति क्षुद्राः कति तदपेक्षया स्थूलाः कति वा न स्थूलाः नापि कृशाः, एकाः कपिलवर्णाः, अपरा धूम्राः, अन्या वा धूसरवर्णा इत्यादिविविधयौगिकवर्णमिश्रणेन बहुरूपाः।

अपिनाम तासु का गृहभित्तिविलग्नविलशायिनी, कापि पादपपादगर्त्ते, कोटरे वा; अन्या च तरुपत्रसम्पुटं निर्म्माय तत्र निवसति। पिपीलिकावधूः सितान् बहुडिम्वान् प्रसूयासीमयत्नेन रौद्रवृष्टिप्रभृति नैसर्गिकापद्भ्यस्तथा प्रतिकूलाचारिसपत्नभ्यश्च रक्षति तान् निरतम्। कस्मिन् कस्मिन्नपि पापशङ्कयाण्डानि तुण्डेनाकृष्य एकतः परत्र ततोऽन्यत्र पंक्तिक्रमेण वाहयति।

प्रकृतिरासां स्वजातीयान्प्रति प्रीतिप्रवणा; यदि च कस्मादपि कारणात् कस्याः गृहविवादो वर्त्तते, तथापि विपक्षपक्षमभिभवितुं तमविगणय्य रिपुणा सार्द्धं तुल्यविक्रमेण युद्धमवतारयत्।

नूनमपयासामपरिसीमा शक्तिः। दृश्यते तावदेका कृशकाया स्वतः समधिकं गुरुभारं शस्यं मुखे कृत्वा हेलया समन्तात् परिक्रम्याधत ऊर्द्ध्वं ततश्च नीचदेशं तस्मादपि च यं कमपि देशं यदिच्छाक्रमेण भ्रमति। कृत्स्नं दिनं गुरुकठोरपरिश्रमेण आहार्य्यं संगृह्य दुर्घटाहारवर्षासमयं सुखेनापचितुं विलदुर्गं परिपूर्णतामान-

यन्ति। एवममूषु नैकापि मुहूर्त्तार्द्धसमयमप्यालस्ये नातिक्रामति। घ्राणशक्तिश्चासामतुलनीया, तेनातिदूरस्थान्यपि वस्तूनि प्रत्यक्षवदुपलभ्य पंक्तिक्रमेण भक्षणाय तत्रोपसर्पति तरान्। संसारेऽस्मिन् गलितशवमांसादारभ्य सर्व्वाण्यपि खाद्यानि भक्षणत्वेन परिकल्पयन्ति। अपिच दृश्यते कदाचिदासामुद्गमायेते पक्षौ। तत्र विलान्निर्गत्य पतत्रिबलेन नभस्तलमुत्प्लुत्य परितः परिक्रमितुमारेभिरे। किन्तु क्षीणपक्षबलतया नाधिकक्षणं सञ्चरितुं समर्थाः अतएव हि का गगनतलविहारिणः पक्षिणो भक्षणा क्वापि जले अग्नौ वा स्वदेहं समर्प्य पिपीलिकाजीवनं परिहरति। जनश्रुतिरप्यस्ति :—

"पक्षौ पिपीलिकायास्तु तस्याः संहारहेतवे" इति

इयमत्यतिक्षुद्रतमापि सर्व्वथा आभ्यो निरालस्यमेकताध्यवसायादीन्यस्माकं शिक्षणीयानि। दृश्यते तावदासु एकस्यां कार्य्यासमर्थतायामपरा तस्याः साहाय्यार्थं सविशेषं यतते, तस्यामपि विफलीभूतायामन्या ततोऽपरा इत्यादिक्रमेणान्योन्यं साहाय्यमासां जातीयानां शारीरिको धर्म्मः। समवलोक्यते च अत्यतिगुरुभारमेका नेतुमसमर्था चेत् द्वित्राः एकीभूय तस्याः साहाय्यं कुर्व्वन्ति। इत्यादिक्रमेण ताः गुरुकठोरकार्य्यमपि निरतिशयं लघीयत्यतितरान्। नितराममुस्मिन् जगति सर्व्वेषामेव प्राणभृतां निरालस्यादिप्रधानगुणत्रयमाभ्यः शिक्षणीयमिति कस्तत्र सन्देहः। आशंसामहे नवनीतकोमलहृदयाः प्रियबालकाः! यद्यपोरनामनुकुर्वीध्वं, तर्हि दुःखदैन्याहितभारतभूमेरीदृशोऽसहनीयक्लेशस्य नाचिरेण महाजलनिधेरपरदेशसमुपगच्छेदिति सुधा बहुवागुपन्यासेन।

## अनुशीलनी :—

अधोलिखितमाभासमवलम्ब्य प्रबन्धो रचितव्यः—

१। वल्मीकविषये—वासस्थाननिर्म्माणप्रणाली, आहारः, मानवानां किमनिष्टं कुर्वन्ति, पक्षिप्रभृतिप्राणिनामिमे भक्ष्याः, केनोपायेन मानवानामनिष्टं कुर्वन्ति।

२। मत्कुणविषये—आकारवर्णना, वर्णः, वासस्थानं, कथं मनुष्याणां विरक्तिकरः, केनोपायेन विनाशं कर्त्तुं प्रभवन्ति नराः।

---

## नक्रः—

इह किल निखिलजलचरजीवनिवहेषु नक्रोऽतिभीषणतमो जन्तुः। अस्य तावत् गृहान्तश्चारिण्याः गृहगोधिकायाः सदृशमङ्गगठनम्। गृहगोधिकायास्तु चतुःपञ्चाङ्गुलिपरिमितायतिः ; किन्तु जन्तुरयं द्विहस्ततः आरभ्य सप्तदशाष्टादशहस्तपर्य्यन्तदीर्घः संवृत्तः। एवं तस्य सर्व्वावयवस्तावत् कर्कशकठीनचर्म्मणा आवृतः ; तच्च शल्कसदृशैश्चिह्नैश्चिह्नितम्। एवमपि चतुर्षु चरणेषु प्रखरनखरनिकराः सैन्यानां समरसहायकास्त्राणीव सततं तस्य सहायाः भवन्ति। विरणारितास्ये तीक्ष्णादशनसमूहा ऊर्द्धोऽधोभावेन घनश्रेणीनिबद्धाः शङ्कव इव वर्त्तन्ते। स्रोतस्विन्याः अगभीरे अम्भसि सततं सञ्चर्य्य पुलीनविहारिणो गोमहिषादीन् आक्रम्य प्रायश एव

आहार्य्यं कल्पयति तराम्। कस्मिन् कस्मिन्नपि च तटभूमिमागत्य तत्रत्यान् जन्तून् पुच्छप्रहारेण विताड्य दशनमध्यवर्त्तिनो विधाय जले निमज्जति।

अस्ति तावदस्य श्रेणीवर्णविभेदेन द्विसंख्यका जातिः। एकः किल कृष्णाभः, स पञ्चहस्त उत षट्हस्तपरिमितो वा दीर्घः सम्बृतः; वापीतरागादिषु सञ्चर्य्य तत्रत्यान् मत्स्यान् भक्षयित्वा प्राणान् धारयति अतोऽस्य मत्स्याशितकुम्भीरसंज्ञा।

अपरः कपिशवर्णः मत्स्याशितनक्रात् विपरीतः; अमितशक्ति-सम्पन्नः हिंस्रप्रकृतिश्चेति। नूनमस्य महत्यामपि बाधासमुपस्थि-तायां कदाचिदपि निजलच्यतो विच्युतिर्न्न घटते। दूरस्थं निक-टस्थं वा लक्ष्यं नरं महिषं वा सकृत् दृष्ट्वा अम्भसि सर्व्वावयवान् निमज्य द्रुतमुत्पत्य तं तुण्डेनाकृष्य गभीरजलमुपसर्पति। तस्माच्च द्वित्रिकल्पः समुत्प्लुत्य भूयो निमज्य गृहीतस्य आमरणं सलिल-तलदेशे अवतिष्ठते। ततो नरादिपिसितं पर्य्युषितं कृत्वा चर्व्वण-मन्तरेण कङ्कालसहितं गलाधःकरोति। प्रवादवादस्तावद्दीदृशः कुम्भीरजठरवह्निर्जीवमांसानि पचति, परं तेन सह भक्षितान् कङ्कणाद्यलङ्कारान् न पाचितुं समर्थोऽस्ति; नितरां प्रायश एव तदुदरे तान् लभन्ते व्याधवृत्तिगृहीतारो जनाः। नूनं तत्र वय-मुदासीनाः सर्व्वतस्तत् प्रमातार एव प्रमाणम्।

अपि जानीमहे जन्तुरयं शीतागमे आहारमपहाय सर्व्वं दिनं वालुकामात्रसनाथे नदीसैकततले आतपतापेन तापयति तनुम्। तत्र भये समुपस्थितेऽपि सहसा जले निमज्जितं नाभिकाङ्क्षति, एवं निम-

ज्जितेऽपि अचिरेण भूयः पूर्व्वस्थानमधिकरोतीति जातिरस्य चिरन्तनो देहधर्म्मः। शीतात्यये पुनरेष निजभावमासाद्य पात्रापात्रम-विवेच्य हिनस्ति जलस्थलचरान् जीवान्। तत्र चणी च नक्री गर्भं गृहीत्वा प्रसवकालसमुपस्थिते नदीकुलादारभ्य तटभूमिः कियन्तं यावत् गर्त्तं कृत्वा निर्जले देशे सकृत् पञ्चदश षोड़श वा अण्डानि प्रसूय नक्तं दिनं क्रुद्धा व्याघ्रीव रक्षति विलमार्गम्। स्फुटिते च डिम्वे शावकान् कियद्दिनं आपदुभ्यः संरक्ष्य यावत् तेषां शक्ति-सामर्थ्यं पूर्णत्वं नोपजायते तावत् तैः समं च्छायेव विचरति सलिलान्तरम्। शावकानामात्मरक्षणशक्तिसमुपचिते शनैः शनै-स्तान् अपहाय यथाभीष्टं देशमुपसर्पति।

अहो: धन्या मानवानां बुद्धिवृत्तिः, धन्या तेषां शक्तिरीदृशमपि दुर्वृत्तजन्तुं विविधोपायेन व्यापाद्य चर्म्मणा पेटिकोपानहादीनि बहुविलासिजनचित्ताकर्षकाणि वस्तूनि समुपनयन्ति। एवं केऽपि प्राकृतिको जनास्तस्य दन्तास्थिप्रभृतीनि वातवेदनारोगप्रशान्तये कल्पयित्वा धारयन्ति कटिकण्ठादिदेशेषु देशेऽस्मिन्। किन्तु वयं तेभ्यः पूर्णं विभिन्नाः, भिन्नाः प्रकृतयश्च नितरामुदासीनाः। परं सविनयं प्रार्थयामहे भगवन्तम् ईदृशं जीवानिष्टकारिणं जीवं संसारात् दूरीकृत्य स विदधातु श्रेयः जलस्थलचारिणां प्राणभृता-मिति किमधिकवाक्प्रपञ्चेन।

—०—

## अनुशीलनी :—

अधोलिखितमाभाषमवलम्ब्य प्रबन्धो रचनीयः :—

१। कर्कटविषये—आकारादिवर्णना, प्रकारभेदः, प्राप्तिस्थानं ग्रहणनियमः, व्यावहारस्य प्रकारः, मांसस्य गुणकीर्त्तनम्।

२। जलहस्तिविषये—स्थूलशीर्षः, चतुष्कोणास्य नासिका, स्थूलौ कर्णौ, क्षुद्रे चक्षुषी च, गुरु स्थूलञ्च शरीरं, लाङ्गूलं ह्रस्वं, तैलाक्तं सच्छिद्रं चर्म्म, सर्व्वेषु चतुर्षु चरणेषु चतस्रः अङ्गुलयः, जलस्थलचरः, आफ्रिकादेशस्य ह्रदे तथा महत्यां नद्यां निवासः, तृणपत्रादिभोजी, जले द्रुतगामी स्थले सम्यक् चलितुमसमर्थः।

—:*:—

## प्रजापतिः—

जगत्यस्मिन् समस्तपतङ्गजातिनिकरेषु प्रजापतिरत्यतिमधुर-दर्शनो नभस्तलविहारी क्षुद्रवपुष्मान् प्राणी। अस्य तावत् षट् चरणाः चत्वारः पक्षाः देहतुलनया सुगोले महती चक्षुषी, शुण्डाकृतितुण्डम्, तस्य तत् कामनामात्रेण ह्रस्वदीर्घत्वं जातम्। पतत्रेषु कुसुमकिञ्जल्करेणुपेलवाः केऽपि पदार्थाः सन्ति। स्वीय-प्रभया दीप्यन्ते ते महार्घरत्नवच्चाकचिक्यं नातिमात्रम्।

नूनं दृष्यते तावदिमे जातीयाः श्वेत-कृष्ण-कर्वुर-पाण्डरादि-नानावर्णैश्चिताः संख्याकरणासमर्थाः क्षुद्रा महत्कलेवराः विचरन्ति यथा तथा धरणीमण्डले सदा सर्वदा। एतेषु एके केवलं कृष्ण-वर्णाः शुभ्रवर्त्तुलचिह्नैश्चिह्नितपक्षाः, अपरे एतदुभयवर्णमिश्रणेन

पीतपाण्डरादिवर्णैरुपचितवर्णाः क्षुद्रैर्महत्तरैर्वा तिलचिह्नैरङ्किताङ्गाः, अन्येऽपि वा सप्तवर्णसङ्करजातमुग्धदर्शनाः परस्परं सम्भूय विचुग्रतिक्रमेण वा वसन्ते इतस्ततः सञ्चर्य्य पुष्पं पुष्पान्तरमुपविश्य तस्य रसकोषे निवेश्य मुखशुण्डं विधुनोति मुहुर्मुहुः पक्षौ। पीते चापि रसे माध्वीकरसोन्मादनया उन्माद्य द्वित्राः ऊर्द्धोऽधोभावेन परिक्रामन्ति चलन्ति च हेलया एकतः अपरस्थलम्।

किन्तु कष्टं! प्रसूनचारि-शिलीमुखप्रभृतीनां यथा मधुसञ्चयकोषमण्डरक्षणक्रमश्च वर्त्तते, परमेषां तत् किमपि न विद्यते, नितरां तरुपल्लवसंस्तरे प्रसूननिकरे वा निवसन्ति कृत्स्नं जीवनम्। तेन च प्रायश एव विहङ्गमा आहारं कल्पयित्वा धातुरपूर्वसृष्टिं जीवमेनं विलोपयन्ति क्लेशपरिशून्यया चेष्टया।

एषु च स्त्रीप्रजापती पादपपत्रे काण्डे वा सकृदतिसूक्ष्मान् बहून् डिम्बान् प्रसूय यत्र तत्र विहरति लीलाचञ्चलविग्रहेण। ततो द्वित्राहमन्तरेण ते चापि डिम्बाः स्फोटित्वा कीटतनुमासाद्य क्षुधया दंदह्यमानाः तरुपत्राणि प्रयोजनतया वल्कलान्यपि च आकण्ठं भक्षयित्वा अष्टौ उत दशदिनपर्य्यन्तं वा सुप्तिमासाद्य मृतवत् संतिष्ठन्ते। तस्मिन्नपि च क्षणे तेषां मुखतः केऽपि पदार्थाः निर्गत्य कीटानां प्रावरणीभूय क्षौमसूत्रपरिविभ्रमाः वर्त्तन्ते। ततःपरं पक्षमध्येन तदावरणं संछिद्य सपत्राः ते कीटाः प्रजापतिरूपेण बहिरागत्य विचरन्ति देहधर्म्मेण।

ईदृशं जीवमपि तथा तेषां नयनमनोन्मादनं सुरम्यं

पक्षचित्रं संविधाय विमोहयति यो मामकान्तिनात्रमिह जगति स लोकोत्तरातिशायी परात्परपरमेश्वरोऽनुक्षणं किं नु स्मरणीयः प्राणभृतामिति कृतमधिकवाक्येन ।

## अनुशीलनी :—

अधोलिखितमाभाषमवलम्ब्य प्रबन्धो रचनीयः—

१। अलिविषये—षट् पदाः, स्वर्णाभः, कृष्णचिह्नैश्चिह्नित-शीर्षम्, सूचीमुखं, भारते, स्पेने, इटालीदेशे, मिशर-प्रभृतिदेशे च बाहुल्येन अस्य प्राप्तिः, परिश्रमी कार्य्यकुशलो नीडनिर्म्माण-कौशलं तस्याकृतिश्च मधुक्रमस्य प्रतिकोठरे डिम्बान् प्रसूयते, एक-स्मिन् मधुचक्रे चतसृभिः श्रेणीभिर्म्मक्षिका विभक्ताः, मधुसंग्रस्य प्रणाली, मधुनः व्यवहारः, मधूत्यस्य प्रयोजनीयता, अस्मिन् देशे कुत्र मधुनः प्राचुर्य्यम् ।

२। मशकमक्षिकयोः—आकारवर्णनाः उत्पत्तेर्विवरणम्, प्रकारभेदः, मनुष्याणां किमनिष्ठमुत्पादयति, केनोपायेन सञ्चार-यन्ति रोगान्, मशकमक्षिकाभ्यां केनोपायेन परित्राणमसमर्थः ।

## सर्पः

इह खलु जगति संख्यातीतप्राणिगणगणनासु सर्पोऽति-भीषणतमः सरिसृपजातीयो जन्तुः । नूनमस्य रज्जुवत् वल्लरी-वद्वा शरीरगठनम्, गोलाकारे चक्षुषी, ते चात्यति प्रोज्वले, एवं ताभ्यां कर्णौ विनापि श्रवणविषयमवधारयति । सोऽयं जीवः चतुरङ्गुलितः आरभ्य सप्तदशाष्टादशहस्तपर्य्यन्तायतियुक्तः संवृत्तः

एवमस्य श्वेतलक्षणविभेदेन संख्यातीता: जातिवर्णा: धरणीतले समुपदृश्यन्ते केऽपि शुभ्रा: फनहीना: फनयुक्ता वा, केऽपि कृष्णा: आशीविषसमन्विता: फणित्वेन प्रसिद्धा: दंशनमात्रेण प्राणिन: प्राणयात्रापहारका: ; केऽपि वा पाटलादिवर्णमिश्रणेन विचित्र-चित्राङ्गा:, प्रतुग्रत इमे नयनमनोविमोहका एव। किन्तु भगव-ज्जगत्पतेर्नियमानुसारेण स्वल्पाधिकमात्रया सर्वेषामेव विषकोषो-वर्त्तते आस्यान्तरे दशनमूले। ते तु दशना: गोस्तनचुचुकानीव सूक्ष्मरन्ध्रयुक्ता: ; नितरां दंशनवेलायामाघातेन विषकोषात् तच्छिद्रत: विषं स्रवित्वा प्राणिन: रक्तेन सह मिलित्वा सकलानि रक्तानि विषरूपेण परिणमयति।

अपि किमहो! धातुरपूर्व्वा सृष्टि:! एष: खलु जीव: निरा-हारेण दीर्घदिनमपि केवलवायुमात्रभक्षणेन प्राणान् धारयितुं शक्नोति। अतएवाहस्म आचार्य्यो हेमचन्द्रोऽस्य पर्य्यायमधिकृत्य"··· सर्पोऽहि: पवनाशन:" इति। आहार्य्याणि तावत्साधारणसर्पाणां जातिभेदेन विविधानि; जलचारिण: प्राधान्येन मत्स्या: ; वृक्षविहारिण: क्षुद्रकलेवरा: विहङ्गमा: ; भूस्थानां मूषिका:, भेकाश्चेति। सर्व एव ते द्विजिह्वका: रसनान् प्रसारयन्ति सङ्कोच-यन्ति च प्रतिमुहूर्त्तमतिमात्रम्। ये तावदत्यतिशरीरा: ते हि कपिवराहादीनपि वृहदाकारान् जन्तून् विगृह्य लाङ्गूलेन वेष्ट-यित्वा क्रमश: गलाध:कुर्वन्ति। ग्रीष्मप्रधानप्रदेशा हि एतेषामुत्-पत्तिभूमय:। तद्देशे हि आवर्ज्जनापूर्णे देशे भूगर्भे वृक्षकोटरे भित्तिगात्रे वा विलं कृत्वा तत्र सकृत् बहून् डिम्बान् प्रसूय सर्पो

यथा तथा चरति। कालक्रमेण तानि अण्डानि स्वतः स्फोटित्वा सर्पशिशुरूपेण परिणमन्ति।

ततो जातु सर्पी स्वशिशून् अनुसन्धाय भक्षयतीति जनश्रुतिर्वर्त्तते। अपरं हि स्वरिसृपप्रधानाः इमे भूजगाः शीतागमे भूगर्भे भग्नगृहतलं वा उपगम्य कृत्स्नं हिमर्त्तुं विश्रमन्ति। तत्र महत्यामपि वाधासमुपजातायां तस्मान्नोपसर्पन्ति। शीतात्यये च धरणीतलात् वहिरेत्य जीर्णां त्वचं विहाय आहारान्वेषणार्थं समन्तात् विचरन्ति तस्मिन्नेव एते भीषणतमाः जाताः रात्रौ दूरात् दूरतरं देशं पर्य्यटन्ति। त्रिंशत् ततोऽद्दतनं वा वर्षं जीवन्तीति।

आहितुण्डिकाः हि विविधोपायैरेतान् तीव्रहालाहलिकानपि विगृह्य विषदन्तमुमुत्पाद्य दर्शकेभ्यः विविधक्रियाकौतुकं दर्शयन्ति आहरन्ति च ते विषकोषतो विषम्। तस्मात् च आयुर्वेदोक्तसूचिकाभरणप्रभृतीनि, वैदेशिकान्यपि कोव्रा (Cobra) नामकानि भेषजानि समुत्पादयन्ति शारीरिकशास्त्राभिज्ञाः।

आमेरिकाप्रदेशे विद्यते कश्चित् शिञ्जनकारी (Rattle snake) भुजगः। तस्य पुच्छाग्रे किङ्किनीव शब्दकारिणी वर्त्तते कापि घण्टिका; तस्मात् तस्य गमनवेलायामुत्पद्यते कोऽप्यव्यक्तशब्दः। तेन तत्रत्यजनाः सतर्कतामवलम्बितुं प्रभवन्ति तत्तीव्रहालाहलिकात् भुजगात्।

अपि नाम एतेषु व्यालेषु वर्त्तन्ते अनेके ये हि वंशीरवश्रवणेन मुग्धा भवन्ति। तस्मादेव हि सर्पजीविकाः वंशीवादनेन तैः

समं यथेच्छं क्रीड़ितुं प्रभवन्ति। नूनमेते अत्यतिक्रूराः कृतघ्नाश्च ; ये हि यत्नेनैतान् परिपोषयन्ति पालयन्ति च तान् प्रत्यपि च कथं कथमपि स्वदौर्यैन्यमभिव्यक्तुं न समीहन्ते किञ्चि-न्मात्रम्। अस्ति तावदेतद्विषयिनी कापि विचित्रा कथा, यथा— कस्मिंश्चित् शीतकाले तुषारावृते पथि हिमानीसिक्तं मृतकल्पं क्षुद्रमेकं पन्नगशिशुं निपतितं पश्यतः कस्यचित् कृषीवलस्य तस्मिन् करुणाभिजाता। ततः स तं गृहं नीत्वा यत्नेन वह्नि-सन्तापप्रहारदानेन जीवयामास। अथ सोऽहिपोतः लब्धजीवनः स्वीयदौर्जन्यात् कर्षकस्य पुत्रदारान् प्रत्यधावयत्। तस्य तन्मन्दभावमभिज्ञाय स चेत्राजीवः तमुवाच—रे रे सरिसृपाधम ! क्रूरपापिष्ठ ! एष ते प्राणदातुः पुरस्कारः ? अतः गृह्यताम् स्वकर्मफलमित्युक्त्वा हस्तस्थितेन लगुड़ेन तं ताड़यामास ; तेन स सर्पार्भकः पञ्चत्वं गतः इति।

भवतु तद्यथातथा, ईदृगनिष्टकारिभ्यो यदिष्टत्वमस्माभिरुप-लभ्यते, तेन वक्तुमुपयुज्यते ; धन्यो हि परमकारुणिकः स्रष्टा ! यदीदृशेऽपि सद्यःप्राणनाशके विषे आसन्नमृत्युपुरीपगतस्य जीवनाय पीयूषरूपेण तत् कल्पितमिति किं विस्तरेण।

## अनुशीलनी:—

१। अधोलिखिताभासवलम्व्य प्रबन्धोरचनीयः। कच्छपविषये, साधारणवर्णना, आकारः, अवस्थानं, आहारादयः, व्यवहारः— अनेके अस्य मांसं भक्षयन्ति। उपाख्यानं--हितोपदेशकच्छपकथा।

# श्रीश्रीदुर्गापूजा

अस्मिन् किल भारतभूमौ सर्व्वत्र वेदानुगते वर्णाश्रमे श्रीश्रीदुर्गापूजामहोत्सवः केवलं वङ्गेषु वर्त्तमानः समुपदृश्यते। वङ्गान्तरितप्रदेशेषु रूपान्तरितेनास्मिन्नवसरे देवीपूजनं विद्यमानमपि न वङ्गीयार्च्चनवत् प्रदेशव्यापिमहोत्सवरूपेण समनुष्ठीयते।

वङ्गदेशेभ्योऽन्यत्र आश्विनशुक्लप्रतिपदमारभ्य महानवमीपर्य्यन्तं नवरात्रानुष्ठानवार्त्ता श्रूयते। तदर्च्चनं प्रधानतो जयाख्यमार्कण्डेयपुराणान्तर्गतसप्तशतीश्लोकात्मकदेवीमाहात्म्यस्य प्रत्यहमेकावृत्तिपाठरूपं साधारणप्रकारदेवीपूजावसानकमात्रम्। तन्नवरात्रानुष्ठानं निर्दिष्टसंख्यकपुरोहितमन्तरेण नगरवासिनां केषामपि नयनगोचरं स्यात्। यद्यपि च महद्भिमतां गृहेषु जातु भवनद्वारि नहवताभिधानस्य नवरात्रं यावत् त्रिसन्ध्यं समनुष्ठानमवलोक्यते। तथापि तादृशतौर्य्यत्रिकध्वनिमन्तरेण न तत्रान्यत् सधारणजनाह्लादकरं किमप्यनुष्ठानं वर्त्तते।

हन्त! खलु!! भारतीयवर्णाश्रमिणो यान्येव धर्म्मशास्त्राणि पुराणोपपुराणोदितानि महर्षिमुखनिःसृतशासनानि महत्याग्रहेण प्राणविनिमयेन च श्रद्धया समनुष्ठीय नित्यं नैमित्तिकञ्च स्वस्वधर्म्माचरणं प्रत्यहमनुतिष्ठन्ति; यस्माच्च स्वल्पमपि स्खलनं

महापातकचरणमिव ते सम्यगनुमन्यन्ते, तान्येव पुराणादि-धर्म्मशास्त्राणि प्रमुक्तकण्ठं वार्षिकशरत्कालीनदुर्गादेवीमहोत्सवं विदधुः, किन्त्वहो वङ्गवासिनो विहायापरे किल भारतवासिन-स्तद्विधानानां श्रुतौ वधिरा इव, दर्शने त्वन्धा इव, तदनुसरणे निमर्य्यादा इव स्थिताः ।

किमहो ! न केवलं तेषामस्यायामेवंविधव्यवहारः ; वङ्गेषु प्रचरन्तीनां शास्त्रानुदितानां देवपूजादिधर्म्माचरणानामनुष्ठान-विषये तेषामेवमेवं व्यवहारोऽस्माभिरुपलक्ष्यते । महर्षिमुखाम्ना-नाहं शास्त्रोक्तश्यामाजगद्धात्रीसरस्वतीप्रभृतीनां पूजाविधौ अपि तेषां हतादरो तान्छिल्यभावश्च परिदृश्यते ।

केऽपि मन्यन्ते वङ्गान्तरितेषु प्रदेशेषु इस्लामधर्म्मिणां तदानीन्तनसर्व्वमुखीनप्राधान्यमेवैतत् कारणमिति । कथयन्ति च ते वङ्गेषु तदा महम्मदधर्म्मानुसारिणां प्राबल्याभावात् गौड़ीय-ब्राह्मणास्तदानीं शास्त्रविहितान् सर्व्वानेवाचारान् यथायथं सुनिर्व्वाधञ्च परिपालयितुं समर्था आसन्निति । अपरे त्वाहुरसीम-प्रतिभाविमण्डितविग्रहाचार्य्यशङ्करप्रवर्त्तिताद्वैतवादस्यार्य्यावर्त्ता-दिप्रदेशेषु शिष्टजनेषु प्रधानतः प्रचरणात्, पृथग्जनैश्च तत्रत्यैः प्रोक्तमतच्छायानुगतकबीरादिमतानामुपरि साग्रहसमादराच्च न तत्र तत्र प्रदेशेषु मूर्त्तिपूजा प्रधानपुराणादिशास्त्रानुगत-वर्णाश्रमाचाराणां तावत् सम्यक् प्रचारोऽवस्थित इति, तत्रत्यो-षितानां भूदेवानां मध्ये भूयसामेव सन्ध्यावन्दनादि नित्यक्रिया-विषयकयथोचितज्ञानाभावमुपन्यस्य च ते मतमात्मनः समर्थ-

यन्ति। अपि नाम यद्वर्णोत्तमानां ब्राह्मणानामपि धर्म्माचरणे न प्रवृत्तिर्वरीवर्त्ति, तर्हि का कथा तदितरेषामिति, रोचते यस्मै यत् तदेवात्र कारणतया परिकल्पितं मनीषिणा। वस्तुतोऽत्र कस्यापि कारणविशेषस्य सत्तामन्तरेण वर्णाश्रमिणां मध्ये कथमिव तद्धर्म्ममूलीभूतपुराणादिधर्म्मशास्त्रप्रोक्तसदाचारपराङ्मुखतैवमभवत्। सन्ति हि नाम तत्तत्प्रदेशेषु तत्तद्धर्म्मशास्त्रनिबन्धा अविकला एव धर्म्मचारिणां गृहेषु, नापि वा विरला तत्रत्यप्रदेशेषु महामहोपाध्यायादीनां विद्वद्वरेण्यानां भूसुरवर्य्याणां वसतिः, किमु सनातनधर्म्मशास्त्रद्वेषिण एव प्रायशः ? तथापि तेषु तेषु प्रदेशेषु वर्णाश्रमाचारस्य यदङ्गविशेषवैकल्यं समुद्भूतं, तन्न केनाप्यनीर्व्वचनीयकारणेन भवितव्यमिति कस्तावदत्र सन्देहस्यावसरो लवोऽपि।

अस्याः पूजायास्तावत् कृष्णनवम्यादि प्रतिपदादि षष्ठ्यादि सप्तम्यादि महाष्टम्यादि केवलमहाष्टमी केवलमहानवमीपूजारूपाः सप्तकल्पाः। यथा हि देवीपुराणे—

"इषे मास्यसिते पक्षे कन्याराशिं गते रवौ।
नवम्यां बोधयेद्देवीं क्रीड़ाकौतुकमङ्गलैः॥
ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम्।
सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम्॥
पूर्वषाढ़ायुताष्टम्यां पूजाहोमाद्युपोषणम्।
उत्तरेण नवम्यान्तु बलिभिः पूजयेच्छिवाम्॥
श्रवणेन दशम्यान्तु प्रणिपत्य विसर्जयेत्।" इति

कृष्णानवम्यादिकल्पेषु आश्विनकृष्णनवम्यामार्द्रानक्षत्रयुक्तायां देवीं पूजयित्वा बोधयेत्। तथा च लिङ्गपुराणम्—

"कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा।
नवम्यां बोधयेद्देवीं महाविभवविस्तरैः॥" इति

अपि पूजैषा पुनरेकस्यामपि शरदि वारद्वयमेकयैव विधानेन भवति। चैत्रे क्वापि वैशाखे च चान्द्रमासगणनया या पूजा सा वासन्तीसंज्ञया, आश्विने कदा कार्त्तिके च मासि तादृशगणनया यैव पूजा सा शारदीयार्चनाख्यया व्यपदिश्यते सद्भिः। अनयोर्मध्ये शेषाभिहितायां पूजायां यादृशीं प्रीतिं समनुभवन्ति जातिधर्मनिर्विशेषेण जना मन्ये तादृशीमानन्दधारां पुत्रकन्याविवाहेऽपि कथं कथमपि नाप्नुवन्ति क्वचित् समग्रप्रदेशेषु।

विद्यते तावदेतद्विषयिणीरचनायामनेका वक्तव्या कथा, किन्तु प्रबन्धगौरवभिया ग्रन्थस्य च कलेवरवृद्धित्वशङ्कया च स्थूलतः इयन्तमेवोक्त्वास्माभिरिदानीं विरम्यते इति शम्।

अनुशीलनी—EXERCISE.

१। अधो लिखितमाभाषमवलम्ब्य प्रबन्धो लेखनीयः। सरस्वतीपूजाविषये—समयः, छात्राणां कीदृश आनन्दः, पूजायाः पूर्वदिने तेषां मनोभावः।

२। दोलोत्सवविषये—तस्याः पूजायाः पूर्वदिनकार्य्यजातम्, उत्सवदिने गोविन्दार्च्चनं, परदिने फल्गूत्सवः। आर्य्यावर्त्तादिदेशेषु वङ्गदेशापेक्षयानन्दाधिकः।

## वृत्तान्तात्मकः प्रबन्धः

( *Narrative Essays.* )

पूर्व्वोक्तेषु त्रिविधप्रबन्धेषु वृत्तान्तात्मकः प्रबन्धो द्वितीयः। स तावत् घटनाविशेषस्य विवृतिरूपतया वृत्तान्तात्मकः। घटना हि वास्तव उत काल्पनिकोऽपि भवितुमर्हति। इतिहासस्य कोऽप्यंशः; अपि वा कस्य जीवनचरितमथवा भ्रमणवृत्तान्तः पौराणिकेति वृत्तस्व तदन्तर्गतमिव श्रेणीविभागावसरे निर्दिश्यते परमविधेयैः पुरुषैः। ऐतिहासिकप्रबन्धे—वर्णनीयघटनायाः समयः, इतिहासेन सह तस्य सम्पर्कः, घटनायाः कारणं, विशेषविवरणं, फलमिष्टमनिष्टञ्च वर्णनीयम्।

### महावीर आलेकजन्दारः *

आसीत् पुरा यूरूपस्थले मेसिडोनियान्तःपातिपोलानामकनगरे फिलिपनामधेयः कश्चिन्नरपतिः। तस्याङ्गजो हि महावीरः सेकेन्दरः। स हि खृष्टजन्मनः प्राक् पञ्चपञ्चाशदधिकत्रिशत-(३५५) वत्सरादूर्द्ध्वं किमु षट्पञ्चाशदधिकत्रिशत-(३५६) वत्सरे जन्मपरिग्रहञ्च वीरवरेण्योऽभूत्।

बाल्ये च वयसि स खलु महाभागः ग्रीकदार्शनिकमुख्यात् एरिष्टलनामधेयात् साक्षात् ज्ञानकल्पात् नानाविषयिनीं शिक्षा-

---

* अस्यापरो नाम सेकेन्दरः।

मभिलभ्य स्वल्पेनैव कालेनातुलनीयामात्मोन्नतिमाससाद। द्वाविंशतिवर्षवयःक्रमवेलायाम् एसियानामकभूभागस्य जयार्थं महती प्रवृत्तिरेव तस्याभिजाता। तेन हि चत्वारिंशत्सहस्रमनीकिनीमादाय एसियास्थलमित्याद्यस्योद्देशेन एसियामाइनरस्थलं पालेष्टाइनभुवं पारस्यं मिसरञ्चाधिकृत्य खृष्टजन्मनः प्राक् सप्तविंशत्यधिकत्रिशत-(३२७) वर्षे भारतीयपञ्चनदभूमावाजगाम।

तदागमनमाकर्ण्य तत्रत्यः शिलराजः स्वीयदौर्बल्यात् भीतो भीतो हस्तिघोटकप्रभृतिनानाविधान्यगणितवस्तुचयानि तस्मै वीरकुलकुञ्जरायोपढौकनान्युपकल्प्य तेन सह मैत्रीमुपस्थापयत्।

तस्मिन्नेव च क्षणे पुरन्दरप्रतिमप्रतिपक्षक्षयसम्पादकः पञ्चनदाधिपः पुरुरगणितचमूबलमभिरक्षन्तं शूरशौण्डं सेकेन्दरं जानन्नपि समरे समाहूयातिभीषणमाहवं समवतारयत्। तत्र चागणितप्रतिपक्षसैन्यबले स्वीयबाहुबलमात्रसहायेनानेकानीकिनीः कृतान्तपुरातिथिमानीयावशेषे भाग्यदृष्टप्रतिकूलतया पराजितोऽभूत्।

अनन्तरं विजयगर्वगर्व्विता ग्रीकवीराः सेकेन्दरमनयन्नाहतं पुरुमावद्धयातिदम्भेन। तमवलोक्यातिविस्मितः सेकेन्दरोऽभाषत,—"भो वन्दिन्, मत्तः कीदृशमेव व्यवहारमाशंससे?" तदुत्तरं पुरुः "यद् भूभृदभिकाङ्क्षितुमर्हति" इति वीतभयमुवाच। किन्तु विजेतुस्तादृशं वचः श्रुत्वाम्भोनिधिरिवाविचलितः गिरिरिवातिकठोरः नवनीतमिवातिशयपेलवचेताः स एव महामना

स्वयं तद्बन्धनमुन्मुच्य यथोचितराजसम्मानेन समानयत्। एवं सौहृद्यं प्रतिपाद्य कतिदिनं तत्र गोष्ठीसुखमनुभूयानेकजनपदं विजित्य च तस्मै उपायनमुपकल्पयत्।

अत्रावसरे चैकदा मगधाधीशं चन्द्रगुप्तमभिभवितुं तस्य महती स्पृहा समवजायत। किन्तु बलानां तत्रासम्मतितया कृतोद्योगोऽपि तस्मात् प्रतिनिवृत्त्य तानि च द्विधाविभज्य भागैकं जलपथेन स्वदेशं प्रेषयित्वावशिष्टेन भागेन सह वेलुचिस्थाना-भ्यन्तराध्वना पारस्याभिमुखं समुपाययौ।

तत्र च त्र्यर्विंशदधिकत्रिशत-(२२३) खृष्टपूर्व्वशरदि "वाविलन्" नामकनगरे त्रयस्त्रिंशत्वर्ष-(३३) वयःक्रमवेलायां स खलु महापुरुषो वीरवरेण्याङ्कितकर्म्मा विनश्वरं पाञ्चभौतिकं विग्रहं परिजहार।

हाहा! कष्टमपि कष्टम्!! ईदृशमपि दोर्द्दण्डभावानुदितं पुरुष-धौरेयं महामहिमकालोऽनुपयुक्ते खलु वयसि संगृह्य महान्त-मेवाभावं जगति समुपस्थापयत्। परं नास्य विजेतृत्वेन ख्यातिः नापि वा राज्यविस्तारेण; यत् यूरोपीयैः सह एतद्देशवासिनां परस्परं सौहृद्यं वाणिज्यस्वावाधेन सम्पन्नं भवितुमर्हति तदर्थमेव महान्तं यत्नमस्य प्रकटयन्ति तदागमनमार्गप्रतिष्ठितानि नग-राणि। अद्यापि च तदुपस्थापितम् "आलेक्‌जान्द्रिया" नगरम् आफ्रिकायूरोपेसियास्थलवर्त्तिनां सार्थवाहवाणिज्यकेन्द्रभूमि-तया तस्यातिमहतीभविष्यद्दृष्टेरुपस्थापनमुक्तार्थस्यापि च समाधानं ज्ञापयतीति किं बाहुल्येन।

अनुशीलनी—EXERCISE.

१। अधोलिखितविषयमवलम्ब्य प्रबन्धो लेखनीयः। नेपोलियान् बोनापार्टविषये १७६९ खृष्टाब्दे कर्सिकाद्वीपे जन्म, पिता साधारण-गृहस्थः, दशवर्षात् पञ्चदशवर्षपर्य्यन्तं युद्धविद्यामभ्यस्य सैनिकश्रेणीभुक्तः १७९५ खृष्टाब्दे पारिसनगरस्य विद्रोहदलनम्, १७९६ खृष्टाब्दे अष्ट्रीय-सेनाविजयः, १७९७ खृष्टाब्दे मिशरदेशजयः, १७९८ खृष्टाब्दे फ्रान्स-देशस्य शासनभारग्रहणम्, १८०४ खृष्टाब्दे तस्य राजा, १८१२ खृष्टाब्दे पञ्चलक्षसैन्यैः सह रुषियाविजयार्थगमनम्, तस्मिन् युद्धे बहुबलविना-शात् पञ्चसहस्रमात्रावशिष्टेन सह स्वदेशगमनम्, १८१४ खृष्टाब्दे एल्वा-द्वीपे अवस्थितिः, तस्मात् भूयः राज्यग्रहणं ओयाटारलुयुद्धे डिउक् अव अयेलिंटनेन पराभवः ; सेण्टहेलेनाद्वीपे अवरुद्धः १८२१ खृष्टाब्दे तत्र मृत्युः।

---

## महामहोपाध्यायश्चन्द्रनारायणन्यायपञ्चाननः

अस्ति वर्त्तमानफरिदपुरमण्डलान्तर्गतधानुकाख्यसमवसथः। स च यागयज्ञाद्यनुष्ठानेन स्वाध्यायाध्ययनेन विद्यार्थिनां शास्त्रा-लोचनया देवविग्रहायतनतया च चिरन्तनमाश्रमपदमिव प्रति-भाति। तत्रानेके भगवदत्रिगोत्रसम्भूता महासूरिसत्तमा भूसुर-मुख्या विद्यया ब्राह्मण्येन च संप्रत्यपि भारतप्रसिद्धा आसन्।

तेषु कविरालङ्कारिको न्यायशास्त्रप्रवीणश्च कश्चित् कृष्ण-जीवनन्यायालङ्काराख्यस्तेजसि भृगुरिव, शास्त्रार्थे गोतम इव, कवित्वे काव्य इवासीत्। तस्य तावद्दिग्मतत्वधिकसमदशमत-

(१२७७) खृष्टशके चन्द्रनारायणो नाम पुत्रोऽभवत्। स च बालचपलतानन्तरितेऽपि वयसि पितृतो व्याकरणं काव्यमलङ्कारश्चाधीत्य तेषु तेषु परं प्रावीण्यमलभत। तस्य तु तदानीं तादृशीं प्रज्ञामभिज्ञाय प्रज्ञावानपि सातिशयं विमुग्धा आसन्। परं परिणते वयसि स एव ज्ञानवृद्धो बालो जनकान्न्यायादिदर्शनशास्त्रमधीत्यालौकिकप्रतिभासामान्यञ्च पाण्डित्यमासाद्य न्यायपञ्चाननोपाधिं परिजग्राह।

ततोऽष्टाविंशतिवर्षवयःक्रमवेलायां पितुरुपरते हि तस्य मठके छात्राणामध्यापनमारभ्य त्रिंशद्वर्षं यावत् सातिशयनैपुण्येन तानध्यापयत्। अथोतोऽभ्यन्तरे तु तस्यालौकिकप्रज्ञामाहात्म्यं सुमनसां सौरभमिव समन्तात् परिव्याप्य ज्ञानमधुलोलुपान् शिष्यमधुपान् एकतोऽन्यतस्ततः परतः इत्यादिक्रमेण काशी-काञ्ची-द्राविड़-नेपालादिसुदूरदेशस्थाद्विद्यार्थिनः समाकृष्य तदन्तिकमनयत्। ते चाभिनवशास्त्रार्थव्याख्याश्रवणेन कूटार्थमीमांसावगतेन च परं परितोषमाससाद।

अनन्तरं विद्यारसरसिको वाराणसीनरेशो लोकपरम्परया तस्य तादृशं पाण्डित्यमवगम्यात्मसभापण्डितपदे तं वरयितुं सुचतुरं सन्देशहरं नियुज्य महामहोपाध्यायपदलाञ्छनस्य चन्द्रनारायणस्य समीपं प्रेषयामास। स च एकत्रिंशदधिकाष्टादशशत-(१८३१) खृष्टाब्दीय-सेप्टेम्बराख्यमासोत्तरभागे तत्रागत्य राजाभिलाषमाख्याय तत्पदं ग्रहणार्थं सातिशयं चन्द्रनारायणमनुनिन्ये।

ततः स गमनानुकूल्ये प्रातिकूल्ये च प्रथमतो बहुतर्कं युक्तिञ्चावतार्य्य स्वजनानाञ्च मतं परिगृह्य परिशेषे तत् खृष्टशकीयमाश्विमासि वाराणसीमेत्य तन्नरपतेः संसदलञ्चकार।

एवं नाम तत्र गमनादर्व्वाचीने काले स्वाङ्गजं राधाकान्तं सर्व्वविधशिक्षया शिक्षितं कृत्वा शिरोमणिरित्युपाधिं पित्र्यपेतामह्निकमावसथञ्चापि तस्मै समर्प्य कथं कथमपि संसारबन्धनाद्विनिर्मुक्त आसीत्।

परं स खलु पुरुषधौरेयश्चन्द्रनारायणो राजसभामधिष्ठाय द्वित्रमेव हायनं राजानमशेषविधया शास्त्रार्थपर्य्यालोचनया स्वीयासाधारणचातुर्य्येण च परितोष्य नानादिग्देशागतान् विद्यार्थिनोऽध्याप्य च तदानींतनानां पण्डितमुख्यानां वरेण्योऽभूत्। तदा तु तस्याविसम्बादितप्राधान्यमवगम्य तत्रत्यराजकीय-कुइन्स्-कलेजाध्यक्षेण तद्विद्यालयस्य सर्व्वप्रधानाध्यापकत्वपदं प्रदत्तम्।

तस्मिन्नेवावसरे स खलु महाभागः कुसुमाञ्जलेष्टीकां गादाधरीयानुगमटीकां गौतमसूत्रवृत्तिं जागदीशक्रोड़पत्रटीकां जागदीशचतुर्दशलक्षणोपत्रिकां तत्त्वचिन्तामणेष्टिप्पनीं तर्कसंग्रहस्य टीकां न्यायक्रोड़पत्रं नैषधचरितस्य टीकां, तथातिविषमं समग्रतर्कसान्द्रान्धतमोऽपहन्तुं चान्द्रीमिव चान्द्रीनाम पत्रीं निर्म्माय विमोहयति प्रज्ञावतां मनांसि बाहुल्येन।

परतः सप्तचत्वारिंशदधिकाष्टादशशत-(१८४७) खृष्टशके प्राकृतधर्म्मेण पञ्चसप्ततिवर्ष-(७५)वयःक्रमे सकलजनोपरत-

वाञ्छितास्पदेऽविमुक्तपुण्यपत्तनेऽविश्यमेव नाश्यं देहमपहाय चिरममृतत्त्वमाससाद ।

नूनमवगतास्माभिस्तत्रभवतो विषयिणी काश्यादिप्रदेशजा तथा वङ्गीया च नानाविधैर्लिह्या कथा। सा च प्रबन्धगौरव-भयात् तथा पाठार्थिनां धैर्य्यच्युतिशङ्कातश्च परिह्रतेति किं बाहुल्येन ।

अनुशीलनी—EXERCISE.

१। अधोलिखितमाभाषमवलम्ब्य प्रबन्धो लेखनीयः। पण्डित-ईश्वरचन्द्रविद्यासागरविषये १८२० खृष्टाब्दे मेदिनीपुरे वीरसिंहग्रामे जन्म, तत्र पाठशालायामध्ययनं, नववर्षवयःक्रमे कलिकातागमनं, संस्कृतकलेजे एकादशवर्षाध्ययनं, तस्मिन् सर्व्वोच्चस्थानाधिकारः, अध्ययनादनन्तरं फोर्ट उइलियमकलेजस्य प्रधानपण्डितपदं संस्कृत-कलेजस्य सहकारिसम्पादकः, संस्कृतग्रन्थस्य विशुद्धसंस्करणं, तस्य वङ्गानुवादश्च, १८५५ खृष्टाब्दे विद्यालयसमूहानां परिदर्शनकार्य्यलाभः, नूतन-शिक्षाप्रणालीप्रवर्त्तनं विद्यालयपाठ्यपुस्तकप्रणयनं, कार्य्यादवसर-ग्रहणं, देशहितकरकार्य्यानुष्ठानं, बालिकाविद्यालयस्थापनं, मेट्रपलि-टन इन्ष्टिटिउसनविद्यालयस्थापनं, १८९१ खृष्टाब्दे मृत्युः, चरित्रन्तु, परदुःखकातरता, दया, अनाथस्य तथा निराश्रयस्य च पालयिता, विधवाविवाहस्य प्रचलनप्रचेष्टा ।

——*——

## ग्लाडष्टोन्महोदयः

अयं खलु प्रथितयशाः महामतिग्लाड्ष्टोन्महोदयः, नवत्यधिकाष्टादशखृष्टाब्दे (१८०६) इंलण्डान्तःपातिलिभारपुलनामके नगरे जन्म परिजग्राह। अस्य तावत् पितरौ स्काटजातीयौ। स एव हि महामतिस्तयोश्चतुर्थो नन्दनः। ननमसौ इंलण्डभूमौ प्रसूतोऽपि यावज्जीवनमात्मानं स्काटजातीयं प्रख्यापयति, स्काटजातीयास्तस्यातीव प्रियाश्चाभवन्। तस्य पिता जन्ग्लाड्ष्टोननामा वणिगवृत्त्या प्रभूतमर्थमुपार्ज्य सार्थवाहनिवहेषु प्रख्यातनामासीत्।

अस्य तु विद्यारम्भोपयोगिनि वयसि विद्यारम्भे सञ्जाते, क्रमेण स अक्सफोर्डमहाविद्यालयाधीनयोः इटनकाइष्टचार्जकलेजाख्यविद्यालययोर्विद्याभ्यासं कृतवान्। एकत्रिंशाधिकाष्टादश-(१८३१) खृष्टाब्दे स हि महात्मा सर्वश्रेष्ठोपाधिं प्राप्य विद्यालयान्निष्क्रान्तोऽभवत्। शैशवसमये च रक्षणशीलसम्प्रदायं सर्व्वात्मनानुजगाम। द्वात्रिंशाधिकाष्टादशखृष्टाब्दे न्युर्कनगरस्य प्रतिनिधिर्भूत्वा प्रथमं पार्लमेण्टमहासभायाः सभ्योऽभवत्। तत्र महासभायामत्यल्पीयस्येवानेहसि स्वकीयाऽसाधारणवाग्मितां प्रख्यापयामास। ऊनचत्वारिंशाष्टादशखृष्टाब्दे (१८३९) लर्डमेकलेनाम्ना वाग्मिना तस्याध्यवसायो दृढ़व्रतत्व भृशं प्रशंसितम्। चतुश्चत्वारिंशदधिकाष्टादशखृष्टाब्दे (१८४४) सार् रबार्टपील-

नाम्नाऽसौ कोषागारस्य बालसभ्यपदव्यां नियोजितोऽभवत्। एवं तेन स्वकीयाऽतुल्यवाग्मितादिगुणग्रामप्रभावेण यथाक्रमं पार्लामेण्टमहासभायाः सभ्यतानुगता नानापदव्यधिरूढ़ा। अष्टषष्ठ्यधिकाष्टादशशतखृष्टाब्दे (१८६८) प्रथमं स प्रधानमन्त्रिपदमधिचकार। परं क्रमेण वारत्रयं तत्पदवीमधिकृत्य इंलण्डस्य यशःसौरभं दिगन्तेषु प्रसारयामास।

ततोऽष्टनवत्यधिकाष्टादशखृष्टशरदि (१८९८) निखिलधरातलं गाढ़तमसाऽवृण्वन्, आयर्लण्डवास्तव्यमानवहृदयकुमुदानि सङ्कोचयन्, भारतीयप्रजाहृदयचकोरजातमगाधहताशताजलनिधौ निमज्जयन्, इंलण्डीयप्रजानक्षत्राणि दुःसहवियोगव्यथानिष्प्रभीकुर्व्वन्नस्तं गतः किल राजनीतिगगनतलात् ग्लाडष्टोनाभिधः पूर्णिमाचन्द्रः। तमपहृता खलु दुरन्तेनावश्येन कृतान्तेन गृहीतः किल सर्व्वकार्य्यसुमन्त्रणावादः प्रधानामात्यः इंलण्डभूमिगौरवविवर्द्धकमुखोज्ज्वलकररत्नाभरणरूपो भारतीयप्रजानां सर्व्वदुःखापनोदकामो सुहृदामग्रणीः, समस्तधरणीमण्डलस्याद्वितीयो राजनीतिज्ञः। तस्य परलोकप्रस्थानमाकर्ण्यारुदत् समस्तपारावारपरिवृता निखिला धरणी। अमुष्मिन्नपि युगपत्त्यरूपं शत्रवो मित्राणि चाहर्निशमश्रुनीति किं बाहुल्येन।

अनुशीलनी—EXERCISE.

१। देशबन्धुचित्तरञ्जनदासः, बाल्यकालः, शिक्षा, विदेशगमनं, तत्र शिक्षा, तत्रावस्थानकाले विदेशिनां भारतीयान् प्रति अनुचितव्यवहारस्य तीव्रप्रतिवादः, तेन कर्त्तृपक्षीयाणां सनन्ददाने कार्पण्यं, ततो

व्यवहारजीवपरीक्षायामुत्तीर्णः, स्वदेशागमनं, कर्म्मजीवनं, प्रभूतार्थार्जनं, दानं, राजसंसर्गत्यागः, देशकार्य्ये आत्मनियोजनं, कारावासः, तस्मान्मुक्तिः, परलोकगमनं, देशवासिनां शोकः, तेषां श्मशानगमनं, तदृदृश्यञ्च ।

---

## चैतन्यः

अस्ति गौड़ेषु गङ्गोपकण्ठे नवद्वीपाभिधं नगरम्। तत्र चैतन्यापरनाम गौराङ्गो जगन्नाथमिश्रस्य पुत्रत्वेन शचीदेवीगर्भे पञ्चाशीत्यधिकचतुर्दशशतखृष्टाब्दे ( ८८५) जन्म परिजग्राह। अयं खलु वंशो वङ्गीयवैदिकभूसुरकुलान्तर्गतः। तद्वंशधुरन्धरः कोऽपि पूर्वजो भागीरथीतीरनिवासमिषेण श्रीहट्टदेशतः सपरिवारमागत्य ज्ञानोन्नतिविषये वङ्गानां केन्द्रभूतं नवद्वीपनगरमध्युवास। तदन्वयपावनीकृतोऽयं गृहीतसन्न्यासविश्वरूपानुजो विश्वम्भरो महिमगौरवेण तन्मतानुसारिभिः पराचीनैर्वैष्णवैः विष्णुरवतारत्वेन उपकल्पितः तत्रभवतः प्रेमावतारत्वं पुनः सर्ववादिसम्मतमिति प्रतिपादयिष्यते परस्तात्। मिथिलातो न्यायशास्त्रमधीत्य वङ्गेषु प्रचारको वासुदेवसार्वभौमसकाशात् अशेषविधशास्त्रनिचयानधीत्य धर्म्ममीमांसादिषु युक्त्यतिशयस्य परां काष्ठां समालब्धवानयं नवपुरुषावतारः श्रीमान् गौराङ्गदेवः। मैथिलतार्किकधुरन्धरपक्षधरमिश्रविजयेन यशोधवलायितदिङ्मण्डलः किं पुनर्वङ्गभूमिः रघुनाथशिरोमणिः; गौड़ीया-

नामभिनवमीमांसकः स्मार्त्तकर्म्मानुष्ठानेषु रघुनन्दनभट्टाचार्य्यः ; तार्न्त्रिकक्रियासु लब्धप्रतिष्ठकृष्णानन्दस्तद्‌गुरुपादान्तेवासिनो तस्य सतीर्थाः आसन्। परं यस्यान्तरात्मा समाजधर्म्मयोः पातित्वदर्शनेनानिशं क्रन्दते तयोः संस्काराय च यस्य जन्म-परिग्रहः, एतादृशो महाप्राणस्तदन्तरेणावान्तरविषयालोचनया पृथगजन एव चित्तस्य प्राशस्त्यं परितृप्तिञ्च लब्धा कथंकारं केवलेन तद्रसेन रसित एव चिरमवस्थातु शक्नुयात् ? अतएव पठद्दशायामेव संस्कारकार्य्येऽविचलितलक्ष्यासीदसौ महामतिः। किं बहुना प्रथमायाः पत्न्याः लक्ष्मीदेव्याः आकालिकमहा-प्रयाणान्ते यौवने क्षतपादक्षेपां बालतपनविकशनोन्मुखाम्बुज-सदृशीं स्वानुरूपां रूपसीं बधूं विष्णुप्रियां लब्ध्वापि, अन्तेवासिभ्यः शास्त्रधर्म्मवितरणजनितयशःसौरभायितदिग्‌विभागे पूर्णे यौवने स्वयं वर्त्तमानस्यापि संस्कारस्यावश्यसम्पाद्यत्वं तस्य हृदये जाग-रूकमासीदेव निरन्तरम्। अतः सुविस्तृतं यशःसौभाग्यमाषा-ढीयगङ्गासदृशीं पूततमां मनोरमां रमां, शोकजराजीर्णा-मङ्कजाङ्कगतप्राणां स्निग्धस्नेहप्रतिमां जननीमपि महत्तरकार्य्य-सम्पादनाशयाऽविगणय्य केशवप्रतिमात् केशवभारतीतो लब्धदीक्षः संस्कारोपदेशकामनयेव गृहीतपारिव्राज्योऽयं नवीनभावावहितो महापुरुषराजः श्रीमान् गौराङ्ग आमथरात् सेतुबन्धं स्वाभिमत-धर्म्ममतं प्रचारयन् सफलकामतया परिगतचित्तप्रसादः पूततमे पुरुषोत्तमक्षेत्रतले त्रयत्रिंशदधिकपञ्चदशशतखृष्टशके (१५३३) चत्वरमेव नास्यं नश्वरं शरीरं परिजहारेति कृतं बाहुल्येन।

अनुशीलनी—EXERCISE.

१। अधोलिखितविषयमवलम्ब्य प्रबन्धो लेखनीयः। राममोहनरायविषये—कुत्र वासः, तस्य मतं, समाजसंस्कारः, शक्तिः, विदेशगमनं, तत्र मृत्युः।

---

## महात्मा गान्धिः

अस्ति भारतस्यापरं प्रान्ते गुर्जरनामको देशः। तत्राऽरबसागरस्योपकूले पोवरनामधेयं नगरम्। तस्मिन्नेवोनसप्तत्यधिकाष्टदशशत (१८६९) खृष्टशके प्रथिते कस्मिन् वैश्यकुले मोहनदासकरमचाँदगान्धिर्जननमाससाद। तस्य पिता पितामहश्च तत्रत्यभूस्वामिनां राणोपनामधारिणां वंशपापम्पर्य्येण देशीयानपदमलं चक्रतुः। तयोरौदार्य्यस्य प्रभुपरायणतायाा धर्मानुरागस्य च ख्यातिरद्यापि देशे तस्मिन् प्रसिद्धिरस्ति।

एवमपि हि मोहनदासस्य जनयिता लोकेषु तेजस्वितां तथा धर्म्मानुरागं न्यायनिष्ठत्वं शास्त्रज्ञानञ्च यथायोग्यं विन्यस्य जनन्यपि च स्त्रीजनोचितविविधगुणेन तथा धर्म्मप्राणतया मनीषया विशेषतो रुजाभिभूतानां शुश्रूषया च सर्वथा समाकर्षयतां तदानीं प्राकृतानां मनांसि बाहुल्येन। ईदृशयोरादर्शदम्पत्योर्नन्दनः स खलु गान्धिः, प्रथमाङ्कुरिते वयसि मारुतः पेलवतां मनोवृत्तिमस्खलितप्रशस्तां करुणां तथा पितुर्मनस्वितां गुरुगम्भीरं

ज्ञानमुभयत ओजस्वितां धर्म्मानुरागं भगवद्भक्तिञ्चाभिलभ्य प्राप्ते द्वादशे वर्षे परिणयमकरोत्।

परं शैशवे प्राक् सोऽयं मनस्वी स्थानीययोर्हितययोर्विद्यालययोः शिक्षकात् प्राथमिकशिक्षां समाप्य द्वादशवर्षवयःक्रमवेलायामुच्चविद्यालयं प्रविश्य तस्मात् सप्तदशवर्षवयःक्रमे प्रवेशिकापरीक्षातः समुत्तीर्णोऽभवत्। तत्र किलाध्ययनकाले कस्यचित् सुहृद उपदेशेन विशिष्टव्यवहारजीवपरीक्षार्थं लण्डननगरीं गन्तुं तस्य महती प्रवृत्तिरभवत्। किन्तु जननी तदवगम्य प्रथमतो नानाविधचेष्टया तं निवारयत्। किन्तु सा तत्र विफलमनोरथतया पुत्रस्याप्याग्रहातिशयञ्च ज्ञात्वा कस्यचित् जैनक्षपणकस्य सविधे "मद्यं मांसं तया रमणीसंसर्गश्च सर्वथा वर्जनीयं तवे"ति तं सत्यं वाचयित्वा परिशेषे विदेशगमनमादिदेश।

ततःप्रभृति मातृभक्तो हि स लण्डननगरीं गत्वा तत्र वर्षत्रयमवस्थाय प्रतिक्षणमेव जनन्युपदेशं स्मरन् केष्वपि व्यसनेषु संसक्तो नाभवत्। ततश्च सम्पाद्य विशिष्टव्यवहारजीवशिक्षणीयविषयं तदध्यक्षतोऽनुमतिपत्रमासाद्य प्रत्यावर्त्त्य च स्वदेशं कियद्दिनं वैदेशिकमोहमदिरोन्मादनयोन्मादितोऽभवत्। अनन्तरमुपरते च तन्मोहे स्वप्रकृतिमासाद्य ब्रह्मचारीवद् गुरुकठोरं नियममवलम्ब्य भागवतादिवेदवेदान्तग्रन्थानधीत्य प्रकृतमनुष्यपदवीमुपार्जयत्।

तदनन्तरञ्च मुम्बेप्रदेशीयप्रधानविचारालये तस्य प्रथम-

कर्म्मजीवनस्य कार्य्यारम्भः एव समुपजायते। तत्र च सार्द्धैक-वत्सरे कृते कार्य्ये त्रिनवत्यधिकाष्टादश-(१८९३) खृष्टशके पोवरवन्दरीयः कश्चित् सार्थवाहः स्वीयाभियोगसमर्थनार्थं दक्षिणाफ्रिकादेशं तं प्रेरयत्। नूनं तदानीं तत्र भारतीयौपनिवेशिकानां क्रमोन्नतिं समोच्य तत्रत्ययूरोपीयाः आत्मप्रधान्यं भारतीयैः काले विलुप्तं भवितुमर्हतीति भाविनीं शङ्कां विगणय्य सर्वथा तान् निर्यातुमभिभवितुं निग्रहितुञ्च यतमानाः आसन्। परं शिक्षितमशिक्षितं भद्रमभद्रं सम्पन्नमसम्पन्नं वा भारतीयं सम्भाषयन्ते ते "कुलीति" नितान्तनिकृष्टसंज्ञया। तादृशीं दुर्गतिं भारतीयानां संस्मरन्नेकदा पथि गच्छन् महाभागः नगरप्रहरिणा चरणेन प्रहृतः। अन्यदा कस्मिन्नधस्तनविचारालये शिरस्त्राणमुन्मोचयितुमादिदेश। परत्र कदा वाष्पीयशकटगमनसम्पादकस्तं प्रथमश्रेणीतो बलेनावतारयत्। इत्याद्यनुचितानुष्ठानं यूरोपीयानां स्वयमभीक्ष्य समुपभोग्य च स्वयं निर्य्यातनं तत्प्रशमनोपायं भावयन् तत्रैव स्थितः। तस्मिन्नेवावसरे श्वेताङ्गशासकाः गुरुकठोरं यावतीयनिर्य्यातनं सम्भवति तद्राजकीयविधानानुमोदितं विधाय तेन नियमेन निर्य्यातयन्ति भारतीयान्।

ततः षोड़शाधिकोनविंश-(१९१६) खृष्टाब्दे ट्रान्सभालभूमिः राजप्रतिनिधिः बहुप्रतिवादसत्त्वेऽपि नवीनराजविधानं राजानुमोदितं कृत्वा तत्र प्रावर्त्तयत्। तच्च—"एसियाखण्डवासिनां सर्वैश एव स्वनामलिखनमङ्गुल्यङ्कनञ्च राजद्वारे वन्दिवत् कर्त्तव्य"मिति, तच्चाशेषविधप्रतिवादेनापि विफलं कर्त्तुमसमर्थतया परिशेषे

"निष्क्रियप्रतिरोध:" ( प्यासिभ् रेजिस्टेन्स ) नामान्दोलनमवलम्बयत्। तदान्दोलनस्य परिणामे सप्ताद्यधिकोनविंश-(१९०७) खृष्टाब्दे तस्य मासद्वयं कारावासो घटते स्म। तत्रैव चैकोनशताद्यधिकाष्टादश-(१८९९) खृष्टाब्दे वुयरसंग्रामे आहतानां शुश्रूषणार्थं सेवकसमितिं सङ्गठ्याहतं शुश्रूषयत्। तत्कार्य्येणातिशय: प्रीतो राजप्रतिनिधिस्तस्मै पदकमेकमदात्। एवं चतुरधिकोनविंश-(१९०४) खृष्टाब्दे भारतीयेषु प्लेगाख्यमहामारिसमुपस्थिते सेवकसमितिं विन्यस्य रोगक्लिष्टानां सेवां कृत्वा सेवाव्रतमुद्यापयत्। तत: षड़धिकोनविंश-(१९०६) खृष्टाब्दे इंराजराजशक्तेर्विरुद्धवादिनां जुलुलाण्डवासि-काफ्रिजातीयानां युद्धे पुन: सेवाव्रतमवलम्ब्य राजदत्तपदकमेकं प्राप्तवान्। इत्यनया दिशा तत्रत्यदेशवासिनां श्वेताङ्गकृष्णाङ्गानां विविधानि हितकार्य्याणि सम्पाद्य तस्मात् प्रत्याहृत्य इंलण्डमुपगम्य च महासमरे इंराजानां साहाय्यार्थं तत्र भारतीयसेवकदलं संस्थाप्य तेषामशेषविधं साहाय्यं कृतवान्।

तदनन्तरं भारतेषु सप्तदशाद्यधिकोनविंश-(१९१७) खृष्टशके सम्पारणाख्ये देशे रायतगणेन सह तत्रत्यनीलकरविदेशीयवणिजां भूसम्बन्धीयविवादोपस्थिते भारतमागम्यासीमयत्नेन तेषां रायतजनानां पक्षमवलम्ब्य सर्वं समीमांसत्। तत:-परमाहम्मदावादीयप्रावरणवयनयन्त्रपरिचालकानां श्रमजीविनां तदयन्त्राध्यक्षै: सह मनोमालिन्योपगते श्रमजीविपक्षमवलम्ब्य "यावन्नं तेषामभियोग: कर्त्तृपक्षैर्नोपशमितव्य:, तावन्तमेव मम

प्रायोपवेशन"मिति प्रतिज्ञाय प्रतिज्ञानुरूपं कर्म्म कृत्वा परिशेषे स्वाभीष्टफलमलभत।

परं षोड़शाधिकोनविंश-(१९१६) खृष्टशरदि गुर्जरदेशे शस्याजन्मत्वेन राजकरदातुमसमर्थाभ्यः प्रजाभ्यो गुरुकठोरनियमेन करमाग्रहितुमारेभिरे राजपुरुषाः। तच्चानुचितं मन्यमानो महापुरुषः तासु "सत्याग्रहमन्त्रं" प्रचारयत्। तच्च—"बलवतोऽमानुषिनिर्य्यातनमपि विशिष्टैरेव धैर्य्यैः सहनीयम्, न पुनः कथं कथमपि प्रतिपक्षत्वेन वर्त्तितव्य"मिति। तन्मन्त्रानुप्राणितास्तत्त्यास्तथानुष्ठितेनाचिरेण स्वीयकरभारादुन्मुक्ता आसन्। ततःपरं देशेऽस्मिन् "रौटालविल" नाम्नीं प्रजाप्रतिकूलराजशासनपद्धतिं प्रचारितुमुद्युक्ते राजपुरुषे गान्धिप्रमुखाः भारतीयजनमङ्गलाकाङ्क्षिणो महापुरुषाः तत्पद्धतेरनौचित्यमाख्याय तीव्रं प्रतिवादं कुर्वन्तोऽपि तान् न विगणय्य राजपुरुषाः तत्पद्धतिं राजविधानानुमोदितामकुर्वन्। तेन महात्मा भारतेषु सर्वत्र स्वीयासाधारणसत्याग्रहमन्त्रं शनैः शनैः प्रचार्य्य तत्प्रतिकारकल्पे समुद्बोधयज्जनमानसम्। तस्मादेव हि सम्प्रति पञ्चनदीयज्जालियानवागाख्ये तादृशानां पैशाचिकात्याचाराणामनुष्ठानमभवत्।

अधुना तत्सत्याग्रहमन्त्रमेव "नन्-को-अपारेशन्" वा सहयोगितावर्जनरूपेण परिणतिरासीत्। तस्य स्थूलार्थस्तु "राजसम्पर्कः सर्वतः परिहर्त्तव्यः" इति।

वस्तुतः वर्त्तमानेऽस्मिन् जगति महात्मनोऽमानुषो त्याग एव तस्य देवत्वमुपस्थापयति बाहुल्येन। स हि निर्य्यातित-

पक्षमवलम्ब्य प्रबलबाधाविपत्तिमपि चाविगणय्य तत्प्रतिकाराय स्वशक्तिमुपस्थापयत् पर्य्याप्तेन। सन्तीह जगति बहवो धार्म्मिकाः बहवश्च कर्म्मिणस्त्यागिनश्च किन्तु एकस्मिन्नेव विग्रहे एतेषामपि त्रयाणां समवायो नितान्तविरल एवास्तां मुधैवाधिकजल्पनेन।

अनुशीलनी—EXERCISE.

अधोलिखितविषयमवलम्ब्य प्रबन्धो लेखनीयः। मनस्वी स्यर् आशुतोषमुखोपाध्यायविषये—वंशपरिचयः, पाठ्यावस्था, कर्म्मजीवनं, प्रधानविचारपतित्वं, विश्वविद्यालयस्याध्यक्षता, कर्म्मशक्तिः, उपाधिलाभः, चरित्रम्, मृत्युश्च।

---

## व्याघ्रो वानरः शृगाली च

एकदा काचित् शृगाली शावकान् आदाय वनं विहरति स्म। अथ विहरन्त्यां तस्यां रविरस्ताचलचूड़ामुपागतः। ततः सन्ध्यासमागमे सा नातिदूरे व्याघ्ररवमाकर्ण्य भीता भीता सन्निहितं कञ्चित् बिलदुर्गं प्रविवेश। तत्र घ्राणेन व्याघ्रविवरं परिज्ञाय किं करणीयमिति विचिन्तयन्त्यां तस्यां कश्चित् व्याघ्रः सपदि एव विवरसमीपमुपागत्य केनापि सत्त्वेनात्र वर्त्तितव्यमिति विज्ञाय सुभृशं ननर्द मुहुर्मुहुरविजृम्भयच्च। तादृशं

नादमाकर्ण्य सा शावकान् मुहुर्मुहुस्ताड़यामास। तेन ते उच्चैः क्रन्दितुमारेभिरे।

ततः शृगाली सान्त्वनाच्छलेन तान् शावकान् उच्चैरकथयत्—रे पुत्रकाः! माक्रन्दित, दिष्ट्या महाकायः कश्चित् शार्दूलः आत्मनात्र समायातः प्रविष्टेऽस्मिन् दुर्गमध्ये व्यापाद्य तेनाशनक्रियां निर्व्वाहयामि। यदि वो एतादृशं रोदनमाकर्ण्य पलायते तर्हि निराहारेणानुदिनं वर्त्तितव्यम्। एतदाकर्ण्य स खलु व्याघ्रः भीतो महदेव सत्वमत्र वर्त्तितव्यमिति संविज्ञायातिद्रुतं पलायते स्म।

अथातिद्रुतं पलायमानं तं दृष्ट्वा सन्निहिततरुशाखास्थः कश्चित् वानरस्तमाह—भोः भोः मामक, हन्त! कष्टं!! त्वं शृगालीभिया पलायसे? प्रत्यावृत्य गच्छ पुनस्तत्र अहमपि त्वया सह गत्वा दर्शयामि ते भयकारणम् दुष्टां शृगालीमन्तरा नान्यत्। तदाकर्ण्य चकितो व्याघ्र आह—सौम्य, अहं तत्र गन्तुमर्हामि, परं यदि त्वं दुर्वृत्तसत्त्वेन सन्ताड़ितः मां विहाय पादपशाखां समाश्रयसि तदा मे किं करणीयम्? वानरो आह यदि मद्वचसि ते प्रत्ययो न स्यात्, तर्हि पुरोवर्त्तिन्यानया लतया मे ग्रीवां बद्ध्वा भवल्लाङ्गूलेन सह वेष्टयित्वा मामपि तत्र नय इति स्थिरीकृत्य तथा कृत्वा तत्र गतयोः वानरव्याघ्रयोः शृगाली भूयः कौशलजालं सुविस्तार्य्य पोतकान् आह—भोः भोः वत्सकाः, प्रथममसौ प्राणी युष्मत्क्रन्दनमाकर्ण्य पलायितः, अधुनातिचतुरो भवन्मातुलः भूयस्तमेव बद्ध्वा समानयति, येनासौ

उत्प्लवितुं पलायितुमपि नार्हति। विरमत विरमत पुत्रकाः क्षणादेवासौ मदीयकरालदशन मध्यवर्त्ती सम्भविष्यतीति। तदाकर्ण्य शृगालो स्वरमनभिज्ञातो मन्दबुद्धिः शार्दूलः झटिति दिशमदिशं वा पलायितुमुपचक्रमे। तेन त्वरितं गच्छति तस्मिन् दृढ़बद्धो मन्दधी वानरः वृक्षप्रस्तराघातेन जर्जरितः अविलम्बेन पञ्चत्वमुपगतः।

इच्छति यः परानिष्टं दुरात्मा कौतुकप्रियः।
अनिष्टं निश्चितं तस्य स्वयं सोऽपि विपद्यते॥



## ग्राम्य-जम्बुकौ

कश्चित् जम्बुकः लुब्धकैरनुसृतः द्रुतं धावन् पथि स्थितं कञ्चित् ग्रामीणं दृष्ट्वा सकरुणं प्रार्थयामास। भद्र, लुब्धकैः त्रासितोऽहं देहि मे भवत्कुटीरे क्षणं विश्रामस्थानमिति। स ग्राम्यः स्वस्तीत्युक्त्वा स्वगृहकोणं दर्शयामास। अत्रान्तरे व्याधाः तस्य अनुपदमेवागत्य तमेव ग्रामीणं पप्रच्छुः। सौम्य, इतो यान्तं कञ्चित् जम्बुकं दृष्टवान्? सोऽप्याह—न हि मया दृष्टः, इति वाङ्मात्रेण परिज्ञाप्य, परं तस्य निलयस्थानं वारं वारं अङ्गुलि-चालनेन निरदिशत्। तदप्यपरिज्ञाताङ्गुलिसङ्केतेषु तेषु सुदूरं निर्गतेषु जम्बुकः निभृतं गन्तुं समुपचक्रमे। तद्दृष्ट्वा ग्राम्य आह—अये, किमेषा रीतिः, येन ते अभयं दत्तं तस-

नाहत्य कथं गन्तुमारभसे ? जम्बुको मन्दं विहस्याह—भद्र, वचनपरिपन्थिनी ते अङ्गुलिः इदानीमपि श्लथयति मे भव-बन्धनम्। न चेत् उपकृतेरानृण्यं ननमवगच्छेयम्। इत्युक्त्वा द्रुतं तस्मादपगतः।

वचस्यन्यत् मनस्यन्यत् कर्मण्यन्यत् दुरात्मनाम्।
वचस्येकं मनस्येकं कर्मण्येकं महात्मनाम्॥

---

## काकः शृगालश्च

अथैकदा कश्चित् वलिभुक् मांसविक्रेतुर्विपणितः मांसखण्ड-मेकं चोरयित्वा चञ्चुपुटेनादाय सुसन्निहित-तरुशाखाया-मुपविष्टः। तत्र पादप-च्छायां संसेवमानः कोऽपि जम्बुकः तमवलोक्य कपटप्रबन्धेन वञ्चयित्वा मांसं लब्धुमिच्छन् वलिभुज-मुपेत्य ललितवचनोपन्यासेनाह—मित्र, कुशलं ते ? अहं तावत् भवतः सख्यमिच्छन् नानास्थानमुल्लङ्घ्य इत एवाभिवर्त्ते। परं वनोपवनं शैलकुञ्जञ्च परिभ्रमता मया भवता सदृशः कुत्रापि सर्वाङ्गसुन्दरो विहङ्गमो नाद्यापि विलोकितः। अहो ! किमिव ते भ्रमर-कृष्णौ पक्ष-पुटौ वासुदेवसमप्रभा चञ्चुः। इन्दीवर-नीले नयने नृत्यकरणक्षमौ च चरणौ। हन्त ! कष्टं तथापि मे इयत् दुःखं यत् धात्रा सर्वाण्यपि ते चित्ताह्लादकराणि अङ्गप्रत्यङ्गानि विधाय परं कृपणतया मूको निरमायि। स्वल्प-बुद्धिरसौ काक-स्तावदात्मस्तुतिं समवगम्यालोचयत्—"अहो !

पर्य्याप्तं मद्रूपविमुग्धोऽयं जम्बुको यदि मे कण्ठस्वरं शृणुयात् तर्हि मत्तोऽस्तमेव विस्मयमालभिष्यते" इति विमृश्य यावदसौ चञ्चू व्याददौ तावदेव मांसखण्डं भूमौ पपात। शृगालः स्वाभीष्टमांसखण्डमासाद्य पुलकितमनाः तस्मादपगत्य गभीरतरं वनदेशमुपागच्छत्। काकस्तु परमात्मबुद्धिं निन्दयन् अन्यत्र समुपययौ।

स्वार्थेन भजते धूर्त्तः सिद्धे कार्य्ये विरज्यते।
न कस्यचित् प्रियो धूर्त्तः कश्चित् धूर्त्तस्य न प्रियः॥

---

## चिन्ताघटितरचना—Reflective eassays.

प्रागुक्तेषु त्रिविधरचनानिर्म्माणेषु चिन्ताघटिता रचना तावत् तृतीया। तच्च नीति-गुणावस्थाप्रवादमूलतया चतुर्धा विभजितुं शक्यते। एषा हि रचनातिकठोरतया विवरण-वृत्तान्तरचनान्तेषु लेखनीया। अत्र लेखयितुः स्वमतमेवातिप्रबलतया अन्येषामपि मतं प्रथममुद्धृत्यात्ममतं परिशेषे प्रकटनीयम्। एतादृशे प्रबन्धे विषयविशेषस्य, तस्य संज्ञयाः उत्पत्तेः कारणस्य चोपकारितायाः उत अपकारितायाः स्वपक्षस्य विपक्षस्य वा मतं समुल्लेख्य सर्व्वशेषे स्वमतं प्रकटय्य समाप्तिं नयेत्। एतद्रचनादर्शो यथा—

# कालः

इह तावदेक एव कालः दण्ड-मुहूर्त्ताद्युपाधिभेदेन बहुधा विभज्यते विद्वद्भिः सर्व्वे खलु प्राणिनः तद्वशेन आविर्भवन्ति, तोरोभवन्ति, संतिष्ठन्ते च। तन्तु कालं वृथा न यापयेत्। यस्तावत् आलस्यात् तं नयति स च जगत्यभ्युदयमात्योन्नतिञ्च प्राप्तुं न शक्नोति, परं यावज्जीवं दुःखमनुभवति च। एवमपि च संसारेऽस्मिन् न तावदेकोऽपि प्रभुतार्थदानेन मधुरवचन-विन्यासेन जीवन-यौवन-विनिमयेन च मुहूर्त्तार्द्धमपि क्षणं तमात्मवशं नेतुं समर्थोऽस्ति। देवा अपिच कालवशेन सृष्टि-स्थिति-संहारादिकार्य्याणि कुर्व्वन्ति पुनस्तस्मिन्नेव लीयन्ते। उक्तञ्च—

ये समर्था जगत्यस्मिन् सृष्टिसंहारकारिणः।
तेऽपि कालेन लीयन्ते कालो हि बलवत्तरः॥ इति

य एव कालस्य सद्व्यवहारं विदधाति; स हि विद्यार्ज्जने धर्म्मार्ज्जने अर्थार्ज्जने च प्रभवन्ति। जगतामशेषसौख्येन च समन्वित एव स्यात्। नितरामभ्युदयकाङ्क्षिणः प्रेष्ठमानवकाः, मुहूर्त्तार्द्धमपि कालं वृथा नातिवाहयेत। उक्तं हि—

कालमूलमिदं सर्व्वं भावाभावौ सुखासुखे॥
कालः सृजति भूतानि कालः संहरते प्रजाः।
कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः॥ इति

अतएव कालस्य सद्व्यवहारः सर्व्वथैव समाचरणीयः सर्व्वेषामिति किं बहुधा ।

---

## प्राचीनभारतम्

हंहो ! विद्यावयोवृद्धाः, प्रिययुवानः, सुकुमाराः कुमाराश्च, अवगच्छध्वम् ; शतार्द्धवत्सरादूर्द्ध्वं अत्रत्ये खलु सभ्ये जगति शिक्षिताभिमानिनः सभ्याः अस्मद्देशीयाश्च प्रायश एव पाश्चात्यशिक्षानुप्राणीताः सामाजिकाः अत्रभवां रीतिं नीतिं ज्ञानञ्च किमन्यत् शिक्षादीक्षाप्रभृतिं यावतीयां प्राचीनकर्त्तव्यानुष्ठानपद्धतिमपरां विश्वविश्रुतामतुलनीयामतीतकीर्त्तिकाहिनीञ्चापि तुच्छातितुच्छतरं समवमन्य तड़ितानन्दिता इव प्रतीच्यमोहमदिरासंवशीकृतमानसाः आत्मानं स्वसर्व्वस्वञ्च दीनातिदीनतरममन्यन्त। संप्रति हि दैवगत्या यथार्थशिक्षितानामदम्यचेष्टापरम्परया कारणकोटिकानां घातप्रतिघातेन च तदैव हि हेया धारा प्रमत्तता च कथं कथमपि न्यूनीभूय निद्रालसितजननयनान्तपर्य्यन्ते बालाम्बरमणिमयूखमिव स्वैरं स्वैरं स्वीयासामान्यमतीतगौरवमातनोत्यतितराम्। तच्च सातिशयमेव शुभसंसूचकं मन्दभागधेयानामस्मदीयानामतिमात्रम्। यतः प्राचीनतमानां ज्ञानविज्ञानाधाराणां शास्त्राङ्गसाहित्यानामध्ययने संजायते जातीयता, क्रमोन्नतिश्च शनैः शनैरेवात्र जगति ; परं तेषां पूर्व्वतनानां यशोऽवकीर्णे भास्वरे पथि सञ्चरणेन नूनं

सम्भवति तेषु तेषु प्रवृत्तिप्रेरणा निराधारा रतिश्च ; सुतरामात्मो-न्नतिसंविधाने तदेवान्यतमं प्रकृष्टं बीजमिति किं तत्र विचारणानां प्रतीक्षा ?

अप्यहो ! दृश्यते तावत् पर्य्यालोचितेषु समग्रभूभागेषु यद्यपि कापि भूमिः अतीत-गौरवमहिम्ना विश्वमानसं मोहयति स्तम्भयति रमयति च सा किलानन्तवसुपर्व्वतारामनदीचैत्य-ग्रामसंधारिणी दन्तुरादिजन्तुसंवहविग्रहा सर्व्वसौख्यसंप्ररोहा विमलाम्बरचुम्बितमहामहिममहिध्रमौलिविलसिताशेषतुषार-सारसञ्चयमुकुटा घनच्छदमहीरुहमेदुरदूरदूरान्तरकुसुमसुसुमा-यितकाननश्यामलदीर्घकुन्तला, वक्षोजस्पर्शजदोलन् मन्दाकिनी-शुक्तिमौक्तिकदामविलोला, स्वर्णसाम्यश्यामाकहरितायितामल-दुकूलजघनच्छदसङ्कुला, नीलजलधिजलधौताङ्घ्रियुगला, काक-लितकोकिलबलाकाबर्हिकुलप्रखरमुखरदिगन्ता, वरण्यार्य्य-पूज्यान्यस्तसमस्तधर्म्मकर्म्ममुख्या, सततवितनजीवजीवनधारण-कारणशस्यसुसुमायिताख्या, अगण्यपुण्यार्थतीर्थसत्तमपत्तनशत-शोऽवकीर्णा, ऋतुषट्कपर्य्यायितवर्य्यभोगसाधना, महामहीयसी मान्यमनःप्रेयसी मदीयेयं भारतीया वन्दनीया पुण्या भूमिः।

अस्यामेव हि भुवनतपनप्रथममयूखमुखरितप्राच्यकाष्ठाः विश्व-प्रेष्ठाः वेदाः प्रचारिता जाताः। ते हि कदा कथं किमर्थं वा कैः निरमायिषतेति संशयदोलायां दोदुल्यमाना विशालदृशो विच-क्षणाः अद्याप्यनामावधयो बहुधामन्त्रयन्ते। प्रख्यायन्ते च वेदाः श्रुतिस्मृतिपरम्परया स्वयमेव परमेष्ठिचतुर्मुखपङ्कजविनिर्गताः।

तथाहि—"स तपोऽतप्यत तस्मात् तपस्तेपनात् त्रयो वेदाः अजायन्त" इत्यादि । परं सांख्यवेदान्तप्रमुखदर्शनशास्त्रप्रणेतारो महर्षयोऽप्यलोकसामान्येनैव प्रज्ञावलेनैषां पर्य्यन्तभूमिं नाधिरोहन्तोऽन्तःपातिना पौरुषेणार्षेण चक्षुषा प्रत्यक्षीकुर्व्वन्तोऽपौरुषेयाणि हि वेदवाक्यानीति प्राहुः । तथा हि—"गुरुमुखादनुश्रुयत इत्यनुश्रवो वेदः, एतदुक्तं भवति श्रूयत एव परं न केनापि क्रियत इति ।" "न पौरुषेयत्वं तत्कर्त्तुः पुरुषस्याभावात्" इति सांख्यसूत्रम् । अपास्तु तदत्यतीता वेदविषयिणी गुरुका कथा, अत्यतितुच्छा गुर्व्वी गवेषणा च ; यद् रामायणमहाभारतयोः साम्यभावपूर्णम् अत्युदारोपदेशसद्भावसम्भवं लौकिकालौकिकसर्व्वविषयसम्वलितमहाकाव्यस्य जगतां न कुत्रापि सद्भावः समवगम्यते श्रूयते च न घुणाक्षरन्यायेनापि कदाचित् । अपि च भवभूतिकालिदासयोस्तुल्यः कोऽपि वा महाकविः जननमभिलभ्यात्मनोजातभूमिं परकीयदेशञ्च काव्यरसपीयूषधारया समभ्यषिञ्चयत् प्रीणयञ्च हालिकजनमानसमपि सातिमात्रम् । परं कैः कैरेवमेवमालोच्यते यत् "यूरोपीयसेक्सपियरकवेः कवित्वं कालिदासकवित्वस्यानुरूपम् ।"

किन्तु निरङ्कुशया दृशा तद्वाचयितृणां वाचि पर्य्यालोचितायामेवमेवमवलोक्यते यत् कविकालिदासस्य भावः कवित्वं रचनाचातुर्य्यञ्च तत् यूरोपीयकविकुलकुलपतेः सेक्सपियरस्य भावादितः कवित्वसौन्दर्य्येण पदयोजनमहिम्ना प्रसादमाधुर्य्यादिगुणसद्भावसहस्रेण च सर्वत एव उन्नततरम् अत्युच्चकाव्यसम्पत्

परिपूरितश्च। तेनैव च प्रतीच्यभूभागमात्रेषु काव्यान्येतानि किमुत ज्ञानविज्ञानाशेषग्रन्थान् प्रति सातिशयादरः, प्रबला च श्रद्धा, गभीरा हि भक्तिरचलेवानुरक्तिः समवलोक्यते प्रज्ञावताम्। परमिह भूगोल-खगोलादिविषये यादृशीं प्रतिभां प्रस्फुरन्तः वराहमिहिरब्रह्मगुप्तार्य्यभट्ट-भास्कराचार्य्यप्रमुखाः मनीषिणः तदतीव विस्मयकरं कौतुकावहञ्च जगताम्। तेषान्तु सन्दिष्टं ज्योतिस्तत्वमतिक्रम्य नाद्यापि केचन सभ्याः समशक्नुवन् शोभनं नवीनतरं वा तत्तथ्यमाविष्कर्त्तुम्। अपि च मन्यन्ते तावदनेके यत् पुरा पृथ्वीं त्रिकोणां सर्पादिप्राणिपृष्ठावस्थितां परितः एव प्रभाकरः परिबभ्राम इति प्राचीनार्य्याणामतम्। तच्चातिहेया, परिच्छिन्ना, लवमात्रा च धारणेति सर्वथा वक्तुमुपयुज्यते। यतो गोलाध्याये भास्कराचार्य्येणोक्तम् :—"सर्व्वतः पर्व्वतारामग्रामचैत्यचयैश्चितः। कदम्बकुसुमग्रन्थिः केशरप्रसरैरिव॥" अपि च—"नान्याधारं स्वशक्त्या वियति च नियतं तिष्ठतीहास्य पृष्ठे। निष्ठं विश्वञ्च शश्वत् सदनुजमनुजादित्यदैत्यं समन्तात्॥" इति

आर्य्यभट्टेनाप्युक्तम् :—"भूपञ्जरः स्थिरो भूरेवावृत्यावृत्य-प्रतिदैवसिकौ उदयास्तमयौ सम्पादयति नक्षत्रग्रहाणाम्।" किञ्च :—"चला पृथ्वी स्थिरा भाति" इत्यादि।

आर्य्यभट्टो भास्कराचार्य्यश्च नाम पाश्चात्त्यज्योतिर्व्विदाचार्य्याकोपनिसमहोदयात् बहुपूर्व्वमेव जननमभिलभ्य भुवो गतिं माध्याकर्षणशक्तिञ्च समनुज्ञाय यथाहतुः स्म—"आकृष्टशक्तिश्च मही यत् तया प्रक्षिप्यते तत्तया धार्य्यते" एवमपि च येव

निखिलाङ्कशास्त्राणां मूलरूपा दशगुणोत्तराङ्कगणनाप्रणाली सा तु भारतीयमहर्षिचरणाराधितेभ्यः आरवीयेभ्यः पाश्चात्त्यैः सभ्यैरधिगतपूर्वा। उक्तञ्च आरवीयग्रन्थे :—"इलेक्मा अल् हिन्दु" भावार्थस्तावदस्य यद् भारतीयविद्वद्भ्योऽधीतवन्तो वयमङ्कशास्त्रमिति।

अन्यच्च नाम भारतं यदा ज्ञानविज्ञानादिविविधविषयसूक्ष्मातिसूक्ष्मविचारणया दिशा दिग्देशमुद्भासयति, सभ्यान् स्तम्भयति, जगदालोड़यति, तदा तावदनेके नाम देशीयाः का कथा शास्त्रचर्चायाम् ? स्वकीयाहार्य्याणामुत परिच्छदादीनाञ्च संग्रहेऽपि मत्तबालिशाः किं वानभिज्ञा नग्नबालकप्राया इव जाताः। परमपि यत् यूरोपीयदर्शनशास्त्राणां भित्तिस्थानं ग्रीकदर्शनम् ; तत्तु कपिलादिमहर्षिसमुपदिष्टानां तत्त्वपदार्थप्रतिविम्बमन्तरा नान्यत् वस्तुमुपयुज्यते। पिथागोरस्प्रभृतयोऽपि ये नाम ग्रीकदार्शनिकाः ते हि भारतभ्रमणाय समागच्छन्निति प्रमाणमनेकत्र समालभ्यते। नितरां भारतीयेभ्यस्तद्दर्शनवीजं गृहीतं किं न वेति के नाम सन्ति प्रमाणेनावगमयितुम् ?

परन्तु यत् यूरोपीयचिकित्साविज्ञानफलमस्माभिः स्वतः परतो वा नक्तं दिवसमुपभुज्य विस्मीयते प्रसंश्यते च सहस्ररसनया तत्शास्त्रम् फलञ्च। तत्तु आरवीयेभ्योऽधीतवन्तस्ते इति चिरप्रसिद्धिः ; स्वीकुर्वन्ति च मुक्तकण्ठं प्रायश एव महानुभवा विद्वद्वरिष्ठाः इदानीमपि तथा, किन्तु आरव्याः तत्शास्त्रं भारतीयेभ्यः समवच्छन्निति जनश्रुतिः परं प्रमाणञ्च सुलभतरं

तेषां चिकित्साग्रन्थे भारतभैषज्यानां त्रिफलाहरीतकीप्रभृति-द्रव्यानां नामसद्भावं बाहुल्येन समीक्ष्य समुपकल्पितुम्।

किञ्च—"विषस्य विषमौषधम्" इति यत् कविजनसुभाषितम्, तत्तु प्रवर्त्तमानस्य होमिओप्याथनामकचिकित्साविज्ञानस्य मूलतत्त्वम्। परमेतद्वचनञ्चापि आमूलं कस्मिंश्चित् प्रामाणिके तच्चिकित्साग्रन्थे समुल्लेखदर्शनात् सैव प्रणाली च भारतीयानां ज्ञातपूर्व्वेति सर्व्वतः प्रतिपद्यते। अन्यच्च-"अप्स्वन्तरमृतम् अप्सु भेषजम्" इति ऋगृचा बहुशरदूर्द्ध्वेऽपि सलिलचिकित्सात्र प्रचलिता, सर्व्वत्रैव सुसमादृतेति स्फुटमनुमातुं शक्यते।

एवञ्च दृश्यते तावत् स्वकीये परकीये च प्राचीनसाहित्येतिहासग्रन्थे यत् पुरा पोताश्रयेण पण्यार्थं वारिधिवारि समुत्तीर्य्य दिग्देशगमनमुत सम्परायेण परकीयदेशविजञ्च भारतीयानां बाहुल्येन वर्णितम्। नितरां वक्तुमुपयुज्यते ते हि प्राचीनार्य्या न केवलं शास्त्रपारमिताः स्वभुजवीर्य्येण तु परकीयभूमिमपि विजित्यात्मप्रतिष्ठामातन्वन्नतिमात्रम्। रघुवंशे रघोः पारस्यस्थानम्; राजतरङ्गिण्यां काश्मीरभूपतेर्ललितादित्यस्य भुख्खारा-( वोखारा )-वाह्लीक-( वाल्ख )-तुरस्क-( तुर्कस्थान ) प्रभृति प्रदेशानां विजयप्रसङ्गं समुपश्रुत्य सर्वथैतत् सिद्धान्तितं मतं स्वीकरणीयं सभ्यानाम्। एवं नाम सुमात्रा-यावा-वालि-सुखतर-( सक्कोद्वा ) प्रभृतिषु द्वीपपुञ्जेषु इदानीमपि सनातनधर्म्मिणामुपनिवेशनिदर्शनमवेक्ष्य वक्तुमुपयुज्यते यत् पुरा वाणि-

ज्यार्थं धर्म्मप्रचारार्थं वा तैस्तं तं देशं समेत्य उपनिवेशः स्थापितः। यावाद्वीपे तु सम्प्रति यदि च माहाम्मदीयो धर्म्मो बाहुल्येन वर्त्तते, तथापि तत्रावलोक्यन्ते द्विशताधिकाः देवमन्दिरा अतीतार्य्यगौरवमुद्घोष्यात्मनः स्थितिमातन्वन्त्यतिमात्रम्। तत्रत्ये तु देवमठके धातु-पाषाणविनिर्म्मिताः शिव-दुर्गा-गणेश-सूर्य्य-प्रभृतिदेवविग्रहाः सुप्रतिष्ठिताः सन्ति। परं तांस्तानद्यापि देव-विग्रहान् वैधर्म्मिकाः समभ्यर्च्चयन्ति सातिशयां भक्तिमभिवर्षयन्ति च तराम्। वालिद्वीपे संप्रत्यपि च यद्धर्म्मः प्रचलितः तं तु सनातनार्य्यधर्म्ममन्तरा नान्यत् वक्तुमुपयुज्यते। तत्र ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः इति मौलिकवर्णचतुष्टयाः प्राधान्येन निवसन्ति। तेषु च ब्राह्मणाः इदानीमपि आमिषमन्तरा केवलं यव-तण्डुल-फलमूलाशनैरेव जीवयात्रां निर्व्वाहयन्ति।

एवं तत्र शवदाहरीतिः सहमरणप्रथा च प्रचलिता स्त्रीणाम्। वर्त्तते चापि नीति-रामायणार्ज्जुनविजयागम-देवागम-सत्त्वागम-प्रभृतीनां ग्रन्थानां पठनपाठनम्, शार्दूलविक्रीड़ित-वसन्ततिलकादिसंस्कृतच्छन्दसां पद्ये प्रचलनञ्च बाहुल्येन। ऐतिह्यञ्च यावा-वालिद्वीपवासिजनसमाजेषु यत् भारतीयकलिङ्गप्रदेशादेव ते तत् द्वीपं समेत्य निवसन्तीति।

अन्यच्च यत् प्रसिद्धं लङ्कानाम द्वीपं तद्भारतवर्षस्यातिसन्निकृष्टम्। तत्र च बहुलशरदारभ्य एव भारतीयानां गमनागमनमवस्थितिस्तस्य विजयवार्त्ता च संश्रूयते। यत् पुरा अयोध्याधिपतिः रामचन्द्रस्तत्राधिवसन्तं भीषणानुशासनं दशाननं

निष्कृत्य स्थलमेतद्विजयमकार्षीत्। तदनन्तरञ्च बौद्धधर्मप्रचारार्थं राजराजेश्वरो महामहिमाशोको नाम राजा स्वमात्मजमात्मजाञ्च तत्प्रदेशं प्राहिनोत्। ततोऽपि बहुलतिथावचिते गौरीयराजतनुजो विजयसिंहो भ्रातुष्पुत्रपाण्डुवासेन सह तत्स्थलीं समेत्य स्वभुजवीर्य्येण भूपतिं पराजित्य लोकान् शशास। ततःप्रभृति लङ्काद्वीपस्य सिंहगोष्ठीशासिततया सिंहलं नाम समुपपन्नम्। परतो नूनं तत्र श्रीमन्तादिश्रेष्ठिजनानां वाणिज्यार्थं तत्रोपस्थितिवार्त्तया च मामकभाषितानां सर्वथावितथत्वं सम्यक् प्रतिपद्यते।

किञ्च श्रूयते प्राक् भारतभूपालाः रोमीयराजपरिषदि स्वीयप्रन्देशहरं संप्रेष्य तत्रत्यं तत्त्वमवगच्छन्। परं खृष्टीयप्रथमशर्कामित फलितज्योतिर्व्विदस्तत्रोषित्वा शुभमशुभं वा भाग्यफलं वर्षफलमुत अन्यत् किमपि वा ज्योतिस्तत्वं निर्द्धार्य्य प्रतिष्ठां समादधिरे। अपरतः खृष्टजन्मनो द्वित्रेऽपि शतवर्षोर्द्धे अत्रत्यानां श्रेष्ठिनां दीगुच्याऽफ्रिकादेशस्थ-कार्थेजप्रदेशे गमनागमनवार्त्ता संस्थितिश्चाप्यवगम्यते।

खृष्टजन्मनः एकपञ्चाशदधिकद्विशतवर्षोर्द्धे (२५१) सिसिलिद्वीपप्रदेशे रोमकाधिपेन सह ह्रासद्रुवालनामधेयस्य कार्थेजसेनापतेरतिदारुणे संप्रवर्त्तमाने सम्पराये रोमीयैः प्रतिपक्षवलानां कार्थेजीयानां बहवो भारतीयसंग्रामकुशलाः कुञ्जराः निजायत्तीकृताः। परम् आसंश्च तेषां हस्तिपकाः भारतवर्षीयाः सर्व्व एवेति। अन्यत् केचन लोनस्नाम्ना मिसरदेशीयकविनोक्तं स्वरचिते

काव्ये, यत् भारतीयानामर्णवपारापारविषये परं प्राविण्यमुत जलयुद्धे च सकलेभ्योऽप्यधिका शक्तिर्मेधानैपुण्यञ्च समवलोक्यते।

डङ्गलसन् महोदयेनापि स्वरचिते पुरावृत्ते परिकल्पितम्; यत् खृष्टप्रथमशकमिते आरवीयाणां भारतवर्षीयाणाञ्च नाविकानां मिसरप्रदेशगमनागमनवार्त्ता प्रमाणञ्चानेकत्र भूरिश एवोपलभ्यते। परं तस्मादपि पूर्व्वतने काले प्राच्याफ्रिकापादावस्थितं सकोट्राद्वीपमधिवसन्तो भारतीयाः स्वकीयाधिकारं कृतस्तद्देशं व्यावर्त्तयन्त इति। अपि च खृष्टपूर्वषष्ठीतमे वर्षे (६०) सिन्दुवहित्रमारुह्य कतिशः सनातनधर्म्मावलम्बिनो वणिजः जर्म्मणोदधिमुपगताः। तत्र च दैवगत्या त्रुटितयानतया वेलाभूमिमवलम्बितान् तान् सुवेरियाधिपतिः रोमकराजप्रतिनिधिं प्राहिणोदित्युदन्तमस्माभिरुपलभ्यते। एवं प्रत्नतत्त्वविशेषज्ञेन राजेन्द्रलालमित्रमहोदयेन च प्रमाणितमेकदा बौद्धधर्म्म आसमग्रनरओयप्रदेशे प्रचारः आसीत्। परं यूरुपदेशस्य च बहुतरे प्रदेशे रुद्रोपासना प्रचलिता जाता, रट्ल्याण्ड-रटडोमराटिरूवन् प्रभृतिजनपदानामोट्टशनामेव तस्याः प्रकृष्टं प्रमाणम्। एवमासीच्च पुरा स्कटलण्डस्य हाइल्याण्डप्रदेशे काचित् क्रिया या प्रज्ज्वलद्धुताशने नवनीतं गोधूमादिशस्यञ्च विनिःक्षिप्य "मां धनं देहि" "मामश्वं देहि" इत्यादि वेदोक्तहोममन्त्रेणाग्निं तर्पयन्ति लोकाः। अतएव तया सर्व्वथा प्रतिपन्नोऽस्ति; जातु तत्र वेदधर्म्म एव प्रचलित आसीत्। परमशोकप्रहितश्रमणकानां चीने जापानप्रदेशे च गमनागमनवार्त्ता बहुधोपलभ्यते;

किन्तु ततोऽपि अर्वाचीने काले महर्षीणां तत्र गमनमाचारशिक्षा चापि श्रूयते। नीलतन्त्रे वसिष्ठदेवस्य चीनाचारशिक्षार्थं चीनदेश-गमनम्। देवर्षेर्नारदस्य श्वेतद्वीपाभियानमित्यादि बहुषु ग्रन्थेषु विदेशप्रयाणमार्य्याणामुपलभ्यते। क्षुद्रतमेऽस्मिन् निबन्धे तेषां दिग्दर्शनमेव समवतारितं विस्तरभयात्।

अपि नाम कलम्बसे संप्रति यद् आमेरिका नाम महादेशाविष्कर्त्तृत्वमारोप्य परमगौरवकुसुमवृष्टिमभिवर्षन्ति पाश्चात्त्यसभ्याः, तत् पयोधिपरिवेष्टितभूमिखण्डं तस्माच्च बहुशरद्भ्योऽपि ज्ञात-मासीदार्य्याणामवगम्यते। यतो हि दृश्यते तावत् प्रवर्त्तमाने कालेऽपि तद्देशान्तःपातिपिरुनामकजनपदमधिवसन्तो भूपतयः आत्मानं स्वगोत्रञ्च सूर्य्यवंशीयत्वेन व्यपदिशन्ति। एवञ्चापि वर्त्तते तेषां भूभृतां प्रधानमहोत्सवकार्य्यं "रामसीतीया" नामकम्। तत्त् रामसीतार्च्चनं विना नान्यद् वक्तुं सङ्गच्छते। केवलं देशभेदेन तस्य यत् किञ्चिद्विकृतिमात्रमन्तरेति। एवमपि समवलोक्यते पुरा कतिशो बौद्धश्रमणकाः स्वधर्म्ममतप्रचारार्थं वर्त्तमानसकलजनपदवैभवमुख्यतममामेरिकाभूप्रदेशमभिययुरिति कस्मिंश्चन चैनिकग्रन्थे लिखितमस्ति। सुतरां ज्ञातपूर्व्वा आमेरिका भारतीयानां सर्व्वथोपपत्तिः, परमेवंविधस्य बहुशो दृष्टान्तस्य नानाविषये नासद्भावोऽवलोक्यते स्वकीये परकीये वा पुरावृत्त-सम्वलिते ग्रन्थे।

संक्षेपतस्तु स्थूलेन सूक्ष्मेण वा दृशा रसायनज्ञाने संगीते स्थापत्ये कलाज्ञाने भास्कर्य्ये परस्मिंश्च क्वापि विद्याविषये वा

यत्र यत्रैव लोचनवीक्षणं संपतति तत्र तत्रैवातीततमानामार्य्याणाममानुष्यं नैपुण्यमतुलनीया शक्तिरप्रतिद्वन्द्वी प्रतिभा च समवलोक्यते। किन्तु कष्टं भोः कष्टम्! "ते हि नो दिवसा गताः" अस्माकं तानि दिनानि गतानि, भूय एव समेष्यन्तीति कल्पनामपि प्रवर्त्तमाने जगति कल्पयितुं कोटिका वाधा निराधारा हीनता च सहस्रमूर्त्त्या वाधयति खगयति दूनोति च मदीयमिदं हृदयचैत्यम्। नूनं तादृशान्वयसम्भवित्वेनात्मानं परिचाययितुमधुना सर्व्वथायोग्याः खलु भारतीयाः। नूनं न ज्ञायते कदा कर्हि विश्वनियन्ता तेभ्यः पूर्व्वाधिकारपर्य्यन्तभूमिं प्रत्यर्पयिष्यतीति कृतमधिकवचसा।

---

## "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।"

हंहो! सामाजिकाः, अयि प्रियपाठकाः, सुकुमाराः कुमाराश्च, संविजानन्तो भवन्तः समग्रेऽस्मिन् संसारे, प्रोन्नतमानवसमाजे, निकृष्टजनमध्ये च यन्मूर्त्तिमतीस्नेहरूपायाः "कारुण्यकुसुमस्तवकितान्तःरणकल्पवल्लीप्रच्छायशीतलाङ्कायाः" जनन्याः सर्व्वेभ्योऽपि समधिकशान्तिसौख्यनिधानतया सर्व्वातिशयितमनोहारितया च निरतिशयितं गरिष्ठं सर्व्वसुख्यस्थलञ्च न वर्त्तते तदन्यत् किञ्चनाद्य जगति।

अहो रे! तस्याः परिमलपीयूषप्रतिमवक्षोजरसपानविमलीकृतप्रफुल्लमानसाः निखिलज्ञानविज्ञानाटवीसञ्चरन्तः सन्तः प्राज्ञ-

मुख्या: किमु पांशुपवद्धकरचरणा:, वर्णस्वरूपाविजानन्तो नितान्तमन्दमतयो वालिशाधमा:, अथवारण्यानीविचरन्तो गिरिगुहाश्रया: पशुपक्षिणोरामममांसमात्रमश्नन्तो वन्यवराहसहचरा: शश्वद्धिकत्थनचयचर्च्चितचित्तप्रदेशा: मनुजनाममात्रविगर्हन्तो वर्व्वराश्चापि वाढ़मेव तामनन्यसामान्यामपूर्ववस्तु संविज्ञाय सर्व्वान्त:करणेन भृशमभिनन्दयन्ति, अर्च्चयन्ति च तत्पूतप्रतिमामनन्यसाधारणीं कारुण्यभूमिं मत्वा स्मृत्वा प्रत्यक्षीकृत्वा च प्रतिक्षणे प्रतिपदे प्रतिकार्य्ये च सम्यक्।

हन्त! तस्या: स्नेहाद्रमूर्त्तिपरिकल्पनेन मन्दाकिनीवारिधाराप्लुतप्रदेशस्थलीव सततं पवित्रीयति सुखायते च सकलदु:खदैन्यैर्मथितञ्चापि द्राक् तनयानां तनुजानाञ्च हृदयतलम्। अपि हि तया तनयतनुजानां सुखे वा दु:खे वा नितान्तदुर्गतदशायां वा कायच्छायेव संस्थायात्मसुखं भोग्यं भुञ्जञ्च चिरमुपहारीक्रियते वरिष्ठस्य क्लेशस्य सुकठोरे कर्कशे करे।

पर किं नाम तस्या: सुतवात्सल्यम्? का नाम वा परा सन्तानार्थपरता, महच्चापि च कष्टम्? दृश्यते हि लोके निकृष्टप्राणिमध्ये च आगर्भग्रहणात् प्रसवपर्य्यन्तं भ्रूणार्थं जननी संसहते पुंसोऽननुभवनीयां दुर्विसहां महतीमपि च यातनाम्। जाते च बाले तस्य परिरक्षणे, प्रतिपालने, सुशिक्षायां वा कति कतिश: कायक्लेशा:, कति वा भावना:? परं दृष्ट्वा प्रमादिते गर्भे बाले वा तस्या वेदनाया: नास्ति पारं नास्ति वा तुलना अवधिर्वा भुवि किञ्चन दृष्टान्तस्थलम्।

हा हा !! दैवाद् यदा रोगाभिभूतस्य विकलाङ्गस्य नष्ट-चित्तस्य चिररुग्णस्यापि वा तनुजस्यान्तिकं तल्पतलं वा सन्ततं संस्थाय सुरभिजधीरसमिराकम्पितनवद्रुमप्रवालोपमैरिवाग्र-हस्तैः प्रत्यङ्गं संमार्जयन्तौ सर्वापराधं मर्षयन्तौ सरलान्तःकरणा केयं सा गलदश्रुप्रवाहमुखी धरातलमभिसंसिञ्चन्त्यानन्यचेतसा भगवन्तं नक्तं दिवं तच्चरणारविन्दप्रसादकरुणाकणां प्रार्थयते सूतिमन्तरा सूतार्थं काचिदपरात्र जगति ? अतएवाहुः—

"मातरं पितरञ्चैव साक्षात्प्रत्यक्षदेवताम्।
सदा गृही निषेवेत सर्वकालमतन्द्रितः॥
पृथिव्यां गुरुतरा माता गगनादुच्चतरं पिता।
तृणाल्लघुतरो भिक्षुर्वाताग्रे चलति मनः॥" इति

एवंविधानां जननीनामपि जननीजन्मभूमिर्जातमात्रमपि सूतं प्रसूतितोऽप्यग्रे व्यग्रहस्तौ प्रसार्य्यान्येषामलक्षितेन स्वैरं स्वैरं स्वीयवक्षसि सन्निधाय प्राणधारणोपकरणं निःश्वासप्रश्वासादि-विविधवस्तुजातं समर्प्य तेन सह सर्वाग्रे सम्बन्धं स्थापयति परि-रक्षति च सा क्रमशो भुज्यभोग्यादिदानेन दशातो दशान्तरे जातम्। परं सद्यः समुद्भवस्य तस्य यज्जननीस्तन्यरस एव जीवनधारणप्रधानकारणतया विनिर्दिष्टोऽभूत्, तस्यापि च भूमिरेव सर्वप्रधाना हेतुरित्यवगम्य मन्यामहे नासीत् पृथिव्यां तदधिका कापि प्राणिपक्षे प्रीतिप्रफुल्लसाच्छन्द्यमूर्त्तिरन्यस्य काचिदपरात्र जगति। अतएव किञ्चिदुन्मानोन्मानोन्मेषि-तानां मनुजानां कायवाङ्मनोभिः सैव सर्वथा संसेव्या, संरक्ष-

णीया, संभूषणीया चास्मग्रत्यनुरूपया चेष्टयेति कः सन्देहस्य प्रश्रयस्तत्र मनाक्।

नूनमिह यत् स्वर्गो नाम श्रूयते, स हि सुखसाधनस्यान्यतरादन्यो वस्तु नेति श्रुतिस्मृतिप्रमुखाप्तवाक्यैः सुसमाश्रितं, नितरां तदेकान्तान्वेषणपरैः सबहुमानं नानादिशा प्रपञ्चीयते स्वर्गाधिगमनाय सुमहती प्रचेष्टा। केचिदिन्द्रियादिविनिग्रहणकर्मभिर्दुष्करस्तपोऽनुष्ठानैश्च, केचन दानादिसत्कार्य्यनिवहैः परोपकारैश्च, अन्येऽपि च अगणितगणनोपायैर्नाकसुखसम्भोगाय सर्वथा समीहन्ते, किन्तु तेनैव विगणयन्ति विग्रह-निग्रहकान् हिम-मारुत मार्त्तण्डकरादिक्लेशसमूहान् कथं कथमप्यत्र जगति। परिशेषे प्रयान्ति हि सहस्रशो गुरुकठोरप्रत्यूहानतिक्रम्यासाधारणक्लेशपरम्परयामरीजननिषेवितां वैजयन्तीनाम पुरीम्।

परं हि यस्याः सहजलभ्यप्रभूतप्रसादपारिपाट्यतया सर्व्वत्राप्रतिहतप्रेमप्रसरतया निरवद्यपरमहृदयानन्दसन्निधानेन च वाङ्मनसोरप्यगाचरा शान्तिसंविधायिनी स्वसूतानामशेषसौख्यपरम्परायै गृहीतातुलस्नेहराशिर्मातियं जन्मभूः स्वर्गतोऽप्यतिरिच्यते। यतो महतोऽपि महीयस्याः स्नेहकल्पवल्याः शस्यौषधिभेषजाद्यैः परिपोषिताः परं दिगन्तप्रसारितसौरभप्रसूननिकरैः प्रसाधिताः, मलयजोशीरकर्पूरकस्तूरिकादिभिर्गन्धसम्भूतवस्तुसम्भारैः सुवासिताश्च; परमेवमेवंविधया परिपोषिताः सन्तः सन्तानसमूहाः कमनीयकान्तिसुसम्पन्नं कायमामरणमेवा-

दधति, परिपुष्णन्ति च नानोपचारैः सन्ततम्। नितरामेना-
मन्तरा क्षणभङ्गुरेऽस्मिन्नवनीतले न तावदेकास्ति वितरितुमुत्-
सहते अनाकाङ्क्षितामनन्यसाधारणीं सुमहतीं करुणाधाराम्।
केवलं मातैव वसुन्धरा तनयैर्भृशं विप्रकृतापि परं कारुण्य-
मानसाजीवनं तेषां कल्याणाय सम्पत्तये च समीहते संयतते
संसहते च सर्व्वविधामपि दुःसहयातनाम्।

अपि योऽसौ प्रसूतेरपि प्रसूतिर्जन्मभूः सा सुखे वा दुःखे वा
सम्पत्तौ विपत्तौ वा परं मातृगर्भावस्थितवेलायां वा तद्देहमेव
द्वारीकृत्य सर्व्वतः परिरक्षति जीवयति वर्द्धयति च नूनमेव
जन्तून्। श्रुतं तावत् शास्त्रशासने यद् दुश्चरस्तपश्चारिणाश्चर्य्ये-
णामरपुरप्रवेशिनामपि पुनः पुण्यक्षयान्मर्त्त्यलोकाभिगमनं
निर्दिष्टं विधानं वा विधातुर्यथा :—"क्षीणे पुण्ये मर्त्त्यलोकं
विशन्ति" इति। समवलोक्यते च भारते नहुषो नाम सोमात्
क्रमपर्य्यायेणोत्पन्नः कश्चन नरपतिर्दुष्करेण तपसा स्वाराज्य-
मभिलभ्य क्षीणपुण्यात् पुनर्धरणीमेत्य पन्नगयोनिमवाप।

एवं हि लोकेऽस्मिन् ये तावन्मन्दमतयः पापानुशीलनोत्-
सुकाः महापातकपङ्केरालिप्तकर-चरण-कायाः ते चापि प्रति-
क्षणं प्रतिपदमेव स्नेहकल्पलतिकाया जन्मभूमेरशेषप्रसादमभि-
लभ्य निरतिशयं शान्तिसुखं परमाश्चापि प्रीतिमुपभुञ्जते सन्त-
तम्। एवं श्रूयते तावदास्तिक्यवादिनः प्रमुखात् द्युलोका-
भिगमनं तस्य निरामयशान्तिसुखञ्चातिकठोराभिस्तपस्याभि-
रालभ्यं, किन्तु जन्मभूमिस्नेहसम्भोगशान्तिसुधा पुनः सर्व्वथा

सर्वजनानां समानाधिगम्या प्राप्या च। दृश्यते सर्वत्राविषम-दृष्टिश्चापि तस्याः भृशं विलसतितरां जीवजगति। एवमपि नाम नहि तावदेवंविधाः केचन सन्ति जन्तुपदवाच्याः यान् प्रति कदा कस्मिन्नपि न खलु कथं कथमपि निपतिता जन्म-भूमेरपारा स्नेहदृष्टिः। सुरस्थानं तावत् सर्वातिरिक्तमाहात्म्येऽ-र्यतिब्रह्मचारिस्नातकादिभिर्निरन्तरमाराध्यापि भगवत्त्वमनेकत्र नोपलभ्यते, किन्तु सर्वदेयं महीयसी मही ज्ञानतोऽज्ञानतो वा सन्तानान् प्रत्यभिवर्षति निरर्गलाः सुपुष्कलाः करुणावृष्टिधाराः।

इत्थमित्थमेव दिशा यथार्थं विचार्य्यताम् आर्य्यवर्य्यैः विच-क्षणैश्च यत् स्वर्गापेक्षया जन्मस्थल्याः कीदृशं गुरुत्वं कीदृशी वापूर्व्वाकर्षणशक्तिस्तस्याः विलसति तराम्। यच्च दूरे दूरतरे वा राजैश्वर्य्यभोगनिरतान् किमु पुष्कलविलासोपकरणमुपभुञ्ज-मानान् विलासिजनप्रधानानपि मनुजान् जाङ्गलिकातिनिकृष्ट-स्थानमाहात्म्यात् विरलपथादिदुर्गता पल्लीस्थली तान् तानेव प्रसभमाकर्षितुमपि समवलोक्यते। हीनप्राणिमध्ये च दृश्यते पशुपक्षिप्रभृतयो जीवाः स्वाहारार्थं सुदूरं व्रजन्ति जठरं प्रपूर्य्य सौत्सुक्येनात्मावासं प्रति रंहसोपसर्पन्ति, रचन्ति च तत् विल-दुर्गं नीड़ं वा विपक्षेभ्यो यथोचितचेष्टयात्र जगति।

अहो! किमद्भुतजीवहृदयाकर्षणकारिषु वस्तुनिवहेषु जन्म-भूमिरिति नाम भूमिखण्डम्। श्रुतमवगतञ्च भूविवरणात् यन्मेरुमण्डलोपगत-ल्यापल्याण्डनामके देशे मासषट्कमेव सूर्य्यस्तत्र समुदेति परांश्चापि मासान् मेरुत्विषैव ( Polar-

light ) प्रदीप्ता तत्रत्या तुषारोपचिता हिमोघरानिर्वचनीया भूमिः। यदि चेयमप्रचुरालोकसद्भावतया पादपदवीहीनतया शस्यादिशून्यतया च माद्दृशानां दृशदि सा आवासाननुपयुक्ता सर्वथा प्रतिभाति, तथापि एस्किमोनामधेयाः कतिशो मानवाः सानन्दं तामधिवसन्ति। आमोदाह्लादानिना क्रीड़ाकौतुकेन च संसारयात्रां संवाहयन्ति, शीलादिसामुद्रिकजीवमांशैः स्वोदरं प्रपूर्य्य अस्मदादिवत् विचरन्ति, सर्वं निर्वाहयन्ति च सुखेन। परमेवमभीच्य जन्मभूमितया तेषां तत्रावासासक्तेः कारणं मिति प्रतिपद्यते। अतः सर्वथैव धन्या जन्मभूमिः, धन्या ते च निरुपमा सौम्या मूर्त्तिः !! या प्रत्यक्षशरीरं परिगृह्य सर्व्वानेव जन्तूनुन्नयति, समाकर्षति, तेभ्यः समर्पयति च स्वर्गाधिकावाससौख्यमत्र जगति।

नूनं स्फुटतः प्रतिभाति यस्मिन्नेव जन्म परिगृह्य यद्देशजैर्भक्ष्यैः प्राणान् धृत्वा जन्तवो जीवन्ति, विश्ववैचित्रं समीक्षन्ते ज्ञानविज्ञानानामनुशीलनञ्च विदधति मनोरथानुमतं सामग्रीचयमूर्ध्व पुरुषचरणरजश्च समुपलभ्यन्ते, सा सर्वेभ्योऽप्यधिकेति पुनर्नं कैरेवाङ्गीक्रियेत सभ्यमुख्यैः वर्णज्ञानविहीनैरपि वा मनुजैरिति संविभाव्य महानुभवैरुद्गीतम् :—"जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" इति।

एवं श्रूयते समवलोक्यते च इतिहासस्य पृष्ठातः पृष्ठान्तरे यच्चात्मजन्मस्थलीपरिरक्षणे बहुशः स्वदेशवीराः वीरमर्य्यादामनतिक्रम्य सुरपुरमुपाययुः। साम्प्रतमपि यूरुपखण्डे कति कति

योद्धार: स्वदेशार्थं त्यक्तासून् जगति शुभ्रं यशो वितेनिरे। परं दीर्घदिनादारभ्य यदि च भारतादन्तर्हितपूर्वा सेयं स्वदेशवत्सलता, तथापि वर्त्तमाने कतिशः क्वतिवङ्गीयाः युवानः अन्ये चापि च भारतीयाः बहवः स्वदेशहिताय वित्तमर्थं स्वं जीवनञ्च परिजहुः कारावरुद्धाश्च के केऽपि राजविधानेनाजीवनं निर्जनगृहावासदुः-सहदुःखं मौलिभिरेव सम्प्रत्यपि वरयन्ते। एवमेवं समीक्ष्यावगम्य च सुधियां कुधियां निर्धियामपि वा सर्वेषामेव जन्मभूमिं प्रति गभीरा श्रद्धा, सरला च प्रीतिरभिवर्षणीया संस्थापनीया च मातृमर्य्यादा शाश्वती समात्र जगति।

ये च मन्दमतयः स्वदेशद्रुहिणोनराधमाः एवंविधायामपि सर्वसौख्याधारभूतायामुद्भवभूमौ सर्वान्तःकरणेन विश्वासमपरां समुचितां भक्तिं नोत्पादयन्। तेभ्योऽधिकाः के तावत् सन्ति सर्व्वराः अधन्या अकृतज्ञाश्च मानवसमाजे दिवाश्चैवापरे लोकाः? मन्ये तेषामननुष्ठेयानि कानिचिदपि न सन्ति किल दुष्कृतानि भुवनत्रये। विधातापि च दृढैव तान् प्रति समुचितं निग्रहं विधाय लोकान्तरे वीभत्सनिरयं व्यवस्थाप्य जीवनान्तं वृश्चिकदंशनज्वालया विदह्य च मरणाधिकां शास्तिं वितरतीति किं बहुजल्पनया।

—*—

## "धर्म्मार्थकाममोक्षाणामारोग्यं मूलकारणम् ।"

अपि नाम जगत्यस्मिन् सर्व एव लोकाः अशीतिलक्षयोनिं परिभ्रम्य परिशेषे तु मानवजन्म लभन्त इति श्रुतिस्मृतिप्रसिद्धम् । तथा च भागवतम्—

"अशीतिलक्षजन्मनः परं मनुष्यतां व्रजेत् ।
न तत्र धर्म्मचक्षुनं वृथा जनुर्गतं भवेत् ॥" इति

अतएव इदं हि मानुषं जनुः सर्व्वेभ्योऽपि निरुत्तममिति किं तत्र विचारस्यावसरः । नितरां मानुष्यजन्मनः परमोद्देश्यं परमपुरुषार्थसाधनम् । तस्य मूलकारणं पुरुषस्यारोग्यमेव, एवञ्च यथा कश्चित् चरणविरही गमनशक्त्यभावेन घनसोपानावल्यध्वनि विद्यमानेऽपि नयनमनःप्रसादकरं प्रासादतलमारोढुं न प्रभवति, तथैव मानुषजन्मरूपे सोपाने सङ्गावे मूलकारणभूतामारोग्यरूपां पुष्कलां शक्तिमन्तरेण धर्म्मार्थकामरूपभूमिकां त्रयारोहणपूर्वकमतिदुरारोहं निर्व्वाणपदप्रासादमारोढुमपि न शक्नुवन्ति तेषामादिकारणमारोग्यमेवेति तथैव तत् वचनविन्यासः ।

सन्तीह तावदशेषोपतापाः । ते च विविधसंज्ञया विशिष्यन्ते परमविधेयैरार्य्यमिश्रैः । तेषामेवाभावेन शरीरस्य स्वास्थ्यमारोग्यशब्देनोपदिश्यते । तच्चारोग्यं सुखस्य निदानम्, ज्ञानस्य पन्थाः, परमार्थस्य क्षेत्रम्, उन्नतेः खलु प्रकृष्टा भूमिः, मुक्तेश्च प्रथमं सोपानम् । तत्तावत् स्वास्थ्यसम्बन्धिनां विविधनियमानां

सम्यक्परिपालनेन सम्पद्यते तेऽपि नियमा व्यायामादिशरीर हितसाधनान्युच्यन्ते। तथा हि—

"व्यायामो हि सदा पथ्यो वलिनां स्निग्धभोजिनाम्।
स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः॥
लाघवं कर्म्मसामर्थ्यं स्थैर्य्यं क्लेशसहिष्णुता।
दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते॥
न च व्यायामिनं मर्त्त्यं मर्दयन्त्यरयो वलात्।
न चैनं सहसाक्रम्य जरा समधिगच्छति॥" इति

स च व्यायामो मात्रया प्रत्यहमेव करणीयः, तस्मात् शरीरस्य स्फूर्त्तिर्वलस्य वृद्धिर्देहस्य च कान्तिरुत्पद्यन्ते। अपि तदनुष्ठानमतिमात्रं नोचितं तेन शरीरस्य हानिः सम्भवति, सुतरां दूषयति चरकसंहिताकारः। यथा—

"शरीरचेष्टा या चेष्टा स्थैर्य्यार्था वलवर्द्धिनी।
देहव्यायामसंख्याता मात्रया तां समाचरेत्॥
श्रमः क्लमः क्षयस्तृष्णा रक्तपित्तप्रतामकः।
अतिव्यायामतः कासो ज्वरः छर्दिश्च जायते॥
व्यायामहास्यभाषाध्वग्राम्यधर्म्मप्रजागरान्।
नोचितानपि सेवेत बुद्धिमानतिमात्रया॥" इति

तथा आहारविषयेष्वपि सदा संयमिना भवितव्यम्। यत् स्वप्रकृत्यनुसारं पथ्यं स्यात् तदेव भोक्तव्यमन्यथा रोगा आविशन्ति, पथ्याकरणेन भेषजैरपि ते नाशयितुं न शक्यन्ते। अत एवोच्यते लोलिम्बराजेन वैद्यकजीवने—

"पथ्ये सति गतार्त्तस्य किमौषधनिषेवनैः।" इति

अधिकभोजनं सदात्महितमिच्छुभिर्वर्जनीयम्। तथाहि— "अतिभोजनं रोगमूलमायुःक्षयकरं तस्मादतिभोजनं परिहरेत्।" इति वस्तुत तावदेव भोक्तव्यं यावत् सुखं परिपाकञ्च भजेत, पक्वतां परिगतमन्नं पीयूषप्रतिमफलमातनोति, तथापरिपक्वञ्च विषभावेनाक्रम्य ध्वंसोन्मुखमेव समानयति जिह्वारसरसिकानापातसुखाभिलाषिणो मनुजान्। उक्तञ्च शार्ङ्गधरसंहितायाम् :—

"रसो भवति संपक्वादपक्वादामसम्भवः।
वह्निर्बलेन माधुर्य्यं स्निग्धतां याति तद्रसः॥
पुष्णाति धातूनखिलान् सम्यक् पक्वोऽमृतोपमः।
तथा मन्दवह्निविदग्धश्च कटुश्चाम्लो भवेद्रसः।
विषभावं व्रजेद्वापि कुर्य्याद्वा रोगसङ्करम्॥" इति

परं तथैव सततमतिनिर्मुक्ते देशे स्वच्छो वायुरुपसेवनीयः। येन वायुरेव हि सर्वेषां भूतानामाधारः, प्राणिनां प्राणाश्च उच्यन्ते। तेनैव ते जगत्प्राणसञ्ज्ञया कोषकारैरुच्यन्ते। स च सुविशुद्धो निषेवितो विकारं तत्त्वं भस्मसात् करोति, नाड़ीषु सन्निकृष्टं शोणितं शोधयति, देहस्य प्रतिभागं सञ्चारयति, मस्तिष्कशक्तिं नवीकरोति, चेतश्च प्रसादयति, मनसश्च जाड्यं दूरमपनयति। अपरं य एव प्रदेशोऽतिजघन्यलोकादिनिवासनिबन्धनया तथा विषौषधिपुष्पादिगन्धदूषितेनाविशुद्धवायुनामगन्धयुक्तेन च परीतः परिव्याप्तः स्यात्तत्र न कदापि कथं कथमपि विहर्त्तव्यम्। तदुक्तं

सुश्रुतसंहितायाम्—"विषौषधिपुष्पगन्धेन वायुनोपनीतेनाक्रम्यते यो देशस्तत्र दोषप्रकृत्यविशेषेण कासश्वासवमथुप्रतिश्यायशिरोरुग्ज्वरैरुपतप्यन्ते।" इति

अतः स्वास्थ्यरिरक्षिषुभिर्यदुक्तं शास्त्रवचनं तत् परिपालनीयम्। नियमपूर्वकं प्रत्यहं सान्ध्यप्राभातिकसमीरणसेवनम्, मात्रानुरूपो व्यायामः, विमलाभिरद्भिरवगाहनम्, सुपरिष्कृतपरिच्छदपरिधानम्, कीटपङ्कधूलिलूताजालादिविवर्जिते सभ्ये वेश्मनि वासश्चेत्यादिकानुतिष्ठतां न जातु स्वास्थ्यसम्पद् व्याहन्येत, रोगाश्चापि न सम्भवन्ति तराम्। आरोग्ये च सति पुरुषो धर्ममर्थञ्च संसेव्य वशीकृतेन्द्रियग्रामः परमपुरुषार्थमपि लब्धुं प्रभवति तराम्। तद्देशगमनद्वारमतिक्लेशादिकष्टबहुलं योगाचारं हेलयोपचरन् सांसिद्धिकजननमरणादिदुःखमतीत्य नित्यानन्दञ्च संलभते। उक्तञ्च गीतायां—

"युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥" इति

रोगाभावे च चिरमस्वास्थ्यदग्धहृदयाखिललोकनाथात् धूलिधूषरितपलालतल्पोऽपि निरुजः परमानन्दमास्वदते। किञ्च स्वास्थ्यमन्तरेणानेकेऽपि बृहस्पतिकल्पाः पुरुषाः न विद्याधिगन्तुं नापि वा संसारसुखञ्च भोक्तुं प्रभवन्ति। बहव एव यथेच्छाचारेण स्वास्थ्यभङ्गादकाले कालकवलं यान्ति। इत्यादि बहुकारणकूटपर्य्यालोचनयावधीयते स्वास्थ्यनियमपरिपालनद्वारा

रक्षितमारोग्यमेव चतुर्वर्गसाधने प्रधानतमो हेतुरिति सुष्ठु संभाषितम्—

"धर्म्मार्थकाममोक्षाणामारोग्यं मूलकारणम् ।" इति

---

## X "न लोभादधिको दोषः"

इह किल क्षणभङ्गुरायमाने संसारे लोभो नाम मनुजानामन्यतमोऽतिभीषणतमो महानजेयो रिपुः । स च पुंसां शशिनस्तुल्यवंशम्; कन्दर्पस्येव सौन्दर्य्यम्; कार्त्तवीर्य्यार्जुनप्रतिमं वीर्य्यम्, किमु निखिलगुणास्पदमपि स्थलं प्रसभं समाक्रम्याधःपातयति । लोभाकृष्टो हि कार्य्याकार्य्यं विवेक्तुं न शक्नोति, पूज्यापूज्यं न गणयति, मेध्यामेध्यं, गम्यागम्यं, खाद्याखाद्यञ्च न विचारयति; किमन्यत् मित्रबान्धवजनसम्बन्धमपि परिहरति उक्तञ्च—

"लुब्धः कार्य्यमकार्य्यं वा न कीर्त्तिं निरयं न च ।
न धर्म्मं चापि वाधर्म्मं वेत्ति नैव हिताहितम् ॥" इति

वस्तुतो लोभो हि जगतामशेषविधानर्थस्य मूलकारणत्वं परिकल्पितुं शक्यते । स तु संसारस्य यावतीयविषयेषु स्वीयासंवाधितमाहात्म्यं विस्तीर्य्य शनैः शनैरात्मवशं नीत्वागणिते दुष्प्रतिके कार्य्ये नियोज्य परिशेषे अधःपातयति विनाशदशायामापातयति च प्रायश एव लोभाभिभूतान् नितान्तमन्दभाग्यान् ।

यथा तावदेको भोज्येषु लोभपरवशो रसना-परितृप्तसंविधाय-

कानि वस्तूनि समुपभोज्याचिरेणोदरामयादिदुरारोग्यैः रोगैः सुदुःसहं क्लेशमनुभवति। परं ततो मृत्युरपि तस्य भवितुमर्हति। अन्यस्तावत् प्रमदाजनेषु समाकृष्टोऽनुचितानुरागतया कालिकमहाप्रयानमिहैव लोकगर्हाञ्च लभते। अपरो येषु केषु विषयेषु सातिशयमासक्तः प्रमाद्याति तेषां विषयाणां विषमयफलप्ररोहैः क्लीवपङ्गु विकलाङ्गत्वमपि समागच्छति।

लोभाभिभूतस्य मतिः कदा जनहितकर्म्मणि किंवा विशिष्टकार्य्ये न प्रवर्त्तते, परं दुर्भावा एव प्रतिनियतं हृदि दृढ़विलग्नतया पदं निदधति, एवं नामासौ गर्हितादपि गर्हितमाचरितुं न कथं कथमपि विकल्पमनुसरति। तथा प्रवर्त्तमानो मन्दभाग्यः एकदा तस्करकर्म्म कर्त्तुमपि बद्धपरिकरो भवितुमर्हति। तस्मिन्नपि च प्रवर्त्तमाने कदा नियुक्तप्राहरिकराजपुरुषैस्तत्क्षणदृष्टनिगड़ितो राजशासनविधानानुसारेण कारावासदासतामपेत्य प्रत्यहं तैलनिरसनयन्त्रभ्रमणनिरतः, कदा क्षेत्रादिमृदुत्खननलीनः, कदा वातिशयभारोद्वहनजनितविलुप्तशिरोरुहो भारवहनसक्तः, कदाचिच्च क्षुद्रातिक्षुद्रतमे व्यलीके काराध्यक्षकरगृहीतकशाघातोद्गतप्रस्रवरुधिरः, किमु नाम स्वतोपचितप्रलम्बश्मश्रुकेशपटलसंवृतमुखकुहरः, प्रवृद्धकररुहः, मलिनवसनो महाभीषणाकारः कदन्नमात्राहारः इहैव नरकवाससमानानि दुःखान्यनुभवति स खलु मन्दभाग्यः।

हा हन्त ! य एव प्राकृतिकशीतोष्णरौद्रवृष्ट्यादिदुःसहदुःखमपाकृत्य जठरयन्त्रणया दंदह्यमानस्य प्रभुसेवासञ्चितार्थेन यं

पुष्णाति। एवं चैव हि विनिद्रयार्द्धासनेन निरसनेन वा स्वीय-रुधिरार्पणेन वा यं प्रवर्द्धयति, प्रबलेभ्योऽरिष्टेभ्यश्च निजप्राण-विनिमयेन परित्रायति। स एव तादृशावपि पितरौ, तथैक-रक्तांशं सहभुक्तं सहपीतं सहयातं सहवर्द्धितमनन्यसाधारणस्नेहै-कायत्तीभूतमात्मप्रतिमं सहोदरभ्रातरम्, एवमनन्यशरणां पति-मात्रैकमर्म्मसमालम्बनरूपां सर्व्वगुणैकनिलयां जायां निहत्य किमु नियम्य स्वां स्वां कामनां पूरयत्यवशो लोभीति नासद्भाव-स्तादृशस्य दृष्टान्तस्यात्र जगति।

यथा पुरा राज्यलोभान्धकारितमतिः कुरुकुलधुरन्धरोऽभि-मानी राजा दुर्य्योधनः कुरुपाण्डवयोर्विवादोपगते सन्ध्यर्थमनु-रुद्धं भगवन्तं वासुदेवं सगर्व्वमाह—

"सूच्यग्रेण सुतीक्ष्णेण भिद्यते या तु मेदिनी।
तदहं नैव दास्यामि विना युद्धेन केशव॥" इति

ततः प्रवृत्ते तस्मिन् भ्रातृकलहज्वलनरूपे महाहवाध्वरे स्वीयानुजैकोनशतभ्रातृसहिता भीष्मद्रोणादिनिखिलवीरकुल-वरेण्यान्विताः पुत्र-मित्र-गोत्रोपचिता विविधायुधपुञ्जोद्भासिताः सप्तदशाक्षौहिणीः समिधः परिकल्प्य रणोन्मादनमादितातिलोलरसनाप्रसारितातिकायकठोरायै कलहदेव्यै बलिमुपाहरत्।

अपि नाम यद्यप्यरं राज्यलोभमपहाय यदुपतेः प्रार्थनानु-रूपां सन्धिं विधाय पाण्डवेभ्यः पञ्चग्राममदास्यत् तर्हि किम-गणितशूरशोणितप्रस्रवणधारया धरित्रीदेव्यास्तादृशोऽभिषेकोऽ भविष्यत् किमु भारतसर्व्वस्वभूतान् तादृशशौर्य्यवीर्य्यान्वितरा-

जन्यमहार्घरत्नान् दुर्य्योधनलोभपाठच्चरो मुषित्वा सम्प्रति वसुगर्भां वसुधामिमां हीनाद्धीनतमां दशां समानेय्य रिक्तां कर्त्तुं प्राभभविष्यत् ।

एवमेव च राज्यलोभाभिभूता महम्मदीया अनेके पितरं भ्रातरं स्वसारञ्चापि हत्वा नियम्य दूरीकृत्य च स्वीयलोलितलालसानलमुखे हविरूपकल्पयात्मसम्बन्धं परिजहुरिति नाविरल इतिहासपृष्ठेषु ईदृशस्य बहुशो दृष्टान्तस्यासद्भावः । यत् राज्यलोभीनिकृष्टहृदयवृत्तिः श्रीगङ्गजेबो जनकं साहजानं कारागारमुपानेय्यापूर्व्वकारुकार्य्यमयमनन्यदृष्टपूर्व्वं मयूरसिंहासनं भारतसाम्राज्यञ्च लोभराक्षसचरणोपहारी चकार । एवं दारा-सुरादादिसहोदरनिवहान् निहत्य राज्यस्य सिंहासनस्य च आधिपत्याविसम्बाधित्वं चकार । इत्थमित्थमेवाधुनातनाः पौराणिकाश्च वर्त्तन्ते खल्वेकाधिके दृष्टान्ताः । परं न हि तेषामास्पदमर्हति क्षुद्रतमोऽयंमामकीयः प्रबन्धः । नूनमहो यस्तावत् यस्यावेशेनान्धीभूय सकललोकगर्हि कर्म्म कर्त्तुं न लज्जते, नापि वा परिणामदुःखाकरमपि ज्ञात्वा तत्परिजहाति, सोऽयं सर्व्वजनसहजातप्रतिपक्षो लोभः सकलदोषनिवहेषु गरीयानिति सुष्ठूक्तं "न लोभादधिको दोषः" इति ।

——*——

# "न तितिक्षा सममस्ति साधनम्"

तितिक्षा हि नाम क्षमापरपर्य्या ; मानवानामुच्चतमा मानसिकवृत्तिविशेषा । सा तु शरीरिणां शरीरधर्म्मनिवहेषु महीयसी गुरुतोऽपि गुर्व्वीति वाधारहितं मतं प्रज्ञावताम् । तत्प्रभावमाहात्म्येनेह मनुजा विमलानन्दमुपभोग्य परत्रे च श्रेयः किमु ब्रह्मसायुज्यमपि लब्धुं प्रभवन्ति । आहुस्तावत्रयधर्म्मप्रेमितारः—

"क्षमाबलमशक्तानां शक्तानां भूषणं क्षमा ।
क्षमावशीकृतिर्लोके क्षमया किं न सिद्ध्यति ॥
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
इह सम्मानमृच्छन्ति परत्र च शुभां गतिम् ॥
क्षन्तव्यमेव सततं पुरुषेण विजानता ।
यदा हि क्षमते सर्व्वं ब्रह्मसम्पद्यते तदा ॥" इति

वस्तुतस्तितिक्षोपचितश्चेतो गुरुकठोरेषु समुपागतेषु कार्य्येषु न स्वल्पमपि स्वभाववैपरीत्यमालम्ब्य कथं कथमपि हृष्टं रुष्टं वा समवलम्बते ; परमुत्तरोत्तरमतिदार्ढ्यं सातिशयगाम्भीर्य्यञ्च समुपेत्य सकलसुखप्रसवभूमित्वमुपपद्यते । एवं पुत्रकलत्रादि वियोगजातिविघ्नेषु यथा तथा निरतिशयहृद्योपचितव्यापारेष्वपि साम्यमातनोति । सम्पद्विपदोः समवर्त्तिता हि तितिक्षान्वितानामसाधारणं लक्षणम् । इतरे तावदापातसुमधुरां भविष्यति हालाहलकल्पां सम्पदमासाद्य समुद्वेलितजलधर इव

स्फीतवक्षसः धरामिमां तुच्छातितुच्छं मन्यमानाः सुजनाचारञ्च तृणाय मन्यन्ते। विपदा तु ते क्षणमात्रयैवाभिभूयमाना वेपथुमद्वपुषो वेतसपत्राणीव प्रकम्प्य क्लिश्यन्ते। तितिक्षोपचितचेतसः सुमहदपि विपत् कियदुद्वेजयितुं न प्रभवति। सर्व्वास्वप्यवस्थासु तेषां स्थैर्य्यमचलमटलं विराजते। मकराकरस्तरङ्गिणीशतशो मिलितोऽपि न प्यायते। नापि निदाघप्रखरसूरकरनिकरसहस्रेणाकृष्यमाणोऽपि स्खलितो भवति गाम्भीर्य्यात्। किमूदीयमानस्य परमस्ताचलाधिष्ठितस्य च प्रभाकरस्य रागो न तावत्पार्थक्यं समुपभजति क्वचित्। रसक्षीणोऽपि हरिचन्दनः स्वीयसौरभ्यं न विमुञ्चति क्षणमपि। अतो मनसि सततमिदं समाधाय प्रवर्त्तितव्यं यत् सम्पद् विपच्च नियतं परिवर्त्तत इति, तथा हि कविगुरुः कालिदासः—

"कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण।" इति

तच्च सर्वं तितिक्षया खलु सोढ़व्यमेव प्रकृतमनुष्यपदाभिकाङ्क्षितानाम्। तया सर्व्वानर्थनिदानप्रसवभूमेर्मनसः कुत्सितवृत्तीर्विमग्नानन्दरसधारया परिप्लाव्य तस्मिन्नेव समुत्पाद्यते कैवल्यं नाम महामहीरुहस्य बीजम्। सति किल दृढ़े चेतसि दुःखं नाम मनुजानां केशाग्रमपि वक्रयितुं नाधीष्टे दूरे तावदास्तामन्योऽनर्थपातः। यथा हि आविलमपि सलिलमपरिष्पन्दिसत् शनैः शनैर्नैर्म्मल्यमिति, तथातिशान्तमपि स्वान्तं पुंसस्तितिक्षया शिक्षितमिव प्रमादमाविष्कुर्व्वाणं निश्चलतां गम्भीरताञ्च

समागच्छतितराम्। मूर्खास्तावद्दुःखमुपशमयितुं परितः संरम्भं कुर्व्वन्ति, परं संरम्भवर्ज्जितास्तितिक्षावन्तस्तु दूरमपगममपि तद्दुःखं हेलयैव परिजहातुं प्रभवन्ति।

दृश्यते हि पुरावृत्ते यद्रामयुधिष्ठिरनल-श्रीवत्सादयो भूपाला नानादुःखोपचिते वनाचले वनेचरा इव विचरन्तो वन्योचितं कन्दमूलफलादिकं भक्षयन्तो निःस्वादु कटुकषायं वा निर्झरोदकं पिबन्तः शीतातपादि नैसर्गिकं महान्तं क्लेशं समनुभवन्तश्च सीमातिगया विपदा निपीड्यमाना अपि केवलं तितिक्षाप्रभावेण सर्व्वं सहन्ते स्म तस्मादेव हि ते परिणामे परमभ्युदयं निःश्रेयसञ्च लभन्ते स्म। अहो! श्रूयते हि युधिष्ठिरस्तितिक्षामाहात्म्येन द्वन्द्वविकाररहितो नरदेहेन महान्तं हिमवन्तं नगमुत्तीर्य्य स्वर्गद्वारमुपागच्छत्। विगतकल्मषा मुनयोऽपि तितिक्षाप्राबल्येन महत् कष्टमपाकृत्य जगतामशेषकल्याणञ्च संविधाय परां गतिमाससादुः। इत्थं नाम कार्य्यदर्शनेनानुमातुं शक्यते यत् यज्जगति दुर्लभत्वमनुमन्यते तत् सर्वमपि तितिक्षा दातुं प्रभवति। परमपुरुषार्थं प्रति च तितिक्षा सहकारिणी नितरामतिसुशोभनमभिहितं निखिलनीतिकुशलिना भारविणा—

"न तितिक्षासममस्ति साधनम्" इति।

———

# "महाजनो येन गतः स पन्थाः"

इह खलु संसारे द्वावेव महाजनशब्देन विशिषयन्ति सन्तः। एकं वणिग्वृत्तिसमाचरन्तमपरं सन्मार्गनिदर्शकम्। ये खलु सार्थवाहाः प्रतिनियतविषयनीरनिधौ निमज्जमानाः करतलमुद्राधिगतेन निर्व्वाणपदमतितुच्छं मन्यमानाः, द्वित्रिकपर्दकप्राप्तये च मृषा भाषितुमपि न लज्जन्ते, तान् कथं कथमहो महाजन इति शब्दगौरवेण विमण्डयन्ति सज्जनाः, तन्न जानीमहे। उदिते चापि मनसि तत्शब्दसंस्थानस्थानं स्वत एव समाक्रमते लज्जा सज्जनानां चेतः। मन्यामहे ते क्रयविक्रयव्यपदेशेन नानादिग्देशेभ्यो यदुत्कृष्टं पण्यसम्भारं जगन्मङ्गलकरं वस्तुजातञ्चानीय जन्मभूमेः स्वकुटुम्बानाञ्च सुखसमृद्धिं वर्द्धयन्ति, अतएव तान् तथाविधोपाधिना समाकलयन्ति धीराः। अतःपरं ज्ञानवृद्धाः शब्दसंस्थानिकाः एव प्रमाणम्।

अपरे ये तावत् महाजनशब्दप्रयोज्याः, ते किल सत्कर्म्माण्यनुसंशीलयन्तः कलुषं त्यक्तुकामाः विशेषं विविच्य कर्म्माण्यनुतिष्ठन्ति। केन कर्म्मणा सुकृतं, केन वा दुष्कृतं; केन च मङ्गलं, केन वामङ्गलं, केनचन स्वीयमितरेषाञ्च इष्टमनिष्टं वा प्रभवतीति सूक्ष्मदृशा पर्य्यालोच्य कर्म्मणि यतन्ते, त एव महाजनाः संसारपान्थग्नानिलयस्य समालम्बनरूपाः। तैरेव समाचरितः पन्थाः परमश्रेयस्करः, यदि चापाततो दुःसाध्य इव प्रतीयमानोऽपि

तथापि यत्नेनैव समावलम्बनीयो मनुजानाम्। तेन च सम्भवति प्रभूता शान्तिः, निरतिशयं सुखम्, शाश्वतीः समाः ख्यातिश्च। मन्वत्रिविष्णुहारीतादीनां धर्म्मशास्त्रप्रणेतॄणां महर्षीणां पन्थानमवलम्बमानाः ज्ञानवृद्धाः आपातसहजमनोरममार्गमभिपश्यन्तोऽपि हेलया तं समपाहायैव चिरन्तनीः प्रथाः संरचन्ति विचक्षणाः। विद्यते तत्र मतभेदानां बाहुल्येन सद्भावः, वर्त्तते चापि मतानां कुत्रचित् वैपरीत्यं, तथापि कुलसमाचारितपथानुवर्त्तितयैव कार्य्याणि समाचरन्ति प्रायशः एव लोकाः। न तस्य दुष्टतामदुष्टतां वा समवलोकयन्ति पर्य्यालोचयन्ति वा मनसापि अन्यथा कर्त्तुं कदापि। पूर्व्वपुरुषैराचरितानां सन्मार्गानुसारेण जायते तावत् समुन्नता गतिः, विमला च प्रतिष्ठा। तथा च देवतानां प्रत्यक्षमनालोकनादपि तत्र सातिशयो विश्वासः, शालग्रामे मृन्मये वा देवविग्रहे देवतोपस्थितिबुद्धिः, पुण्यतोयायाः जाह्नव्याः सलिलस्पर्शे निखिलकलुषविनाशनचिन्तनमित्यादि बहुधैव विद्यते अस्माकं महाजनपथानुवर्त्तितत्वम्। दृश्यते चात्र लोकव्यवहारविधौ महर्षिसमुपदिष्टमेकमेव व्रतं कुलप्रथानुसारेण विभिन्नदिवसेषु सुसम्पादयन्ति परमविधेयाः मनुजाः। कल्पन्ते च ते रवेः संक्रमणविशेषेण स्कन्दादिव्रतं दिनद्वये पूजार्थं। न तेन च एकस्य पापमपरस्य पुण्यं वा समुत्पद्यते, न्यूनमधिकं वा वक्तुमर्हन्ति केचित्। येन च तदेव हि तेषां कुलक्रमागतो धर्म्मः। तत्कुलप्रथानुसारेणापि चाकृते कार्य्ये सम्भवतितरामतिशयपापम्, एवमपि च वर्त्तते शतशो

दृष्टान्तः, यदेकमेव कार्य्यं विभिन्नदेशे विभिन्नप्रकारेण समाचरन्ति सन्तः, तत् बाहुल्यसमीक्षया प्रोज्झितम्। प्रस्तुवन्ति नूनमार्य्यमिश्राः—यन्महाजनपदपङ्क्त्यनुसरणमेव चतुर्णामाश्रमिणां परमो धर्म्मः, मुक्तेश्चापि प्रकृष्टा सरणिः। लोकेषु नैवं दृष्टं श्रुतं वा यन्महाजनमार्गानुवर्त्ती कदा कोऽपि विपदि पतितः, सुखात् वा परिभ्रष्टः, नितरां साध्विदमुच्यते—'महाजनो येन गतः स पन्थाः' इति कृतं बाहुल्येन।

---

## X विद्वान् सर्वत्र पूज्यते *

इह खलु संसारे परमेश-परिसृष्टानां सर्व्वेषामेव जन्तूनां मध्ये मनुजा नूनं विद्यागौरवेणैव प्राधान्यमापन्ना इति निःसंशयं वचः। आहारनिद्रा-प्रभृतीनां सविशेषतया केवलं ज्ञानबलेनैव तेषां प्राधान्यं स्वीकुर्वन्ति आर्य्यमिश्राः। तच्च ज्ञानं कथं भवेदिति जिज्ञासूनामस्माकं प्रश्नपर्य्यवसाने केवलं 'विद्यैव निदानम्' इति परिकल्प्यते। विद्याप्रभावमन्तरेण न तावन्मानवानामज्ञानान्धता दूरीभवति। जगत्यस्मिन् धनी वा मानी वा विविधविभवपरिग्रही वा शिष्टसुचेष्टपरिजनपरिपूर्णो वा किमधिकं शौर्य्यवीर्य्येणावधीरितवीरसमाजो वा विद्यामिकामपहाय न कश्चिदप्रतिवादसहं सम्मानास्पदमवगाहते। विद्यां विना न

* न च विद्यासमो बन्धुः। विद्यायाः किं फलम्। नास्ति विद्याधिका किञ्चित्।

खलु किञ्चिन्मानवानां हृदि संस्थिताज्ञानतिमिरपुञ्जमपाकर्त्तुं प्रभवति। गन्धपरिहीनं प्रसूनमिव, विगतकमलं सर इव, शशिविरहीणा रात्रिरिव, लावण्यरहिता युवतिरिव, रुजाभिव्याप्तं शरीरमिव विद्याहीनं जीवनं नितरामवसीयते, एवमतिदुर्व्विधानामपि विद्यासलिलविमलीकृतचेतसां जनानामन्तःकरणे यादृगानन्दप्रवाहः समुपजायते, न हि तावत् सुधाधवलितप्रासादतलवासिनां भूभुजामपि विषयभोगसमूहेषु सुखजातं तस्य षोड़शीमपि कलामर्हति।

विद्वांसो विनयिनो धृतिमन्तो मधुरप्रकृतयो विशुद्धचरित्राश्च भवन्ति। अत एव स्मर्यते—

"विद्या ददाति विनयं विनयाद्याति पात्रताम्।
पात्रत्वाद्धनमाप्नोति धनाद्धर्म्मं ततः सुखम्॥" इति

यथा हि एकमेव सुसौरभकुसुमं निखिलमेव काननभूमिं गन्धसम्भारैरामोदयति, यथा च एकोऽपि हिमांशुरंशुजालैर्जगदिदमुद्भासयति, प्रीणयति च तद्वदेकोऽपि विद्वान् सुविमलयशोधारया संसारमिममुज्ज्वलीकरोति।

किमहो! विद्यायाः पीयूषमयं फलम्? यदुपभुञ्जाना व्यासवाल्मीकिकालिदासप्रभृतयो गतासवोऽपि चिरायामरत्वमापन्नाः, निखिलजगज्जनपूजिताश्च। किमधिकं, यस्याः सुमधुरकरस्पर्शेन कमठपृष्ठकठिनमपि मानवानामन्तःकरणं कुसुमपेलवीभूय सांसारिकजीवनं बहुविधामुन्नतिमानयति।

विद्यामन्तरेण न खलु काचिदुन्नतिर्भवितुमर्हति जनानाम्।

संसारे यदा किल विशिष्टसुखपदस्थमर्थवन्तमधिगतसम्मानं वा मानवमवलोकयामस्तदेव प्रथमं तावत् तस्य विद्यावैभव एव निदानतया मनसि समापतति। सत्यमिह संसारे जन्मान्तरीय-सुकृतिवशादनधीतविद्या अपि कुत्रचित् कतिचिदेव मानवा मानिनो धनिनः समादृताश्च दृश्यन्ते, किन्तु कारणमेतत् सर्व्व-वादिसम्मतं यदेकया विद्ययैव जनः सम्भ्रुवः प्रसिद्धश्च भवितुमर्हतीति। विद्या नरं नीतिपथेन चालयति, इन्द्रियागोचरमति-सूक्ष्ममतिदूरस्थमपि वस्तु प्रत्यक्षवद्दर्शयति, बन्धुवत् सततमात्म-हितमादधाति, स्वजनपरिशून्ये दूरदेशे परं बलं सञ्चारयति, सौन्दर्य्यसम्पद्विहीनस्यापि सौन्दर्य्याधिक्यमानयति, संसारे न तावदीयतो गौरवपदवो वर्त्तते, या न विद्यया समधिकर्त्तुं शक्यते। किं बहुना—सर्वं खल्विदं जगद्विद्यया स्ववशतामापद्यते। सर्व्वविधसमृद्धिसम्पन्नोऽपि मानवो विद्यामन्तरेण पशुरेव प्रतीयते। सुतरां विद्यया यद्यत् फलं साध्यते, न पुनरन्येनापि केनाप्युपायेन तत्तदधिगन्तुं शक्नुवन्ति।

यथाहुरार्य्यमिश्राः—

"विद्या नीतिकरी जगद्वशीकरी विद्या विशाला दृशः
विद्या बन्धुरसौ विदेशगमने विद्या परं सम्बलम्।
विद्या नाम नरस्य रूपमधिकं विद्या च रत्नं महत्
विद्या गौरवकारणं त्रिभुवने विद्याविहीनः पशुः॥" इति

अहो! किमाकलयामो विद्यायाः माहात्म्यमेकयैव रसनया, सहस्रजिह्वेनापि वासुकिना सहस्रयुगमविरतकीर्त्तनेनापि न

किञ्चित् प्रकटयितुं शक्यते विद्यागौरवम्। जले स्थले तथान्तरीक्षे चापि सर्व्वत्रैव तस्याः समानोऽधिकारः, उदकान्तरे विद्यामाहात्म्येनापि स्थलचरा मानवाः स्वेच्छाधारविहारं कुर्वन्तः हेलया कार्य्याणि सुसम्पादयन्ति। स्थले च परमाद्भुतानि लोकविस्मयकराणि विविधानि यन्त्राणि आविष्कृत्य अतिदुःसाध्यकार्य्याणि अनायासेन विदधति। बहुशतयोजनान्तरितानां स्वप्रियजनानां मुहूर्त्तद्वयेनापि ताड़ितप्रवाहेन वार्त्तां ज्ञातुं शक्नुवन्ति जनाः। एवमपि च वाष्पशकटार्णवपोतसौदामिनीदीप्तिप्रभृतयः मामकानां नयनपथे अहरहः एव व्याहरन्ति विद्याज्ञानफलम्। अन्तरीक्षे यदेव मनुजाः 'एरोप्लेन्' नामकयानारोहणेन विहङ्गमा इव विचरन्ति, तथा-ह्यवसहायकानि शतघ्निप्रभृतिविविधाग्नेयास्त्राणि तत्रावस्थाप्य समरप्रतिकूलं पक्षं निर्यातुमभियतन्ते, तदपि विद्याया एव गौरवमातन्वतीति यथार्थमभिहितं श्रीमता विष्णुशर्म्मणा—

"सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम्।
अहार्य्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा॥" इति

अनुभूयते च तत्र तत्र गच्छद्भिः कोविदैर्वित्ताधिकं माहात्म्यं विद्यायाः, तथा हि गृहीतवित्तमनुजो बलवानपि दिनान्ते पाश्चात्त्यवारिधिमवगाहमाने विभाकरे, उदयमाने च तमालगर्वसर्वङ्कषश्यामलत्विषि तमसि भीतो भीतः पदे पदे शङ्कमानश्चौरभयं मन्दं मन्दमारण्यकेन पाटच्चरेणेत्थंभाषं भाष्यमानः स्वयमेव ददामि वित्तमित्युद्घोषपरिशुष्यमाणमुखो अपहृत-

समस्तधनो निरवशेषितकौपीनो महद्दुःखेन यत्र कुत्रापि जिगमीषति ।

विद्वांसस्तु तस्मिन्नेव पथि गृहीतपाथेया निरङ्कुशं परिभ्रमन्तो अपहर्त्तुमागतैरपि चौरैरिमे रिक्तहस्ताः साधव इति बहुमानपूर्व्वकं सूचितसुपथा वनश्रीविलासविलोकनजनितहर्षोत्कर्षाः सोल्लासं परिक्रामतीति समुन्मिषत्येव विद्यागौरवम् । किञ्च प्रजापालनलब्धवर्णा अपि भूभृतो नैकस्या विद्यायाः षोड़शीमपि कलां शक्नुवन्त्यधिगन्तुम् । यतः किल राज्ञां बहुलपरिपन्थिनां स्वीयेऽपि देशे न नितरां प्रशंसावाप्तिः ; किं पुनः रिपुशङ्कटेषु अन्येषु देशेषु ? विद्यायास्तु यावद्यावत् प्रतिपच्चविजृम्भणं, तावत् तावत् प्रकाशन्ते प्रभाजालानि । यांश्च देशानधिवसन्ति संख्यावन्त उदञ्चयन्ति च परिमलभरितां वाच तत्रैवाभिनन्द्यमानवचोवैभवाः प्रकाममाराध्यन्ते बहुभिरिति शोभनमुक्तं निखिलनयशास्त्रार्थदर्शिना मनीषिणा चाणक्येन— 'विद्वान् सर्व्वत्र पूज्यते' इत्यादि ।

## "आत्मानं सर्वतो रक्षेत्"

अत्र तावद्विनश्वरे संसारे निखिलकारुणिकस्य जगत्पितुः परमेश्वरस्याद्भुतशिल्पचातुरीमुख्यप्रत्यक्षोदाहरणे सातिशयविस्मयकरे चित्ताह्लादकरे नानाभावसद्भावे अगणितासत्यपि सतीव प्रतिक्षणं प्रतिभासमानेऽसमाने, किमधिकेन वचसा इतस्ततो विचित्रविलक्षणाकारे परिवर्त्तनि विवर्त्तमये संसारे तत्स्वभावानुप्राणितानुसारे विलक्षणा एव सर्व्वे प्रतिभान्ति भावाभावाः समुदायाः पदार्थाः प्रत्यक्षतः परक्षतो वा जीवनिवहान्तःकरणे प्रतिक्षणं महीयसीमायिकशक्त्या।

तद्वैलक्षण्यञ्च यत्र यत्र प्रतिभासते तदवश्यमेव समाकर्षति चेतः सकलस्य जनस्य, येन येनैव चित्तमाकृष्टं तदेव स्पृहणीयं, यत्र यत्रैव स्पृहा तदवश्यमेव प्रियतास्पदमिति सम्भ्यैव सर्व्वमेकैकतोऽधिकं प्रियतरमस्ति। यथैव हि प्राकृतिकवैलक्षण्यानां परिधिरवधिर्व्वा न तावत् किञ्चन प्रभवत्यत्र जगति। तथा प्रियास्पदवस्तूनामप्यवशेषो नास्ति किञ्चिन्मात्रम्। यथा यथावगाहते जनमनः तथा तथैवोत्तरोत्तरं पूर्व्वापेक्षयान्यत् ततोऽपि विलक्षणमवलोकयति, विलक्षणतयैव चेतस्तत् स्पृहणीयं प्रियञ्चानुभवतीति सर्व्वानुभवसिद्धम्।

एवं किल विश्वस्यातिवैलक्षण्येन प्रत्येकेषां चित्तवृत्तीनां विभिन्नपरतया विभिन्नरुचितया च नहि तावत् सर्व्वं सर्व्वस्य प्रियत्वं प्रेमास्पदञ्च सम्यक् भवितुमर्हति। दृश्यते तावदेकमेव

वस्तु कस्यचित् प्रियं तदेवाप्रियमपरस्य, यदेकस्यापि चाधिक-प्रियं तन्मनाक् प्रियमपरस्य। परमेवमपि प्रत्यक्षीक्रियते यदेक-मेव वस्तु कामनासम्प्राप्ते विघाते वा भिन्नं भिन्नं चित्तभावं जनयित्वा सुखयति दुःखयति मोहयति वा मानवचित्तं यथा—रूपयौवनसम्पन्नातिपेशला काचिच्चकितदर्शना वामलोचना दयितचित्तं तोषयति, स्थगयति व्यथयति च कामुकमर्म्मम्। एवमपि च वर्त्तते कस्यचिद् ज्ञानचर्च्चा प्रिया, अन्यस्य कूर्दनादिक्रीड़ा, अपरस्य विज्ञानादिगवेषणा, भिन्नस्य च संगीतानुशीलनी इत्थमित्थमेव दिशा रुचीनां विभिन्नतया न तावदेकमेव हि प्रियं कस्यचिदित्यु पक्रम्य कविनोक्तम् :—

"दधिमधुरं मधुमधुरं मधुरादपि द्राक्षा।

किन्तु रुचिभेदात्तस्य तदेव हि मधुरं यस्य मनो यत्र

दृढ़लग्नम्॥" इति

अस्ति किल प्राचीनयुगे यद्यत् प्रियं तदिदानीमप्रियमननुकरणीयञ्च सभ्यताभिमानिनां पाश्चात्यशिक्षितानाम्। प्रवर्त्तमाने च युगे यदाचारादिपद्धतिः अशनादिक्रिया च लोकप्रिया सा चापि भाविनि युगे हेया सातिशयतुच्छाप्रिया च भविष्यति किं न वा कं वक्तुं प्रभवन्ति समर्थाश्च मनीषिणः? किन्तु निकृष्टोत्कृष्टप्राणिमात्रस्यैकतानतयात्यन्तिकप्रियतास्पदं केवलमात्मैवेति समीक्ष्य निखिलप्रयत्नैः स सर्वतः सावधानतया परिरक्षणीयः सर्वेषामेव प्राणभृतामित्यभिसन्धिरार्य्यमिश्राणाम्। यस्मादेवात्मा सर्वापेक्षयातिशयप्रियः प्राणिनामिति तेषामाहार-

विस्तारादिकार्य्यनिवहे सुख्रमेव परिलक्ष्यते। यदेवात्यन्तप्रियं तच्च सर्वथा संरक्षितुं प्रेरयन्ति बलादृष्टावाभूम्यन्तचारिणो देवाः। तद्विपरीताचरणे च तेषामसन्तुष्टिः, स्वचित्ताशुद्धिः, क्षोभमनिष्टञ्चापि सम्पद्यत इति विश्वजनयितुश्चिरन्तनो नियमः। अतएव सुखे वा दुःखे वा नितान्तदुर्गतदशायां वा सर्व्वप्रयत्नेनावश्यमेव रक्षणीयतामर्हतीति किं पुनस्तत्र विकल्पावकाशः?

एवं नाम यस्यात्मसृष्टौ परिणाहवत्यामनन्तपदार्थनिचयसत्त्वेऽपि परमार्थतः प्राणिनामात्मैव प्रियतमं सर्व्वस्वमस्ति, न तथा पुत्रकलत्रादिनितान्तान्तरङ्गा बान्धवाः मित्राणि किमु प्रासादप्राकारानन्ताद्यशेषसंख्येयानि धनानि दासदासीजनाश्रयातिरम्याणि भवनानि च सर्व्वस्वशब्देनाभिधेयपदतां प्राप्तुमर्हन्ति। यदेव यत्परिमाणसर्व्वस्वं यस्य तच्च सर्व्वप्रयत्नेनैव संरक्षणीयं भवति। यच्च पुनः पारिभाषिकसर्व्वस्वं धनजनादिवस्तुजातं तच्च क्वचिद्विनष्टेऽपि न सर्व्वं प्रविलीनमुपजायते। परमात्मा तावदीदृशं सर्व्वस्वमस्ति यस्मिन् तिरोहिते निखिलचराचरमेव शून्यं स्यात्। तत्रास्ति सतामाभाणकम् :—"आत्मशून्ये जगच्छून्यम्" इति।

दृश्यन्ते हि सर्व्वे खलु जीवनिवहाः नानाक्लेशान् सहमाना अपि निरन्तरं सेवया, चौर्य्येण, छलेन, कपटेन गर्हितादपि गर्हितेन शोभनेन कर्म्मणापि वा किं बहुना येन केनाप्युपायेनात्मनः सुखमन्विष्यन्ति रात्रिन्दिवम्। इत्थमित्थं भावैयदर्थमेव प्रचेष्टा, तस्य सर्व्वथा सर्व्वप्रयत्नतो रक्षणमेव बुद्धिमत्ता कोटिं संरोहति प्ररोहति चानन्तधारणाधाराम्। अपि यदि

कश्चिदसीमकायक्लेशेनोषरभूमौ जलसेकादिना शालीनुत्पाद्य पश्वादिभ्यस्तद्रक्षणार्थं वृतिं न बध्नीयात्तर्हि कस्तावत् लोकव्यवहारज्ञं बुद्धिमन्तं तमभिधास्यति? अपि च यदि कश्चिच्छिल्पी व्याघ्रादिजन्तुसङ्कीर्णान्महारण्यात् चन्दनादिमाहार्घ्यं काष्ठं संगृह्य तेनातिशयितजनचित्ताह्लादकरीं मूर्त्तिं निर्म्मायालस्यात् चौरहस्त्युपचिते विविक्ते निधाय नाशं नयेत् तर्हि तं मूर्खमन्तरा क एव निर्दिशन्ति परमविधेया विद्यावन्तोऽत्र जगति?

अपि नामात्मार्थमेव सुबहुधा प्रयतमानोऽपि यदि तद्रक्षार्थं सावधानः प्रयत्नैकतानश्च न भवेत् तर्हि किमतोऽधिकं जाड्यं पारतन्त्र्यञ्च संभवितुमर्हति? आत्मना पुरुषस्यात्मलाभः सम्भवति। आत्मनैवापरेषामुपकारं सर्वथा विधातुमपि समर्थोऽस्ति। आत्मनैवाप्रलयस्थायि यशोऽधिगन्तुं युज्यते। किञ्च बहुधा गिरा आत्मनैव पुरुषेप्सितं धर्म्मार्थकामरूपं वर्गत्रयमर्जितुमुत चरमपुरुषार्थाभिधमपि परमानन्दसन्दोहं परमपदमोक्षमध्यासयितुं सततं समर्थोऽस्ति। नितरामात्मैव सारात् सारतरो नितान्तेष्टश्च प्राणभृतां नान्यस्तादृश इति किमस्ति वादोऽत्र? यतश्चात्मनोऽभावे हि यदात्मनोनमध्यवस्यते तदेवान्यदीयं भवतीति परिकल्प्यते महानुभवैः सभ्यैः। "आत्मैवात्मनो बन्धुः" इति महाजनवाक्यम्, परमात्मसत्तायामेवापरस्य सत्ता, तदभावे न तावदेकस्यापि सत्ता, सर्वस्याभाव एव सर्वथा परिगण्यते गणयिता प्रतिमात्रम्। तदुच्यते हि केनापि कविना :—

"चेतोहरा युवतयः सुहृदोऽनुकूलाः
सद्बान्धवाः प्रणतिनम्रगिरश्च भृत्याः ।
गर्जन्ति दन्तिनिवहास्तरलास्तुरङ्गाः
सम्मीलने नयनयोर्न हि किञ्चिदस्ति ॥" इति

प्रत्युत जलस्थलान्तरीक्षचारिणां प्राणिनामात्मापेक्षया कश्चिन्नास्त्यपरः प्रियः। दृश्यते हि प्रत्यङ्गगलितकुष्ठो रोगव्यथया प्रतिक्षणं पीड्यमानोऽपि आत्मरक्षार्थं सन्ततं यतते। एवमपि च मुहूर्त्तोपचिते यस्यामयिणो भवलीला समाप्तिमेष्यति सोऽप्यात्मार्थं हालाहलं पातुमुत्सहते। अतएव सर्वथा सर्वयत्नेनादौ स एवात्मा रक्षणीयः पुंसामित्युक्तं नयधर्म्मप्रवर्त्तकैः सूक्ष्मदृष्टिमद्भिः परमपुरुषैः—

"आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥
किञ्च—त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
देशस्यार्थे तथा ग्राममात्मार्थे सकलं त्यजेत् ॥" इति

अन्यदपि च तत्रावितथं वचः "पूर्वमात्मा ततो बन्धुस्ततो देशस्ततो जगत्" इति। परमा नीतिरेषा समलंकरोति पुरावृत्तग्रन्थानां पृष्ठातः पृष्ठान्तरं बाहुल्येन। यथा—पुरा चैत्रवंशसमुद्भवो राजा सुरथः प्रबलारिभिः परिभूय पुत्रकलत्रादीनि विहाय मृगयाव्याजेन हयमारुह्य मेधसाश्रमं गत्वात्मानं पररक्षत्। एवमपि च सत्ये कनिष्ठः परमविधेयो युधिष्ठिरः कैतवानुचित्यं जानन्नपि अनेकत्र तथानुष्ठितम्, यथा

विराटराष्ट्रे मिथ्यानामादिप्रचारबाहुल्येन तत्रत्यान् सपत्नांश्च वञ्चयित्वात्मानं नानाविपद्भ्यो रक्षितवान्। गौतमश्चापि कृतोपकारिणं नाड़ीजङ्घमात्मरक्षार्थं व्यपाद्यात्मानं समुद्दधार। एवञ्च महर्षिर्विश्वामित्रश्चात्मरक्षार्थं श्वपच इव सारमेयपिषितमश्नित्वात्मानं जीवयामासेत्याद्यनन्ता कथा विद्यते पुराणग्रन्थोदरे।

अतएव सर्वथा यत्नमुपयुज्यते यदिह कलत्र-पुत्र-पौत्र-मित्र-धन-कनकादिसम्पत्तिभिरपि येन केनाप्युपायेन चात्मावश्यं रक्षणीयः प्राणभृताम्। तत्परिरक्षणे भाविनि काले यथापूर्वं तदधिकं वा सर्वं सुसमाधयितुं समीहते लोकः। परमात्मनि विनष्टे न किमपि भवितुमर्हति सर्वसुखोपचितायां वसुधायां किञ्चिदपि जनस्य। अतो येन केनाप्युपायेनात्मा सुरक्षणीय इति नीतिविदामभिमतम्। अतएव जलदनिर्घोषेणोच्यते— "आत्मानं सर्वतो रक्षेत्" इति किमधिकेन वचसा।

—*—

## "न हि सुखं दुःखैर्विना लभ्यते"

इह खलु संसारे 'सुखं मे भूयात्, दुःखं मे माभूत्' इति सततं दुःखं हातुं सुखञ्च लब्धुमभिलषन्ति जन्तवः। न हि किल दुःखस्योच्छेदमन्तरेण सुखस्य सम्भवः, तेजस्तिमिरयोरिव तयोः समानाधिकरणासम्भवात्।

दृश्यते तावदत्र यत् क्षुद्रं महदपि च कार्यमुद्यापयितु-

मिथुया स्वल्पमनल्पं वा दुःखमन्तरेण न समासाद्यते कर्मणः शुभमयं फलम्। यथा हि तृष्णाविशुष्ककण्ठः कश्चिदुदकार्थी अध्वगमनजं दुःखमृते जलपानजनितं विमलानन्दमभिलब्धुं न समर्थयते। तथाश्वमेधवाजपेयादियाजी नानाविधं कायक्लेशं शतशः कठोरं विधिबोधितकार्य्यानुष्ठानसम्भवं दुःखमनुभूय परिणामे इन्द्रचन्द्रादिपदवीं चिरममरावासवासं कल्पान्तस्थायि सुखञ्च समुपगच्छति। एवञ्च केनचन जन्ममरणाधिव्याधिजराजीर्णत्वमभिभवितुमिच्छुना महापुरुषरत्नेन कैवल्यार्थम् इन्द्रियान् विनिगृह्य, रिपूनभिभूय, प्रचण्डमध्याह्नमार्त्तण्डतापे समन्तात् सन्निवेश्य वह्निम्, गुरुकठोरेऽपि तुषारपाते सलिलमवगाह्य, ऊर्द्ध्वाधोविपरीतभावेन संस्थाप्य पादशिरसी, तथाविधानि अन्यान्यपि च कायक्लेशकराणि कार्य्याणि बहुजन्मनि समाचर्य्य अनन्तकोटिदुःखमनुभूय च आत्मानं साक्षात्कृत्य निर्व्वाणपदं लभ्यते। नितरां दृश्यते तावद् यद्यदेव हितमामनन्ति आर्य्यमिश्राः, न तत्तदधिगन्तुं महदपि वा लवमात्रं वा दुःखमन्तरेण न सुखयतितराम्। एवमपि च निसर्गत एव जन्तवः परिणामसुखाभिलाषिणः सन्तो दुःखसाध्यं कार्य्यजातं समनुतिष्ठन्तः सुखं लभन्ते। तत्र केऽपि दरिद्रा धनिकसुखाभिलाषिणः स्वयोग्यतामनुसरन्तः परिश्रमशीलाः क्षुत्पिपासादिगुरुकठोरक्लेशमगणयन्तः। सागराम्बरां वसुधां पर्य्यटन्तो लब्धधना दुःखविनिमयेन धनिकसुखं लभन्ते, केऽपि वा पारत्रिकसुखैषिणो व्रतोपवासादिविधिविहिताशेषकार्य्य-

जातानुष्ठानक्लेशाविरतिशयं दुःखं प्राप्य स्वर्गसुखं साधयन्ति। केऽपि च गुरुशुश्रूषापरवासाध्ययनादिक्लेशैर्लब्धज्ञानास्तीर्थादिपदवीं समासन्नाः पित्रादीनां निरतिशयामानन्दधारामुत्पादयन्तो नानासुखं समनुभवन्ति। ध्रुवप्रह्लादहरिश्चन्द्रादीनां बहूनामेव राजर्षीणां पुराणाख्यायिकाश्च प्रकृष्टप्रमाणम्

तथाच—आसीत् वेदप्रियो नाम कश्चिद्ब्राह्मणः भिक्षालब्धेन भक्ष्येण क्रमशस्त्रीणि दिनानि यावदतिथिं परिपूज्य निःस्वो भूत्वा भूयो भिक्षया गृहस्थपीड़नं विमृश्य भिक्षाविमुखः फलमूलार्थी पत्न्या समनुगम्यमानो वनं विवेश। तत्र च कालवशादसौ कालभोगिना दष्टः मृतश्च, ततस्तत्पत्नी शुभव्रतं नाम कुमारं प्रतिवेश्मिनो हस्ते समर्प्य सहमृताभूत्। ततो गच्छति काले स बालः वयस्यसविधे स्वपित्रोरश्रुतपूर्व्वमुदन्तमाकर्ण्य बहुधा विललाप। ततस्तु निजदौर्भाग्यमालोचयन् जगदाश्रयं परमेशमाराधयितुं कृतसङ्कल्पः, उपनेतुः सकाशात् कावेरीतीरमाससाद। तत्र कृच्छ्रैरेव तपोभिर्भगवन्तमाराधयामास। ततस्तस्य तपःप्रभावेण समुपागतो नारायणः सूनृतया गिरा शुभव्रतं सन्तोष्य ब्रवीति—

"उन्मील्य नयनं वत्स! पश्य मे रूपमव्ययम्।
अभीष्टं वृणु नो किञ्चिददेयं तुभ्यमस्ति मे॥"

इति। शुभव्रतश्च विगलिताश्रुः सगद्गदमाह—भगवन् समागतोऽसि? त्वमतिकठोरः खल्वसि, पश्य मे दुर्दशाम्, तपोदुःखात् कङ्कालमात्रं शरीरं, त्वच्चरणसंस्पर्शेन न मे करौ

प्रभवतः व्यग्रं, वाक् च सम्यक् प्रसर्त्तुं नालम्। घोरान्धकार-तयावृणोति मे चक्षुः पिपासया नितरामर्द्दितोऽस्मि। इयमेव समुपस्थिता दीनस्य शेषदशा, इत्थं क्रोशमानः शुभव्रतो भूमौ निपपात। ततो हि भगवान् तमङ्के निधाय प्राह—हंहो वत्स, तपसा परितुष्टोऽस्मि, अतो निखिलज्ञानविज्ञानादिसमग्र-विभूतीनां त्वमेव आश्रयो भूयाः, इति वरं दत्त्वा ब्रवीति—अयि पुत्रक, तपःप्रभृतिसदनुष्ठानदुःखमन्तरेण कुतः सुखस्य सम्भवः? जगति यानि यानि पदानि सन्ति, तानि तपः-क्लेशलभ्यानि इत्युक्त्वान्तर्दधे।'

वस्तुतः समवलोकयामो यदत्र राजधर्म्माधिकरणिकपदा-दारभ्य यान्यपि वर्त्तन्ते यशस्कराणि सुखमूलानि कार्य्यप्रप-ञ्चानि, तानि दुःखमृते न लभ्यानि। धर्म्माधिकरणिकपदप्रार्थी बहुकष्टार्জ्जितप्रचुरधनव्ययजनितं क्लेशं अध्ययनचर्य्यासमुत्थं दुःखञ्च सहित्वा पश्चात्तत्पदं लभते। इत्यमेव बहुशः वर्त्तन्ते दृष्टान्ताः, बाहुल्यभयेन परित्यक्ताः। अतः सुष्ठु तावदभिहित-माचार्य्यपादैः यत्—"न हि सुखं दुःखैर्विना लभ्यते" इति शम्।

---

## "आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः"

न लसति न सोत्साहेन कार्य्याणि विदधातीति अलसः, उत्साहरहितो जनः तस्य भावः, आलस्यम्। आलस्यान्वितो नरः न जगतामात्मनश्च किमपि सौख्यम्, हितञ्चापि कर्य्यं सुसम्पादयितुं प्रभवति।

दृश्यते च जगत्यत्र प्रायश एव तादृशो मन्दभाग्यः, बाल्ये वयसि अनृतेन वचसा हितकामिनो गुरून्, स्नेहमयं पितरं, महीयसीं मातरञ्च प्रतार्य्य क्रतञ्च दिनं रुजाव्यपदेशेन किमपि वा करचरणशिरोरोगादिविविधदुर्द्दमनीयव्याधेरुत्पत्ति-लक्षणं कल्पयित्वा आत्मीयानां मनसि सुसमानयति स्ववियोगजं दुःखदैन्यम्। सम्भाव्य च तस्माद्धिखिलस्नेहैकायनस्य सुतस्य विच्छेदं पिता तस्य शिक्षायां सर्व्वथैव भवति मन्दादरः, तेन च प्राप्ते वयसि शिक्षाशून्यतया पदे पदे समनुभूय दुःखं जठरदैन्यमपनेतुं न कथञ्चिदपि समर्थोऽस्ति स खलु वराकः। अत एव उन्नतिकामिनामवधारणार्थं कलकण्ठेन संगीयते नीतिशास्त्रचतुरचूडामणिना महापण्डितेन विष्णु-शर्म्मणा—

"षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता॥" इति

समवलोकयामो वयं इह तावल्लोके केऽपि धर्म्मार्थं, केऽपि वा

अर्थसिद्धये, केचन कामाय, केचन वा मोक्षार्थं, केचित् त्रिवर्ग-हेतोः, केचिद्वा चतुर्वर्गफलप्राप्तये अल्पमनल्पं शरीरपातपर्य्यन्त-मपि वा यतन्ते। तत्र यद्यपि दैवगत्या कश्चिद्विफलकामो धर्म्मार्थ-कामानां किञ्चिन्मात्रलाभात् पर्य्याप्तमिति मन्वानः परिभवति। कोऽपि वा यावत् प्रज्ञाबलं, यावच्च सामर्थ्यं, तावदेव यतन् भाग्यानुरूपं फलं लभते, केऽपि वा आमरणान्तं यतमानः अवशेष-दर्शनलोलुप आस्ते। कश्चिद्वा निर्व्वाणार्थं धर्म्मार्थादीनपहाय मोक्षक्षेत्रमारोहति इत्येवमुद्देश्यवस्तुनि प्रयतमानानां साधूना-मुज्ज्वपदवीमनुसर्त्तुमनलसः एव सर्वथा अधिकारी, किन्तु नाना-गुणसम्पन्नोऽपि अलसः किञ्चिन्मात्रमनुसर्त्तुं नार्हत्येव।

अस्य च रिपोः प्रभावात् अङ्घ्रिवानपि खञ्जवदास्ते, धृतकरोऽ-पि नादत्ते, श्रुतिमानपि बधिरतां भजते, चक्षुष्मानपि नावलोक-यति। प्रत्यक्षतोऽपि दृश्यते बुद्धिमानपि विद्यार्थी आलस्यप्रभावा-दध्ययनं परिहरन् तत्त्वोपदेशतः चिरं वञ्चितो भवति। नितरां यानि यानि खलु वर्त्तन्ते मनुजानामतिप्रकृष्टसुखा-वहानि कार्य्याणि, यानि च तेषामवश्यकर्त्तव्यानि तेषु तेषु सदा पराङ्मुखत्वेन क्षीणा भवति अत्युत्तमापि जीवनगतिः, प्रक्षीणञ्च संसारसुखं, नष्ट एवास्ते स्वजनस्नेहः, एवञ्च प्रति-कार्य्यं समासाद्य सुमहत्तमेव विघ्नमन्तर्दुःखेन भृशं ज्वलति शुष्ककाष्ठलग्नवह्निरिव कृत्स्नं जीवनम् एवमपि च सर्व्व-सुखनिदानरूपेण स्वाधीनतासुखेन नूनं प्रवञ्चितो दुर्भाग्यः पर-मुखापेक्षितया स्वशरीररक्षणोपायपरिचिन्तनेऽपि घटते शिथिल-

प्रयत्नः, सुतरां क्षुधया पिपासया वा शुष्ककण्ठतालुरपि पार्श्व-मेकमुपसृत्य सन्निहितं भक्ष्यं पानीयं वा भक्षोतुं न समर्थोऽस्ति जाड्यप्रभावेण।

दृश्यते तावत् लौकिकव्यापारेषु यमेव शत्रुसंज्ञया परि-गणयन्ति सर्व्वाः। स तु एकैकविषयमवलम्ब्य सूचयति अन-र्थान्। तथाहि—एको विषयाधिकारेण, अपरश्च स्वाधीकार-पदवीं लब्धुमिच्छया, तथान्यः ऋद्धिमतः धनकनकलाभेन, केऽपि निन्दया, केऽपि वा स्वार्थभङ्गबाधाशङ्कया परस्परं वैरायते, किन्तु ते हि सपत्नयः कति दिनानि, कति मासान्, कति वत्सरान् वा विपक्षतामाचर्य्य स्वाभीष्टं प्राप्य किम् कालवशेन प्रतिनिवर्त्तन्ते, परन्तु आलस्यं नाम महानेव शत्रुः आबाल्यात् निधनं यावत् सर्व्वस्वमधिकृत्य इहामुत्र फले च वञ्चयित्वा लोकान् परमदुर्गतपथमधिरोहयति सर्व्वात्मना जगत्यमुष्मिन्।

दयादाक्षिण्यनम्रतादिभिरतिविनयो माणवको गुरुमुखाल्ल-ब्धोपदेशोऽपि आलस्यसेवया प्रणिधानाभ्यासाचरणवैमुख्यादुपदेश-साफल्यं नाप्यते। तथाहि—

"इतरेषामिह गुणानामाधारे प्रियालसमाणवके च।
प्रयत्नादपि न्यस्तो न भविष्यति फलवानुपदेशः।" इति

दैवगत्या प्राप्तश्रीः श्रियमभिलषन् वा अलसो जनः सर्व्वथा तया वञ्चितो भवति। अत्रास्ति विद्यापतिप्रणीतपुरुषपरीक्षा-यामेका हास्योद्दीपिनी उपकथा! तथाहि—

आसीन्मिथिलाप्रदेशे वीरेश्वरो नाम कश्चिन्मन्त्री। स च स्वभावाद्दानशील: परमकारुणिकश्च सर्व्वेभ्यो दीनानाथातुरपङ्गुखञ्जबधिरासमर्थेभ्य: प्रत्यहमिच्छाभोजनमर्पयति। तथा अलसेभ्योऽपि भोज्यं प्रयच्छति। तेन हि परमसुखेन ते दिनानि व्याहृत्यासते।

अनन्तरं तेषां सुखं दृष्ट्वा वञ्चका अपि कृत्रिमालस्यं दर्शयित्वा तै: समं पिण्डं गृह्णन्ति। तदनन्तरमलसागारे बहुद्रव्यव्ययं दृष्ट्वा तन्नियोगिपुरुषै: परामृष्टम्—'यदस्मबुद्ध्या करुणया केवलमलसेभ्य: स्वामी वस्तूनि अर्पयति, तानि कपटेन निरलसा अपि परिगृह्णन्ति, तर्हि मामकानां प्रमाद:। यदस्मद्दोषेण स्वामिधनं वृथा नष्टं भवति, तर्हि वयं प्रत्यवायिनो भवाम:, अत: अलसपुरुषाणां परीक्षां कुर्म:' इति परामृष्य प्रसुप्तेषु तेषु अलसशालायां ते नियोगिपुरुषा: वह्निं दापयित्वा निरूपयामासु:। ततो गृहलग्नं प्रवृद्धमग्निं दृष्ट्वा धूर्त्ता: सर्वे पलायिता:। किञ्चिद्विलम्बेन ईषदलसा अपि निर्गता:, किन्तु, चत्वार: पुरुषा: तत्रैव सुप्ता अन्योऽन्यमालपयन्ति। एकेन पटाच्छादितवक्त्रेण उक्तं—'अहो! कथमयं कोलाहल:?' द्वितीयेनोक्तं—'तर्क्यते अत्र हि गृहे अग्निर्लग्नोऽस्ति।' तृतीयेनोक्तं—'य इदानीं जलार्द्रवासोभि: कटैर्वा अस्मानावृणोति।' चतुर्थेनोक्तं—'अहो! वाचाला:, कति वचनानि वक्तुं शक्नुथ:; तूष्णीं तिष्ठथ:।' ततश्चतुर्णामपि परस्परालापं श्रुत्वा प्रवृद्धं वह्निञ्चापि समवलोक्य

वधभयेन चत्वारस्तेन नियोगिपुरुषैः बलिष्ठास्य रक्षिताः। इति सुभाषितं परमविदुषो विद्यापतेः।

यत्प्रभावेण जीवनपातमपि नागणयन्तः अलसाः, ततोऽधिकं किमिहास्ति हेयास्पदम्? सर्व्वापदामाश्रयस्थानञ्च? अतः साधु खलु कीर्त्त्यते, निखिलकरतलामलकवद्दर्शिना नीतिज्ञेन—'आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः' इति।

---

## X "प्रीणाति यः सुचरितैः पितरौ स पुत्रः"

जगत्यस्मिन् ययोरनुग्रहेणैव तनयाः सुखमयं संसारं सर्वसौन्दर्य्यनिदानं ज्ञानञ्च अधिकर्त्तुं शक्नुवन्ति। ययोरेव प्रयत्नेन स्वस्वभक्ष्यं गृहीतुमपि प्रभवन्ति। ययोर्मन्दाकिनीपूतधारा एव पवित्रस्नेहप्रवाहाः त्रायन्ते सुतान् कलुषसमूहात्। यौ हि स्वीयतनुक्षयसम्भवेनापि कर्म्मणा, हेलया सर्वस्वं विनिमयेन च सुखयितुं कामायेतेऽतिमात्रम्। यावेव क्षुधातृष्णया च जठरदंदह्यमानावपि बिभृतः तनुजान्। यावेव च आजन्मार्जितकष्टलब्धेनापि वभवेन शिक्षायै कल्पयित्वा मनुष्यपदवीं समानयतः स्वाङ्गजाम्। तौ परमकारुणिकौ पितरौ कल्पपादपाविव कठोरायामपि संसारकर्म्मभूमौ समुपदिशन्ति आशीर्मिश्राः। तयोरेव प्रत्यक्षदेवतयोरुपासनमपहाय यददृष्टचरं देवमुपासन्ते साधकाः, तद्धि तेषामज्ञानान्धता एव भूमिः।

न चानयोः स्नेहेन समं किमपि वर्त्तन्ते विषयाः, अन्यान्यपि च निरुत्तमानि वस्तूनि, यत्तावत् पित्रोः स्नेहपवित्रधारायाः शतांशेन सह तेषामनुकर्त्तुं शक्नुवन्ति कथञ्चिदपि।

यावदपोगण्डा एव वर्त्तन्ते अर्भकाः विषमसृतञ्च तुल्यमूल्येन परिगृह्णन्ति, हितमहितञ्च परिकल्पितुं न प्रभवन्ति, तर्हि प्रतिनियतच्छायेव पश्चादनुसृत्य पितरौ रक्षतः निखिलपापतापात्। कठिनव्याधिग्रस्तेषु च तनयेषु अवस्थातिरिक्तेनापि धनव्ययेन सुयोग्यचिकित्सकान् विनियोज्य झटिति निरामयं कर्त्तुं समीहेते परमसंख्यानि दैवकार्य्याणि च समनुष्ठाय विपदमपाकर्त्तुं निरन्तरमेव यतेते। पुत्रमुखस्वाच्छन्द्यार्थं पिता वर्षातपादिस्वभावप्रभवं गुरुकठोरमपि कार्य्यमकरणीयामपि दस्युतस्करवृत्तिं च समालम्बितुं न कथञ्चिदपि वितर्कयति। इत्थं कति कति समाकलयामो महीयसोः पित्रोर्माहात्म्यम्। अनन्तयुगकीर्त्तनेनापि तयोः महिमानं व्यक्तीकर्त्तुं न समर्थोऽस्ति भोगिराजवासुकिरपि रसनासहस्रेण। तयोः परिचर्य्या स्वर्गद्वारमनन्तधर्म्मसमवायं कृत्स्नं तपसः फलञ्च समानयत्यतितरां नवनीलनीरदनिर्घोषेणापि नितरां समवगायन्ति आर्य्यपादाः—

"पिता स्वर्गः पिता धर्म्मः पिता हि परमं तपः।
पितरि प्रीतिमापन्ने प्रियन्ते सर्व्वदेवताः॥
पृथिव्यां गुरुतरा माता गगनादुच्चतरं पिता।" इत्यादि,

अहो! त एव धन्याः ये तावत् प्रत्यक्षदेवतयोः पित्रोः

प्रीतिमुत्पादयितुमर्हन्ति। समवलोक्यते च पिता पुत्रार्थं कां कां नाम निकृष्टां वृत्तिमनभ्यस्तां क्रियाञ्च नाधिगच्छति ? असीमविलाससामग्री-सुसज्जित-हर्म्यतलवासो अपरिमितानुगतदासदासीजनजुष्टो धनेश्वरः नानाविधबहुसुखसम्भोगपरोऽपि च ऋते पुत्रप्रीतिं सम्यक् तदनुभवितुं नाऽलम्, अपि तु नितरामनिवृत्तिमेवालम्बते। अपि चेत् लभते तदनुपमं पुत्ररत्नं दैववशात् तन्निरन्तरं परिहाय स्वसुखस्पृहां तमेव सुखयितुं समीहते समन्तात्। सत्यपि सेवकजने स्वयमेव तत्-परिचर्य्यापरोभूत्वा आत्मानं बहु मन्यते। दीनस्तावद् आयासबाहुल्येन स्वोदरपूर्त्तिं कुर्व्वन् भिक्षालब्धेनैवान्नेन प्रतिपालयितुकामः कामयते सर्व्वथा पुत्रम्। ईदृशयत्नबाहुल्य-लभ्योऽसौ तनयः कीदृशलक्षणलक्षितः पितॄणामानन्दमातनोति सम्यक् तन्निर्देष्टुं वयमसमर्थाः स्मः। शास्त्रवाक्यं पुनर्जीवतो वाक्यपालनं, मृत-तिथौ विप्रेभ्योऽन्नप्रतिपादनं, गयायां पिण्ड-दानमित्यादि। तथाहि—

"जीवतो वाक्यपालञ्च मृताहे भूरिभोजनम्।
गयायां पिण्डदानञ्च त्रिभिः पुत्रस्य पुत्रता॥" इति

हन्त! खलु महतो महीयसः पितुरविचारितैवाज्ञा परिपालनीया पुत्राणाम्। पिता हितमहितं वा युक्तमयुक्तं वा कठोरमकठोरं वा नययुक्तमनयपूर्णं वा यद्यदादिशति, तत् सर्व्वथा विधातव्यं पुत्रैः। पित्राज्ञानुसंशीलयतस्तनयस्य वचनमिदम्—

"पितुर्हि वचनाद्देवि पतेयमपि पावके ।
भक्षयेयं विषं तीक्ष्णं मज्जेयमपि चार्णवे ॥" इति

न चैषा साधारणी वाणी, न चानन्यसाधारणं महत्त्वम् ; यत् स्वस्तनं यौवराज्याभिषेकमपहाय रामचन्द्रस्य तादृशी वचनप्रवृत्तिः । धन्यो रामचन्द्रः ! धन्या तस्य पितृभक्तिः !!

अपरस्य सोमवंशप्रसूतस्य शान्तनुनन्दनस्य भीष्मस्य पितृसन्तोषार्थमविचलितभावेन ससागराया धरण्याः परित्यागः स्मारयति पित्राज्ञानुवर्त्तित्वं जनानां मनांसि अतिमात्रम् ।

तृतीयतः क्षत्रियकुलचूडामणिः पूरुरेव समाकर्षति चेतनानां चेतः । स तु यौवनसुलभं सुखजातं तुच्छ तृणवन्मन्यमानः पितुर्ययातेर्जराग्रहणेन तमतितरामतर्पीत् । पित्राज्ञाननुवर्त्ती तनयः स्वर्गराज्याधिगतोऽपि रौरवचरः, महाधनेश्वरोऽपि दीनहीनः, सर्वसौभाग्ययुक्तोऽपि मन्दभाग्यः । येन हि निखिलेश्वरगुणोपेतस्य जनकस्य वचनपरिपन्थी स खलु मन्दभाग्यः । यस्य ईषदपि निश्वासपवनः प्रपञ्चयति कलुषपुञ्जमात्मजस्य । शास्त्रवाक्यं तावत् पुन्नामनरकपरित्राणात् मातापित्रोः पूततासम्पादानात् पित्रोरवशिष्टकर्म्मसम्पादनाच्च पुत्रत्वं विज्ञापयति । यथाहि—

"पुन्नाम्नो नरकाद् यस्मात् त्रायते पितरं सुतः ।
तस्मात् पुत्र इति ख्यातः स्वयमेव स्वयम्भुवा ॥" इति

तेषु पुनः किं लक्षणमस्माभिः स्मर्त्तव्यमिति चिन्तनीयम्, सद्यःप्रसूतपुत्रस्य मुखसन्दर्शनादेव नरकत्राणं पुनरस्मादृशानामदृढचेतसां स्मर्त्तुमयोग्यम् । देहावसानात् परं पिण्डदानादिभिः

पिढ्व्यसिसाधनमपि कर्म्मणामतिशयितानामसाध्यत्वात् तत् सुसम्पन्नं स्यान्नवेति महानसौ संशयः। अतो मन्यामहे सर्वथाविचलितभावेन शास्त्रवाक्यमनुसर्त्तव्यं सत्पुत्राणां यत्—"प्रीणाति यः सुचरितैः पितरौ स पुत्रः" अथवा 'पिता स्वर्गः पिता धर्मः' इत्यादि। कृतमधिकवाक्प्रपञ्चेन, इति।

---

## "परोपकरणं कायादसारात् सारमाहरेत्" *

परोपकरणं किल विपन्नानां तथा दुर्गतानामपि उद्धरणम्। ये तावन्महान्तः जरामरणसङ्कुले संसारसद्मनि जलबुद्बुदोपमं जीवितमासाद्य परार्थे सर्वस्वमर्पयन्ति, ते हि दयावतारा नरविग्रहरूपैरमरपुरविलासिनो वपुष्मन्तः धरामलंकुर्वन्ति। ते च कायेन मनसा वाचा तथा धनेनापि येन केनचनोपायेन परान् सन्तोष्य आत्मानं बहुमन्यन्ते। त एव खलु धन्याः महाजनगणैरभ्यर्चितचरणाः सार्थकजन्मानो महापुरुषाः। अन्ये ये पुनः स्वार्थसिद्धिमभिसन्धाय परदुःखमपाकर्त्तुमभिलषन्तः, तेऽपि किल कियतीं साधुपदवीमनुगन्तुं प्रभवन्ति। धार्म्मिकगणनायां तेषां नामानि च नयनपथे समवर्त्तन्ते सामाजिकानाम्।

दृश्यते तावत् स्वार्थलेशपरिशून्यानां परसन्तुष्टमात्रो-

* परोपकाराय सतां विभूतिः।

पचितमनसां विधातुः नियमशृङ्खलेन कालेऽहनिशं नैर्व्यायनेव्यां समुपजायते तेषां स्वार्थाधिकापि विपुला सिद्धिः। न चापि सुखदुःखमयेऽस्मिन् संसारे तादृशा एव संख्यावन्तो विरलाः, ये पुनः सत्सिद्धामाहात्म्येऽन अन्यदीयार्थे आत्मानं बलिमुपहर्तुं नार्हन्ति। केचन निसर्गत एव दयाप्रवणहृदयाः जातिः स्थानं पात्रमपात्रञ्च नासमीक्ष्य आर्त्तदुःखमपनेतुं यतन्ते। आहुस्तावदार्य्यपादाः—

"ते वै सत्पुरुषाः परार्थघटकाः स्वार्थस्य बाधेन ये
तेऽमी मानुषमध्यमाः परहिताः स्वार्थाविरोधेन ये।
ते वै मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये विघ्नन्ति निरर्थकं परहितं ते के न जानीमहे॥" इति

इह तावच्चक्रनेमिवदेव सुखदुःखैः संपूर्यमाने जगति न कस्यापि भागधेयस्य कार्त्स्न्येन सुखं दुःखं वा चिरमवतिष्ठते। न वा एकदा यः परमदुर्गतः, अन्यदा स तथाविध एव संवृत्तः। उक्तञ्च—

"कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण॥" इति

यद्यप्येवम्भूते संसारे एकस्य व्यसने अपरः सहानुभूतिमास्थाय स्वीयसामर्थ्यानुरूपं यतते। तर्हि तस्य विपदि सोऽपि यथाशक्तिसाहाय्यं विधास्यतीति जगतो निसर्गनियमः। किन्तु अशेषगुणास्पदोऽपि स्वार्थपरश्चेत् सर्व्वथैव दूष्यते परमविधेयैराचार्य्यमिश्रैः। नितरां सर्वेषामेव परोपकरणमवश्यमेवावलम्बनीयम्। इह

तावत् वर्त्तन्ते धर्म्मार्जनार्थं यावन्तिवर्त्मानि परोपकरणं हि तेषामेकतममतिप्रशस्तं वर्त्म। परोपकारिणो मृता अपि सुमनस इव जगत्यत्र राजन्ते। किं बहुना परममङ्गलमयस्य भगवतो नामनिकरेण समं परोपकारिणामृतुपर्णयुधिष्ठिरनलप्रभृतिभूपालानां नामानि कङ्कीर्त्य विभावरीं सुप्रभातां मन्यन्ते मनुजाः। उक्तञ्च—

"शरीरस्य गुणानाञ्च दूरमत्यन्तमन्तरम्।
शरीरं क्षणविध्वंसि कल्पान्तःस्थायिनो गुणाः॥" इति

परदुःखं हातुमभिलषन्तो महान्तः जीवनपातसम्भवतोऽपि कर्म्मणो न विरतिमालभन्ते। तथाहि—

एकदा राजाधिराज उज्जयिनीपतिर्महात्मा विक्रमादित्यः स्वसचिवेषु धराभारं निधाय यतिवेशेन पर्य्यटन् कदा कस्मिंश्चिन्नगरोपकण्ठे भागिरथीतीरधौतपाददेशं किमपि देवायतनमगच्छत्। तत्र देवगृहे बहवो महाजनाः पौराणिकात् पुराणं शृण्वन्ति। राजापि नद्यां स्नात्वा देवालयमुपगम्य देवं नमस्कृत्वा महाजनान्तिके उपविष्टः। तस्मिन् समये पौराणिकाः पुराणवाक्यानि पठन्ति—

"अनित्यानि शरीराणि विभवो नैव शाश्वतः।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्म्मसंग्रहः॥
श्रूयतां धर्म्मसर्व्वस्वं यदुक्तं ग्रन्थकोटिभिः।
परोपकारः पुण्याय पापाय परपीड़नम्॥"

इत्यादि पुराणकथनसमये कश्चित् स्थविरो ब्राह्मणः भार्य्यया

सह नदीमुत्तरन् दैवगत्याम्भसि निपतितः। महापूरेण नीयमानो हाहाकारं कुर्व्वन् नदीमध्ये स महाजनान् प्रति वदति—'भो भो महाजनाः, धावत धावत वृद्धः सपत्नीको ब्राह्मणोऽहं नदीप्रवाहेन बलात् नीयमानः। कोऽपि सत्त्वाधिको धार्म्मिको मम सपत्नीकस्य जीवनदानं करोतु, इति जले नीयमानस्य दीनध्वनिं श्रुत्वा महाजनाः सर्व्वेऽपि सकौतुकं पश्यन्ति, परं न कोऽपि नदीमध्ये प्रविश्य प्रवाहादपनेतुं तस्मै अभयं प्रयच्छति। ततो राजा विक्रमो 'मा भैषीः' इत्युक्त्वा नदीमध्ये पत्न्या सह ब्राह्मणं महापूरादाकृष्य तटभूमिमनयत्। ततो ब्राह्मणः स्वस्थीभूत्वा राजानमाह—'भो महासत्त्व, मदेतच्छरीरं प्राक् मातापितृभ्यामुत्पादितम्, इदानीं त्वत्तो द्वितीयं जन्म प्राप्तम्। अतः किमपि ते प्रत्युपकारः करणीयः। न चेत् अनन्तकालं मे रौरववासः स्यात्। नितरां पुण्यतोयाया गोदावर्य्या उदकमध्ये द्वादशवर्षपर्य्यन्तं मन्त्रजपस्य पुण्यं तेऽद्य दीयते। अन्यच्च, यत् कृच्छ्रचान्द्रायणादिना किमपि सुकृतमुपार्ज्जितमस्ति, तत्सर्व्वं गृहाण' इत्युक्त्वा महावाक्येन तत्पुण्यं भूपतये समर्प्य आशिषञ्च दत्त्वा पत्न्या समं निजस्थानं गतः। अत्रान्तरे अतिभीषणः कायः कोऽपि ब्रह्मराक्षसः राजसमीपमागतः तमवलोक्य भूपतिः साश्चर्य्यमाह—'भो भो महासत्त्व, कोऽसि त्वम्?' तेनोक्तम्—'अहमत्रैव नगरे कश्चन ब्राह्मणः निरन्तरं गुरून्, साधून् महतश्च दूषयामि, तद्दुष्कृतिवशेनैव अस्मिन् अश्वत्थपादपे ब्रह्मराक्षसो भूत्वा अत्यन्तदुःखितो दशवर्षसहस्रं

तिष्ठामि। अद्य भवतः प्रसादादुत्तीर्णो भवामि' इत्याकर्ण्य स भूपतिः तदेव पुण्यं तस्मै अदात्। सोऽपि राक्षसः तेन पुण्यचयेन स्वकर्म्मणस्तीर्त्वा दिव्यरूपं परिगृह्य विविधव्यागुपन्यासेन राजानं स्तुत्वा दिवं गतः। भूपतिरपि स्वनगरमगात्।

वस्तुतः परोपकारिणां जगत्यत्र अर्थिभ्यः सर्व्वस्वदानम् उत जीवनार्पणपर्य्यन्तमपि शतशो दृश्यते दृष्टान्तः, नितरां "परोपकरणं कायादसारात् सारमाहरेत्" इति यदुक्तं तदतिशोभनमतिसमीचीनमत्यन्तसत्यञ्च वचः सुसूक्ष्मदर्शिनामिति कृतं बाहुल्येन।

---

## "विनयो भूषणं महत्" *

विनयो हि नाम चेतनानां चित्तोत्कर्षज्ञापको धर्म्मविशेषः। स खलु सर्व्वेष्वेव गुणगणेषु गरीयान्। तेन परिहीनो नानागुणविमण्डितोऽपि विचक्षणः गर्हत्वमेवावहति प्रेक्षावताम्। यैरेव गुणचयैः पुरुषा जगत्यत्र श्रेष्ठपदवीं भजन्ते, ऋते च विनयं ते हि तेषामपकर्षमेव ज्ञापयन्ति। विनयो तावत् सर्व्वासु अवस्थासु तथा सुखेषु दुःखेषु वा तुल्यरूपेण समाकर्षन्ति परेषां मानसबलम्।

स च विद्यया तथा वैभवेन विच्युतोऽपि स्वीया-

---

* विनयस्य तुल्यो गुणो नास्ति।

साधारणविनयगुणेन परान् नियम्य सर्वथात्मवशमानेतुं प्रभवति। स्वदेशेषु विदेशेषु च तस्य समानोऽधिकारः। किन्तु विनयहीनस्य सन्त्यपि च विविधगुणग्रामाः, वर्त्तन्ते चापरिमिताः अर्थाः, तथापि ते हि केवलं मुधैव किंशुककुसुमानीव दूरत एव सुसम्पादयन्ति दर्शकानां नयनानन्दधाराम्। वस्तुतो विनयविवर्ज्जितं नरं गर्व्वप्रतिमूर्त्तितया परिकल्पयन्ति सज्जनाः। यथैव च स्त्रीगुणचर्यैविवर्ज्जिता कामिनी महार्घरत्नालङ्कारविमण्डितापि न सुखयति केषामपि चेतः, परं स्वकीयविषमकूटिकेन पदे पदे समावहति क्लेशम्। तथैव विनयपरिहीनस्य संसारकार्य्यनिबन्धेषु घटते महत्येव विड़म्बना, सम्भवति च तस्मादेव सर्व्वानर्थस्य सूचना, समुपजायते ततोऽपि जीवनपातः।

तथा च निखिलविभूतिसमन्वितस्य सृष्टिस्थितिप्रलयकारिणो भगवतो नारायणस्य कुलसत्तमाः प्रख्यातशौर्य्यबलान्विता यादवाः पुरा किल तपोधनं महर्षिंदुर्वाससमविनयेनावमत्य तदभिशापेन परस्परं विरोधमुत्पादयन्तः समूलमस्तकपुरमवापुः। तथा पुनः सर्वसमृद्धिसम्पन्नाः महाहवविजयिनः प्रवलबलवाहनाः दुर्य्योधनादयः कौरववीरमुख्याः केवलमविनयदोषेणैव अपूर्णेनैव संसारसुखेन कालकवलिताः बभूवुः। अन्ये च शिशुपालदन्तवक्रादयोऽपि समरकुशलिनोऽपरिमिययोद्धृगुणविमण्डिताः महीपालाः विनयहीनतया अकाले परेतराजभवनातिथित्वमुपाययुः।

इत्थमेवाविनयस्य परिणतिं समवलोक्यामनयन्ति सज्जना

यत् प्रभूतपयसि लवमात्रमपि गोमूत्रं तावन्ति दुग्धानि दधित्वेन परिणमयति। तद्वदेव प्रभूतगुणसत्त्वेऽपि अन्तरेण विनयं पुरुषं विकृतिमानयन्ति शरीरसहजा मानवधर्म्माः। वर्त्तते किल गुणरत्नस्य विनयस्य तथैव दिशा विकाशः, तथाहि—

"गौरवं गुरुषु स्नेहं नीचेषु प्रेम बन्धुषु।
दर्शयन् विनयो धर्म्मः सर्व्वप्रीतिकरो भवेत्॥" इति

अत्र गुरुजनेषु गौरवं तावत् वयोवृद्धजनान् प्रति यथोचितसम्मानप्रदर्शनम्, तेषामाज्ञानुवर्त्तित्वम्, सुनृतेन वचसा तैः समं संलापः, कुलवृद्धानां तथा राजपुरुषाणामनुद्धतवाग्वैभवैरभ्यर्थना, तदन्तिके चापल्यपरिहारः; वयःकनिष्ठान् प्रति नयधर्म्मकथनं हितानुकीर्त्तनञ्च, एकस्य दुःखमपरेण स्वमिव परिगणनीयम्, सततं सदयव्यवहारः; बन्धुषु कापट्यवर्ज्जनम्, तेषामभावे आत्मनोऽपि अभावबोधः, सुखे दुःखे च समे ज्ञात्वा एकात्मनोः विभिन्नवपुर्भ्यां संसारकार्य्यनिर्वाहनमित्यादिभिस्तावत् परिव्यज्यते विनयविभूतिः, विनयान्वितस्य पुरुषधौरेयस्य।

विनयः किल न कमपि लघयति, नवा खर्व्वयति, किमपि वा पदमर्य्यादातः परिवर्जयति, परं सर्व्वासु अवस्थासु ततः उन्नततरामेवावस्थां घटयति। दृश्यते तावदत्र निकृष्टस्थानजननमभिलभ्य विनयमाहात्म्येन जनसमाजशीर्षस्थानमलंकरोति लोकः।

पुरा नैमिषारण्ये महर्षिगणोपेतमाश्रमपदं सूतमुखादुद्-

गतेन पुराणवचसा मुखरितमासीत्। वर्त्तमाने च बहवः एव निकृष्टस्थानसम्भवाः विनयभूषणमण्डिताः साधवः अव्याहतप्रभावेन शासति सामाजिकानां पदम्। द्वापरे अजातशत्रोर्म्महाक्रतौ निखिलगुणैश्वर्य्यवता श्रीमन्नारायणेन ब्राह्मणानां चरणधौतमकारि। एवञ्च यूरुपादीनां पुराणवार्त्तापर्य्यालोचनावसरे समवलोक्यते अस्माभिर्यन्महापुरुषधौरेयेण योशुना कदा शिष्यवर्गाणां पादप्रक्षालनार्थमुदकमदायि। तेन सङ्कोचितान् विपदमपि गणयतः षिष्यान् सुनृतेन वचसा प्रतिबुध्य परमा प्रीतिरापेदे। नितरामवाधमगर्हितमविसंवादितञ्च वचः यद् विनय एव राजाधिराजचक्रवर्त्तिनां शोर्ष्चुम्बिमुकुटापेक्षया समधिकाढ्यसम्पन्नं भूषणमिति।

दृश्यते तावत् महापुरुषचरितादौ, समवगम्यते च लोकव्यवहारतः विनयमन्तरेण न विमलां शान्तिं नापि वा परमाभ्युदयपदवीमधिकर्त्तुं शक्नोति लोकः। अतएव साधूक्तम्— 'विनयो भूषणं महत्' इति सुभाषितं कस्यचित् संख्यावतः तदतिसत्यमतिहृद्यमतिशयश्लाघनीयञ्च वचः, इति कृतं बहुभाषणेन।

---

"यो ध्रुवाणि परित्यज्य अध्रुवाणि निसेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि॥"

इह किल संसारे आशा नाम किमपि परमरमणीयमत्यद्भुतमतिहृद्यञ्च वस्तु। सा चाशा स्वप्रभुधर्म्मेण सर्व्वेषामेव चेतनानां चेतः आयत्तीकृत्य विनश्वरेऽपि निखिलराज्ये त्रिदिवसन्ततिरिव जनान् परिपालयति। किमहो! यद्यप्याशानाम कापि मनुजानां ललितदर्शनातिपेसला विश्वस्ता सहचरी नाभविष्यत्, तर्हि सुजला सुफला शस्यश्यामलाशेषप्रीतिविधायिनी धरापि ऊषरभूरिव कर्कशभाविनापीड़यिष्यदनुक्षणं जन्तून्। दृश्यते तावदाक्षुद्रामहत्पर्य्यन्तमपि कृत्स्नं जगदैन्द्रजालिकक्रीड़ासाम्येन सा विस्मयमातनोति, प्रतारयति च कुलटेव विश्वस्तहृदयम्। क्वापि वा दीनहीनमूर्द्धनि दापयति राजाधिराजचक्रवर्त्तिनः शिरश्छत्रम्। कदा सा शान्तमधुरदर्शना, कदापि घोरभीषणविग्रहा, विभीषयते वा कदा अव्याहतप्रभावस्य भूभृतोऽपि शासनदण्डम्।

धन्या आशा! धन्यं ते कुहकम्!! संसारेऽस्मिन् राजानो धनिनो वा भिक्षुनभिक्षून् वा उदासीनो गृहिणो वा सर्व्वान् प्रति ते समानो दृष्टिपातः। आशाबन्धनेन पुत्रशोकातुरा माता गुरुकठोरेष्वपि दुःखेषु विस्मारयति मृतपुत्रमुखं, धारयति च दुर्विसहं देहम्। आशाप्रणोदिता च सुमूर्त्तं

पतिविच्छेदमसहमाना कुलवधूरपि भाविसुखाशया प्रेषयति पतिं दुष्पथमपि देशम्।

एवञ्च दृश्यते तावत् लोकव्यवहारेषु 'इदं मया लब्धम्, अपरमपि लप्स्ये' इति निश्चिन्वानाः सर्व्व एव प्राणिनोऽपि-काङ्क्षन्ति निरन्तरम्। भूभृतः परराष्ट्रं विजित्य, ऋद्धिमन्तो-धनकनकादिव्यवसायतः, एके धनिसेवया, अपरे भिक्षया वा स्वं-स्वं प्रवर्द्धयितुमतितरां यतन्ते; किन्तु एतेषामर्थार्थमति-प्रयतमानानां निखिलजनानामेवावश्यमिदं प्राप्तव्यमिति निश्च-यात्मिका बुद्धिः स्वाभीष्टफललाभस्य प्रकृष्टा सरणीति नास्ति तस्मिन् किमपि वक्तव्यम्।

अपि नाम दुराशाप्रणोदितो य एव स्वल्पायासलभ्यं सद्यः प्राप्तमकिञ्चित् करं कपर्द्दकमपहाय बहुतिथे काले वा प्रभूतार्थ-प्राप्तये मनोऽभिनिविशयति, विधिवशात् प्राय एव स लब्धवस्तु-भ्रंशनात् परमदुःखितोऽतिशयक्लेशमनुभवति। तथाहि—

अस्ति कस्मिंश्चिद्वनोपकण्ठे कोऽपि स्थविरकाष्ठिकः। स च स्वभावदारिद्र्येण कथं कथमपि कष्टेन काष्ठानि संछिद्य स्वजनान् परिपालयति। अथैकदा परशुहस्तेन स समुद्ररोधसि गत्वा कुठारेण पादपं कर्त्तितुमुपचक्रमे। परं दैवगत्या तस्मिन्नेव क्षणे हस्तात् भ्रष्टः परशुः अम्भसि पतित्वा चक्षुरविषयोऽभवत्। तेन स परमनिर्व्विण्णः उच्चैः क्रन्दितुमारेभे। तत् परिवेदनं श्रुत्वा जलाधिपतेस्तं प्रति निरतिशया रतिरुपजाता। तस्माच्च यादःपतिस्तस्यान्तःकरणपरीक्षार्थं प्रथमतः शातकुम्भविनिर्म्मितं

परशुमेकं गृहीत्वा तत्समीपमेत्य ब्रवीति—'भद्र, किमयं ते कुठारः ?' सोऽप्याह—'हंहो ! दयावतार, नहि नहि ममायं कुठारः, स तु भाग्यवशेनाद्य नष्टः।' तदाकर्ण्य स पुनरम्भसि निमज्ज्य द्वितीयक्षणेन रजतनिर्म्मितमपरकुठारं गृहीत्वा तस्य पुरतः पुनरागत्य ब्रवीति—'साधो, किमयं ते नष्टकुठारः ?' स पूर्व्ववदेव ब्रवीति—'हे ममोपकारमिच्छो, नायं स कुठारः, स तु अयोनिर्म्मित एवासीत्।, तदाकर्ण्य जलाधिपतिर्भूयः सलिलं गत्वा लौहमयकुठारमादाय तदन्तिकमागत्य ब्रवीति—'अयं किं ते कुठारः ? स काष्ठकृत् तमतिप्रणिधानेनावलोक्य सगद्गदमाह—

हे मदेकसदय, कृतोपकारिन्, वाढ़मयं मे स नष्टः परशुः। मयि चेत् करुणा तर्हि प्रत्यर्पताम्।' तस्य काष्ठकृतः तादृशं सरलभावं तथा लोभराहित्यञ्च परिज्ञाय सः जलाधिपतिः निरतिशयमानन्दमनुभवन्, तस्मै स्वर्णरजतमयौ द्वावेव कुठारौ प्रत्यर्पितवान्। स काष्ठकृत् तौ गृहीत्वा यावद् गृहं प्रति गतः, तावत् कश्चित् प्रतिवेशी तत्कुटीरमेत्य समुद्रतीरगमनात् कुठारद्वयप्राप्तिं यावत् समस्तमुदन्तमाकर्ण्य परेऽह्नि कुठारहस्तः समुद्रतीरं गत्वा स्वेच्छापूर्व्वकं कुठारमम्भसि निःक्षिप्य कपटप्रबन्धेन उच्चैः क्रन्दितुमारेभे। ततः तस्य रोदनमाकर्ण्य पूर्ववत् जलदेवता तमेत्य ब्रवीति—'भद्र, किन्ते शोककारणं किमर्थं वा तारेण स्वरेण रोदिषि ?' सोऽतिसम्भ्रमं प्रदर्श्याह—'महाभाग, अहमत्यन्तदुर्गतः, परशुना काष्टं संछिद्य कार्यं कथमपि कष्टेन स्वोदरं

पूरयित्वा, जीवनं धारयामि किन्त्वद्य दैववशेन मे हस्तात् च्युतः परशुरयम्‌ विनष्टः। तेनाहं रोदिमि, नास्ति किमप्यन्यत् रोदनस्य कारणम्' इत्याकर्ण्य सलिलपतिः तं परीक्षितुं पूर्ववत् पुनर्जले निमज्ज्य विशुद्धहेमसम्भवं परशुमेकं गृहीत्वा समीपमेत्य ब्रवीति—'अपि एष ते कुठारः?' सोऽपरिजानन् पूर्वोक्तकाष्ठिकस्य हेमरौप्यकुठारप्राप्तिमार्गं नितरां जलाधिपतेर्वाक्योच्चारणमात्रमेव साग्रहं—'अयमयं भोः, स मे नष्टपरशुः' इत्युक्त्वा यावत् करौ प्रसार्य्य गृहीतुमुपचक्रमे; तावत् सः जलदेवता तस्य धूर्त्ततामवगम्य किञ्चिद्दूरं गत्वाम्भसि निमज्ज्यान्तर्दधे। ततोऽसौ कृत्स्नं दिनं विलप्य यदा पुनर्नकोऽपि समायातीत्यवलोकयत्, तदालब्धाशयालब्धस्वकुठारच्चयजनितदुःखेन स्वीयभाग्यं निन्दन् गृहं प्रति चलित इति।

दृश्यते तावदिह जगति य एव निश्चितार्थमपहाय अनिश्चिते यतते, तस्य इत्थम्भूतेव विडम्बना सर्व्वथा प्रतिपद्यते! तदुपजीव्यकाककूर्म्ममूषिककथाच्छलेन महानीतिज्ञेन श्रीमद्विष्णुशर्म्मणातिसुन्दरी उपकथा विरचिता, पाठार्थिनां धैर्य्यच्युतिसम्भवतया सा परित्यक्ता। तत् कथाविषयिणी च इयमेव सुभगा वाणी तस्य पण्डितकुलवरेण्यस्य—'यो ध्रुवाणि परित्यज्य' इत्यादिरिति कृतं बाहुल्येन।

---

## "उपायं चिन्तयन् प्राज्ञस्तथापायञ्च चिन्तयेत्"

जगत्यत्र परिणामचिन्ताकुशलिनो महान्तो भाविनि यद्भाव्यम्, तत् सर्व्वं प्रागेव विनिश्चित्य कर्म्मणि प्रयतन्ते। न केवलं विषयं समीक्ष्य ते प्रक्षीणदृश इव कार्य्येष्वन्तरायसमापतनादेव विफलाः कार्य्येषु विरक्तिप्राप्तियोग्यं कञ्चनभावमुपादधति। परिणामचिन्तायाः सन्ति बहव एव सुखावहाः गुणाः, तथाहि—यद्यपि केष्वपि कार्य्येषु संप्रवर्त्तमानाः केचिदपरिणामसमीक्ष्यकारिणो मानवाः ते हि साधारणविपत्पातेन सुमहान्तमन्तरायं मन्यमानाः सातिशयमुद्विग्ना अकाण्डे कार्य्यजातं विन्यस्य परिणामे क्लेशभागिनो भवन्तीति प्रतिनियत एव निखिलजनानां कार्य्यसंघेषु सुव्यक्तमेवावलोकयामः।

एवमपि च यदि तेषां भाग्यविपर्य्ययेण स्वानुष्ठितकार्य्यमध्ये सुमहानन्तरायो घटते, तर्हि ते कथं कथमहो एतस्मात् समुत्तीर्णा भविष्याम इति चिन्तापर्य्याकुलितमानसः तत्प्रहाणोपायचिन्तनेन दीर्घदिनमतिवाह्य स्वकर्त्तव्यतः स्खलिता इति प्राय एव दृश्यते। परिणामचिन्तापाटवो हि प्राज्ञाः अपरिणामदर्शिनां वैपरीत्यमेव सततमुपगच्छन्ति। ते हि यथायथमुपायमुद्भावयन्ति, तथा तथा अपायमपि परिचिन्त्य नूनं शृङ्खलया निर्व्वाहयन्ति आत्मनः इतरेषामपि क्षुद्राणि महान्त्यपि च कर्म्माणि। समवलोकयामो वयं यद्धर्म्माधिकरणेषु ये खलु व्यवहारशास्त्रार्थदर्शिनः सुविचक्षणाः ते नूनमग्रत एव समालोचनीयविषयस्य ये ये

अपायाः सम्भवन्ति, तान् सुविचिन्त्य विपक्षवादप्रतिषेधोपायश्चापि स्थिरीकृत्य स्वप्रज्ञया विपक्षपक्षान् पराजित्य आत्मनः पक्षं प्रभुपदे स्थापयन्ति। उक्तिमिमामुपजीव्य सकलार्थशास्त्रपारंगतेन श्रीमता विष्णुशर्म्मणा निर्म्मिता काचिद् बालककौतुकविधायिनी उपकथा, या हि प्रतिपदमेवातनोति रसधारां बालश्रोतॄणां श्रवणविवरे अतिमात्रम्। तथाहि—

निवसन्ति तावदुत्तरापथे गृध्रकूटाद्रौ रेवासरिच्चरणचुम्बितशोकतस्थलसंस्थं न्यग्रोधपादपमधिकृत्य बहवो बलाकाः। एवमपि च तिष्ठत्यत्र तत्पादपपाददेशे विवराभ्यन्तरे हरगलगरलसन्निभो महानेको विषधरः। स च तत्रत्यपतत्रिणां बालापत्यानि कवलीकृत्य निरतिशयसुखमनुभवन्नास्ते। परन्तु येषामपत्यानि खादितानि ते परमनिर्वेदमालभमानाः हतस्ततो विलापेन मुखरीकृतां काननभूमिं, तदाकर्ण्य केनचन हृद्धवकेनोपदिष्टम्—भो भो नष्टप्रजा विहङ्गमाः, एवं कुरुत यूयं, मत्स्यानानीय नकुलविवरादारभ्य मामकशत्रुबिलं यावद् एकैकशो मत्स्यान् पंक्तिक्रमेण संस्थापयत। ततस्तल्लुब्धकैः आहारवर्त्मना नकुलैरागत्य भुजगो द्रष्टव्यः, स्वजातिविद्वेषवशात् व्यापादयितव्यश्च। अथ उपदेशानुरूपे कृते कार्य्ये नकुलैरागत्य सर्पो भक्षितः, पक्षिशावकानां रावं श्रुत्वा वृक्षमारुह्य तेऽपि खादिताश्चेति सुभाषितं नीतिविदो विष्णुशर्म्मणः। कथायामेतस्यामुपायमनुशीलयन्तः विहगाः अपायचिन्तनाभावेन परिणामे सुमहान्ति स्वकुलक्षयजनितदुःखानि प्राप्नुवन्तीति।

अपि च दृश्यते तावत् क्षुद्रप्राणिषु पिपीलिकाः स्वीयासाधारणप्राज्ञवृत्त्या उपायमपायञ्च स्थिरीकृत्य स्वसञ्चितवस्तुजातं सुनिभृतान्धतमसि बिले संरक्ष्य निरतिशयमानन्देन जीवनमुद्यापयन्ति। अन्ये च केवलमुपायं संशीलयन्तो कवयिमत्स्याः प्रक्षीणे सलिलजाते नवजलधरगर्ज्जनं श्रुत्वा स्थलवर्त्मना गच्छन्तः धीवरेण प्राप्ताः व्यापदिताश्चेति सुष्ठूक्तम् 'उपायं चिन्तयन् प्राज्ञस्तथापायदञ्च चिन्तयेत्' इति।

—*—

"अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति॥"

जगत्यस्मिन् वर्त्तन्ते य एव सन्तः, ते हि प्राणात्ययेनापि नोन्मार्गमधिगन्तुमभिलषन्ते मनसापि। सदवलोकयामो वयं ते चातिकठोरमपि महाजनभाषितमनुकृत्य दैनन्दिनकार्य्यजातं सुमहत् क्लेशमनुभवन्तोऽपि अविकृतेन चेतसा सुसम्पादयन्तीति। तेषां हृदयमन्दिरे सततमेव जागर्त्ति मूर्त्तिमती विग्रह इव महाजनगणोदिता पूततमा सुनृता वाणी, या हि प्रतिपदमेव समुन्नयति संसारकलुषविषयात् मनुजान्।

ऊर्द्धतमे वर्त्मनि दृश्यत एव प्रायशः अनुभूयते च स्वयमपि नित्यशः यत् साधारणेनैवासत्कर्म्मणा चणमात्रत एव विपदमपमानं वा लभामहे, यद्यप्येकदा वा उच्चारयामि अनृतां वाचं तां

चापि च यदि कश्चिदवगच्छति, तर्हि चेष्टाशतकेनापि भूयस्तस्य न प्रत्ययभागी भवितुमर्हामि। तेन च हीनैर्वा प्रधानैर्वा लघु-रिति मन्यमानः पराभूये इत्यादि सन्तं पन्थानमवलम्बमाना महाजनरीतिमनुसरन्तः सर्वदा संसारेषु विचरितुं तथा शिक्षामः। तर्हि सर्व्वे एव नः साधुतया प्रशंसिष्यन्ते, सर्व्वे एव च अस्मासु विश्वसन्तः गुरुकठोरमपि कार्य्यं साधयितुमस्मासु अविरोधमेव भारमर्पयिष्यन्ति च।

तेन च संभविता वा जीविकानामपि कश्चिदुपायः। एवं बहुधा दृश्यते सत्पथगतो न कदाचिदात्ममर्य्यादया परिच्युतो न कदाचिदन्येन विरम्बितो नापि वा कार्य्यादिषु भगवदनुकम्पावञ्चितत्वं समधिगच्छतीति। तेन च समधिगतेन सद्-गुणराशिना चिरस्मरणीयतां लोकेषु वयमालब्धुं प्रभवामः। तथा च ते ते खलु निदर्शनान्यत्र प्रकृष्टतमाः भारतमण्डनरूपाः मामकानां सामर्थ्यातीतं, तथापि तदाचरितपन्थानामंशत एवा-वलम्बितुं कर्त्तव्यः सुमहान् यत्नः। तेनैव च प्रभवति जीवानां जीनयात्राप्रसङ्गेषु निरतिशयमङ्गलमतिमात्रम्। अतः साधु खलूच्यते—'अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते। स्वल्प-मप्यनुगन्तव्यं मार्गस्थो नावसीदति' इति॥

---

## X "उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः"*

उद्योगः, अध्यवसायः कार्य्येषु निरालस्यं, सोऽस्त्यस्तीति [ णिच् ] इन्। उद्योगी पुरुषः संसारेऽस्मिन् परमाभ्युदयं तथा शाश्वतिकीं ख्यातिञ्च संलभते। इह किञ्च लौकिकं न एवं किमपि दुष्करं कार्य्यमस्ति, यद्धि विहिताध्यवसायेन सुसम्पादयितुं न समर्थयते लोकः। नूनं दृश्यते तावत् केवलमध्यवसायमवलम्बमानो नितान्तदुर्गतोऽपि परमसुखसमृद्धिसौधतलमध्यास्ते। उद्योगानां पौनपुण्येन नितान्तमनभिज्ञोऽपि विज्ञायते, क्षुद्रोऽपि महतीं पदवीमधिकरोति, शीर्णपर्णकुटीरोदरवासी दीनोऽपि प्राकारपरिवेष्टितप्रासादतलमधिकरोति, एकान्तमपटुरपि पटीयान् भवति, अतिशयनिःस्वोऽपि कनकधनसमृद्ध्या ऋद्धिमतामग्रेसरतामुपगच्छति, निर्म्मेधसोऽपि परिस्फुरति मेधा निरन्तरमध्यवसायेन। नितरामध्यवसाय एव जगतामशेषसुखसमृद्धेरसाधारणो हेतुः।

दृश्यते यावत् कार्य्यमयेऽस्मिन् संसारे कार्य्यत एव समुपजायते तदभिव्यक्तिः, परं न पुनस्तद्धि मननमात्रेण सिद्धिफलं घटयति न वा सुव्यक्तायति च जगतामुन्नतेः सरलं मार्गम्। उक्तञ्च—

---

* उद्योगात् किं न सिध्यति।

"उद्यमेन हि सिध्यन्ति कार्य्याणि न मनोरथैः।
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥" इति

वस्तुतश्चेष्टासहकृतोद्यमेन विना सुराचार्य्यकल्पापरिमेयधीसम्पन्नोऽपि विचक्षणः कल्पकोटिं यावन्मननद्वारा कार्य्येषु न प्रभवति लवकल्पामपि सफलतामानेतुम्। ये तावत् कार्य्यस्य गुरुत्वमगुरुत्वञ्चागणयन्तो बहुशो विघ्नैः पुनः पुनः प्रतिवार्य्यमाणा अपि स्थिरतरसङ्कल्पेन स्वाभीष्टान् प्रति यतन्ते, तेषामेव कार्य्यसिद्धिरप्रतिहतेति परमविधेयानां नीतिकुशलानां सुसिद्धान्तितं मतम्। तथाहि—

"प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः।
प्रारब्धमुत्तमगुणाः सततं वहन्ति॥" इति

समुन्नतिमभिकाङ्क्षन्तः पुरुषधौरेया न पुरुषकारमन्तरेण तावन्ति कार्य्याणि दैवेसन्निवेश्य स्वमुन्नतिमधिकर्त्तुं शक्नुवन्ति। ये तावदात्मनः सामर्थ्यमसीमप्रज्ञाबलमितरमपि च समुन्नतेरनुकूलं कार्य्यजातं नियतेरायत्तीभूतं मन्यमानास्तस्यै समर्प्य परमां प्रीतिं भजन्ते, तेषां सुदुर्लभा उन्नतिः, व्यर्थतामपि च भजते स्वजीवनप्रवाहः। अस्य तावल्लौकिकव्यापारेषु वर्त्तते क्षुद्रो महानपि च शतशो दृष्टान्तः, बाहुल्यभयेन सहृदयानां महामूल्यसमयापचयशङ्कया वा नातिविस्तरेऽस्मिन् प्रबन्धे परिहृतस्तेषामवतारः।

पुरावृत्तपर्य्यालोचनया समवलोक्यतेऽस्माभिर्यदुद्योगिनः पुरुषा एव समालम्बन्त उन्नतेः पराकाष्ठां जगतामपि लोचनलोभनीयां दृष्टिञ्च। तथा च पुराणकथासु ध्रुव प्रह्लादादीनां भगवत्सान्निध्यप्राप्तिः, निषादसूनोरेकलव्यस्य धनुर्व्वेदाध्ययनं प्रथमत एवास्माकं नयनपथे पतित्वा स्मारयति उद्योगिपुरुषाणां कियन्तमधिकारम्। एवमपि च नवीनेषु दृष्टान्तेषु तैमुरलङ्गो नाम कश्चिद् यवनस्तुर्कजातीयोऽत्र प्रकृष्टमन्यदुदाहरणम्।

स खलु तैमुरलङ्गः तातारप्रदेशे समरकन्दनगरान्तिके कस्यामपि पल्लीभूमौ जातः। ततोऽसौ बाल्ये वयसि विविधविद्याभ्यासेन सह सामरिकविद्याञ्चापि समधिगतः। ततो गच्छता कालेन समरकन्दनरपतेः सैन्याधिपत्यमासाद्य निरतिशयबलविक्रमेण रिपूनभिभूय राज्ञः इतरेषाञ्च प्रियदर्शनोऽभूत्। तेन च तस्य क्रमश एव राज्याधिकारतृषा प्रबला जाता। ततः समरकन्दभूपतेस्तदानीम् अन्येन राज्ञा सह विग्रहेण हीनबलं तं ज्ञात्वासौ आत्मनोऽधीनस्थानि सैन्यानि वशमानीय प्रभोः प्रतिकूलं युद्धमघोषयत्। तत उभयोराहवे राजपक्ष एव प्रभूतबलविक्रमेण तैमुरलङ्गं पराजित्य विजयश्रियमलभत। ततश्च विनिर्जितोऽपि तैमुरलङ्गः स्वकीयोत्साहादविच्युतो द्विगुणबलविक्रमेण भूयो भूपं पराभवितुमिच्छन् समरमवतारयत्। तस्मिन्नपि च पूर्व्ववदेवावनीपतेः पक्षो जयसम्पदमविन्दत। एवंक्रमेण सप्तकृत्वस्तुमुलसंग्रामं विदधन् प्रतिवारमेव पराजितो

विध्वस्तागण्यसैन्यचयजनितदुःखेन निर्विण्णः आत्महत्यार्थमेव कृतमतिः शाणितकर्त्तरिकया सह कामपि गिरिगुहां गत्वा प्राणान् त्यक्तुमुपचक्रमे। तस्मिन्नेव क्षणे कृत्स्नजीवनस्य क्षुद्राणि महान्त्यपि च कार्य्याणि मनसि समुदयन्ति। मुहूर्त्तादेव मरणात् प्रतिनिवर्त्त्य कर्त्तरिकाहस्तेन इतस्ततः सञ्चर्य्य पित्रोः स्नेहः, भार्य्यायाः प्रेम, बन्धुजनस्य सौहार्द्दम्, इष्टानां हितोपदेशः, अपत्यानां वात्सल्यभावः, भगिन्याः आदरः, अधीनस्थानां सेनानां व्यवहारः, ग्रामीणानां विश्वासः, इत्येतेषामपरस्य च कस्यचिद्भविष्यद्दर्शिनो महापुरुषस्य 'उत्तरकाले त्वमेव ससागराया धरित्र्याः पतिर्भविष्यसि' इति वाणीस्मरणेन च पूर्व्वपूर्व्वानुष्ठित-युद्धायासं मनसालोचयन् मरणात् क्षणं प्रतिनिवृत्त्य स्थितः। इत्यन्तरे च काचित् पिपीलिका तस्य दृष्टिविषयीभूतात् शिलातलात् शस्यमुखेन ऊर्द्ध्वस्थावासं प्रति गन्तुकामा कियद्दूरं गत्वा तस्मात् परिभ्रष्टा, क्रमेण सप्तकृत्वश्चेष्टमानापि विफल-मनोरथा संवृत्ता, ततश्च सा पूर्व्वपूर्व्वतोऽधिकमुद्यममास्थाय यावच्चलितुमारब्धा, तावदेव गन्तव्यस्थानमधिगतेति समीक्ष्य तस्य मनसि पुनरप्यरातिनिधनाकाङ्क्षाचप्रबलतया परमुप-याता।

अहो! क्षुद्रप्राणिनोऽध्यवसायदर्शनच्छलेन शिक्षयितुमेवात्र संप्रेषितः परमकारुणिकेन विश्वसृजा नूनमहम्, तद् भूयोऽष्टकृत्वः युद्धमभिनेष्यन् सपत्नकुलं समूलमुन्मूलयेयमिति विमृश्य मरणात् प्रतिनिवृत्त्य भूयोऽसीमबलचयेन समर-

कन्देश्वरं पराजित्य तस्य राज्ञः सिंहासनमधिकृत्य च तत्रैव स्वीयराजधानीमकल्पयदिति।

अहो! का नामास्मिन् दुर्घटताध्यवसायिनो दृढ़मनसो मानवस्य? प्रतिपदं प्रतिक्षणमेव समवधायन्तः पश्यामो यदघटनमपि संघटयति उद्योगो नाम। अतएव शोभनं भाषितं केनचिद्दैवप्रतिकूलवादिना कर्म्ममयं संसारं पश्यता महात्मना—

"उद्‌योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्धति कोऽत्र दोषः॥"

अथवा "उद्‌योगात् किं न सिध्यति" इति कृतं पल्लवितेन।

---

## "नानृतात् पातकं महत्"

अनृतम् असत्यं मिथ्याकथनमिति यावत्। इह किल वसुधायां यावन्ति सन्ति दुष्टकार्य्याणि, तेषु मिथ्याकथनरूपमयशस्यमवमानकरमतिघृणितञ्च कर्म्म न किञ्चिद् विद्यते मनुजानाम्। य एव मिथ्या भाषते स हि तुषराशिनिलग्नवह्निः, अङ्कुशाच्छन्नो मातङ्गः, निष्पतदशनिः, निष्प्रतिकारो द्रोहः, निर्निमित्तं वैरम् एवं किल स विद्वानपि न विशिष्यते, पण्डितोऽपि न परामृष्यते, वर्णश्रेष्ठोऽपि न मह्यते, कृति-

मानपि न बहु मन्यते, महाकुलप्रभवोऽपि न सम्मन्यते। तं गृहीतरूपान्तरमिव कृतान्तं मन्यन्ते, अपथ्यमिव गृह्णन्तोऽपि जिहासन्ति, शुनीमिव स्पृशन्तोऽपि स्वमशुचिमाकलयन्ति, भुजङ्गमिव विप्रकृष्टात् परिहरन्ति, तत्कथाकर्णाधिगतेनापि विकर्णायन्ते, दूरतः समवलोकनाच्च बिभ्यन्ति, न जातु तेन भाषितं सत्यमपि याथार्थ्येन परिगृह्णन्ति साधवः। धर्म्माधिकरणे साक्ष्यं दधतो भूतार्थं विवृण्वतोऽपि तस्य वाक्यं न परमार्थेनाददति धर्म्माधिकरणे विचारकाः; नितरामेतादृशं जुगुप्सार्हं जीवनं किं नु मुधैव वहनमसत्यवादिनो जनस्य? किमहो! जीवनावसाने प्रेतलोकेऽपि भीषणतो भीषणतरं शासनमस्य नरकुलपांशुलस्य?

सर्व्वजनविदितस्तावद् राजन्यकुलविनिःशेषमहाप्रलयसंघटनकरे भारतीयमहाहवे कुरुपाण्डवानां वृत्तान्तः। तस्मिन् द्रोणवधार्थं वासुदेवस्य निर्बन्धातिशयेन मुहुरनुरुध्यमानेन राज्ञा युधिष्ठिरेन 'अश्वत्थामा हतः' इत्युच्चैः 'गजः' इत्यनुच्चैर्भाषितेन द्रौणिर्हत इति बुद्धा द्रोणस्तत्शोकेन नाशाग्रवर्त्तिप्राणो रथलग्नो धृष्टद्युम्नेन हतः, इति यदवितथभाषणाद्दुष्कृतमुपजायते आजन्मसत्यव्रतानुसंशीलयतोऽजातशत्रोस्तेनैव दुष्कृतमूलेन महाप्रस्थानपथे शमनभवनदर्शनव्यपदेशेन पापाशयानां का शास्तिः, कियती वा यन्त्रणा, कियानेव भोगः, कियांश्चापि यमानुचराणां व्यवहारः, इत्याद्येकैकशो दर्शनक्रमेण चतुरशीतिरौरवादिनरकाणां दर्शनमजायत। नितरां मिथ्यावादिनो नेहामुत्र च

श्रेय: संघटते मनाक्। उक्तञ्च प्रज्ञादृशा निखिलजनाधिगत-मर्म्मज्ञेन केनचित्तत्त्वदर्शिना—

"नासत्यवादिन: सौख्यं न पुण्यं न यशो भुवि।
दृश्यते नापि कल्याणं कालकूटमिवाश्नत:॥
जिह्वैकैव सतामुभे फणवतां स्रष्टुश्चतस्रश्च ता:।
ता: सप्तैव विभावसोर्नियमिता: षट्कार्त्तिकेयस्य च॥
पौलस्त्यस्य दशाभवन् फणिपतेर्जिह्वासहस्रद्वयम।
जिह्वालक्षशतैककोटिनियमो नो दुर्जनानां मुखे॥" इति

वस्तुतो जगत्यत्र यद्यपि प्रज्ञावानेवावितथभाषी स्यात, तर्हि तस्य प्रज्ञाफलमत्यल्पेनापि काञ्जिकेन यथा क्षीरस्य वैकल्यं जायते, तथैवास्वाभाविकत्वमेव विदधातीति क: पुन-स्तत्र सन्देहसन्दोहावसर:? परिहासमिषेणापि मिथ्यारटनात् कस्मिन् कस्मिन्नपि समवजायते महानेवानिष्टपात:, तेनैव च जीवनस्यापि विनाश: सम्भव इत्याद्यवधारणार्थं गोपालशार्दूलक-कथाच्छलेन केनापि तत्त्वदर्शिना समवतारिता कापि विचित्रा कथा, तथाहि—

अस्ति कस्मिंश्चिदधिष्ठाने कोऽपि गोपबालक:। स प्रत्यहं गोचारणार्थं नगरोपकण्ठं काननमवनीमुपेत्य 'मम गोयूथ: शार्दूलेनाक्रान्त:, क कुत्र भो:! तूर्णं त्रायध्वं त्रायध्वमयमहो! मन्दभाग्य:' इत्युच्चैरेव रावैर्जनानाकार्य्य कौतुकं मन्वान: साहाय्यार्थमुपागतान् समीक्ष्य अट्टाट्ट जहास। इत्थमेव द्वित्राण्य-हान्यतिवाह्य स खलु वराक: जनान् मृषा प्रतार्य्य परमां प्रीति-

मविन्दत। ततो गच्छता कालेन दैवगत्या कस्मिन्नेवाहनि सत्यमेव तस्य गवां यूथः व्याघ्रेणाक्रान्तः। ततश्चासौ पूर्ववन्मुहुर्मुहुराकलितेनापि कः पुनरेकोऽपि तस्य वचसि विश्वासमास्थाय तत् साहाय्यार्थं न समुपस्थितः। तेन च साहाय्यपरिहीनतया स तावद्दुर्भाग्यो व्याघ्रेणागत्य व्यापादितः, गवामपि समजो विनष्टः खादितश्च। अतएव 'नानृतात् पातकं महत्' इति यदुच्यते केनचिद्दूरदर्शिना पदवाक्यप्रमाणपारावारीणेन महाजनेन तदतियथार्थमेवेत्यलमतिविस्तरेण।



## "काव्येषु माघः कविकालिदासः"

अविनश्वरेण परमकारुणिकेन ईश्वरेण अखण्डब्रह्माण्डमिदं रमणीयैर्वस्तुजातैः समलङ्कृतम्। विचित्रपत्रावलीचित्रितमनोहरारामनिकरः, मानसहरप्रसूनपरिशोभिता वल्ली, कुसुममधुलोलुपमधुकरगुञ्जनगुञ्जितकुञ्जनिचयः, सिंहशार्दूलादयो नृशंसश्वापदाः, शोभना मृगयूथाः, अगणितरत्नजातपरिशोभितरत्नाकरजातलभ्यसुवर्णाकरः निकरः; तालतमालनीला पर्व्वतमाला, नीलाम्बरसुशोभना धवलकादम्बिन्यः, कमनीया मणयः, लवनादिसप्तसमुद्राः, ऐरावतादिदिग्गजाः, महेन्द्रादिकुलपर्वताः, उष्णरश्मिरश्मिजालोष्णो ग्रीष्मः अजस्रधारापातशिक्तकलेवरा वर्षाः, नानापुष्पपरिशोभिता शरत्, शान्तप्रकृतिर्हेमन्तः, तुषा-

राषाढ़शरीरः शिशिरः, अशेषकुसुमवासवासितमलयवातप्रशान्तो वसन्तः, पूर्णशशधरपरिशोभिता पौर्णमासी, घोरान्धकारातिभीषणा अमारजनी, किमधिकम् अकृत्रिमसुन्दराणि सर्वाणि मनोहराणि वस्तुजातानि यथायथं नियोजितानि, परन्तु कृत्रिमचित्रपटघटादिना नानाविधविज्ञाननिवहेन च अधिकतरं परिशोभयितुं श्वेतकृष्णरक्ताङ्गा बहवो मानववर्णा प्रयुज्यन्ते सन्ततम्। तेषां केचन वर्म्मचर्म्मादिरचने, केचन घटपटादिप्रकटनविधौ, केऽपि विचित्रविज्ञाने, केऽपि शृङ्गारादिनानारसपीयूषश्राविकाव्यनिचयविरचने मनोनिवेशयन्ति। एतेषां मध्ये सुललितकाव्यमेव अधिकतरं रमणीयम् मनोहारि च काव्यरसरसिकानाम्। नैतत् केवलं श्रुतिरमणीयं दृष्टिरमणीयञ्च, किन्तु समाजशिक्षाविधौ गुरुरिव वर्त्तमानं सत्काव्यं चतुर्वर्गफलसिद्धिदमपि यदुक्तं—

"चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।

काव्यादेव" इति। अपि च—

"काव्यालापाश्च ये केचित् गीतकान्यखिलानि च।

शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः।" इति

एवञ्च 'काव्यालापांश्च वर्जयेत्' इति यदुक्तं तत् तु श्लाघ्यार्णवादि असत्काव्यविषयपरम्। आदिकविर्वाल्मीकिरखिलशास्त्रसागरं समालोड़यन् पवित्ररामचरित्रसम्बलितं रामायणं नाम महाकाव्यमेकं विरचय्य धर्म्मामृतरसस्रोतसा प्रसिक्तमकार्षीत् जगत्त्रयम्। परन्तु रामस्य राजनीतिं गार्हस्थ्यनीतिं कर्त्त-

व्यपरायणताश्च यथायथं निवेशयामास। एतेनायं ग्रन्थः सर्वेषां काव्यानामादर्शभूतः।

ततः परं द्वापरावसानसमये कृष्णद्वैपायणः कुरुपाण्डव-चरित्रमाकलयन् सर्वरत्नाधारं महाभारतं प्रणिनाय। ततःपरं असीमभावालङ्काररसविलासः कालिदासः, अशेषभावविभव-सम्भो भवभूतिः, प्रभूतप्रतिभो भारविः, निखिलपण्डितमण्डलो ह्लर्षविलासप्रकर्षवान् श्रीहर्षः, कविशङ्कविलङ्घनो माघः, काव्य-सागरतरङ्गे भासमानो भासः, साहित्यरससमुद्रः शूद्रकः, एवमन्ये च कवयः काव्यानि विरचय्य अमरा इव वर्त्तन्ते।

न खलु सर्वेषां सर्वस्मिन् विषये समा प्रतिभा प्रति-भाति। को वाऽलङ्कारेषु, को वार्थविस्तारचातुर्य्येषु, को वा सुललितशब्दबन्धेषु प्रदर्शयति पाण्डित्यं, तदेवोक्तम्—

"उपमा कालिदासस्य भारवेरर्थगौरवम्।
नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः॥" इति

अत्र प्रथमचरणत्रये नास्ति कस्यापि आपत्तिर्लेशतोऽपि, चतुर्थचरणमस्माभिर्विचार्य्य स्वीक्रियते नाम, 'माघे सन्ति त्रयो गुणा' इति, किन्तु एतदेवात्र प्रष्टव्यं, यत् रघुवंश-किरातार्जुनीय-नैषधचरितेषु किं निर्दिष्टात् इतरे गुणा लेशतोऽपि न सन्ति? उत अप्राधान्येन वर्त्तन्ते? मन्ये च यत्र यो गुणः प्रधान्येन वर्त्तन्ते, तत्र तस्यैव निर्देशः श्लोककृतोऽभिप्रायः, तर्हि काव्ये-स्मिन् त्रयो गुणाः किं प्राधान्येन स्वीक्रियन्ते? नैतत् सम्भवति, अस्मिन् शिशुपालवधे शास्त्रसागरपारदर्शिणा मल्लिनाथेनोक्तं

यत् 'वीरप्रधानो रसः' इति वीररसे ओजोगुणस्यैवावकाशः निखिलालङ्कारशास्त्रसम्मतः। तथा च साहित्यदर्पणे—

"ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते।
वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु॥" इति

ओजोगुणे च गौडीरीतेः प्रचारः स्वतएव, तथात्वे सति ग्रन्थेऽस्मिन् प्राधान्येन पदलालित्यकथनम् उन्मत्तप्रलापवदुपेक्षणीयम्। ये नाम माधुर्य्यादयो गुणा राजन्ते, ते तु शृङ्गाराद्यङ्गरसानुरोधेन वर्णिता अङ्गगुणा न त्वङ्गिनः। यदि नाम अङ्गगुणानुरोधेणैव त्रयोगुणा इत्युक्तं यदपि न समीचीनतया प्रतिभाति, यतः रघुवंशादिषु कालिदासग्रन्थेषु पदलालित्यादिगुणा वर्त्तन्त एव, तेऽपि ग्रन्था बहुगुणसमलङ्कृताः कथं नोच्यन्ते? अतएव शिशुपालवधं प्राधान्येन गुणत्रयसमन्वितमिति न वक्तुं समीहामहे वयम्; माघपक्षपातिनां नितान्तभ्रान्तिसन्तानसमन्वितानां वचनमेतत्; त एव समर्थयन्तु एतेनास्माकं किमपि नायाति याति वा। केचित्तु पदलालित्यलोलुपा नैषधचरितस्य प्राधान्यं समर्थका एवमाहुः यत्—

"भारती भारवेर्भाति यावन्माघस्य नोदयः।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥" इति

नैतत् कथमपि स्वीकुर्म्मो वयम, केवलं शब्दसौष्ठवातिशयोक्तिप्रियाः सततं स्तुवन्तु किं नामास्माकम्। वयन्तु मन्यामहे यत् तादृशपदलालित्यं विनापि शिशुपालवधं अनेकेभ्यः काव्येभ्यो वरम्। अस्य भावगाम्भीर्य्यं रचनाचातुर्य्यम् अलङ्कार-

प्राचुर्य्यं रसमाधुर्य्यञ्च प्राचुर्य्येण वर्त्तते। अपि च केनचित् समीक्ष्यकारिणा प्रोक्तं यत्—

"नवसर्गगते माघे नवशब्दो न विद्यते ॥" इति

वस्तुत एव काव्येऽस्मिन् अद्वितीयशब्दवन्दो बध्नाति सहृदयवतां हृदयानि, नायं कविः केवलं साहित्यशास्त्रपारगामी, संगीतशास्त्रेषु चास्य समधिकव्युत्पत्तिं समवलोकयामः तथा च—

"रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः।
स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥"

एवमपि च—

"सर्वकार्य्यशरीरेषु मुक्ताङ्गस्कन्दपञ्चकम्।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥"

इत्यनेन कवेर्बौद्धशास्त्रसमालोड़नपाटवं प्रतीयते।

"विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम्।
फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनि ॥"

इत्यनेन च सांख्यशास्त्राभिज्ञता परिस्फुरति, परन्तु आयुर्व्वेदे चापि कवेः समधिकव्युत्पत्तिमधिगच्छामः। यथोक्तं तेन—

"स्थाने समवतां शक्त्या व्यायामे वृद्धिरङ्गिनाम्।
अयथा बलमारम्भो निदानं क्षयसम्पदः ॥"

इत्यादि बहव एव श्लोका अस्य नानाशास्त्रे पाण्डित्यं सूचयन्ति, अतएव सर्व्वशास्त्रसमन्वितं काव्यमिदं सर्व्वाङ्गसुन्दरम्। पुनः पुनरध्ययनेनापि चास्य अभिनवमधुरता न ह्रासमुपैति।

काव्याम्बुधिसमालोड़नगृहीतकाव्यामृतरसेन केनचिदुच्यते यत् 'माघे मेघे गतं वयः' वस्तुतएव माघाध्यायिनो मेघाध्यायिनश्च अशेषरससागरं माघं मेघं वा परित्यज्य अपरकाव्याध्ययन-लालसा न जायते, मेघदूतं कालिदासस्य स्वानुभूतिसम्भूतं खण्डकाव्यम्। तदादर्शं कृत्वा अन्ये कवयः पदाङ्कदूतं वात-दूतम् इत्यादि विरचयामासुः। कालिदासलेखनीप्रसूतं मेघदूतं काव्येषु तिलकम्। विरहिणां हृदयम्, विज्ञानस्याकरः, भाषायाः कल्पवृक्षः, मानचित्रस्यादर्शः, अलङ्कारस्य मूलधातुः, रसस्य जलधिः, कवीनामाश्रयः, अलं नाम सर्व्वजनपरिचित-स्यास्य उत्कर्षसाधकप्रमाणसंग्रहेण। कालिदासो न केवलं मेघदूतं विरचय्य प्रतिनिवृत्तः, परन्तु रघुवंशकुमारसम्भवे महाकाव्ये, अभिज्ञानशकुन्तल-मालविकाग्निमित्रादिनाटकनिवहं, आदि-रसाकरं शृङ्गारतिलकं, श्रुतिमात्रबोध्यं श्रुतबोधं नाम छन्दः-शास्त्रञ्च विरचयामास। सर्व्वस्मिन्नेव काव्ये अस्य रचनाचातुरी रचयति रतिमतितरां विद्वज्जनानाम्। यथोक्तमभिज्ञान-शकुन्तले—

"पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसीक्तेषु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
आदौ वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्॥" इति

अपि नामैषां श्लोकानामुपमा वर्त्तते किं न वा तन्न जानी-महे, नितरां समीक्ष्य केनचिदुक्तम्—

"कवयः कालिदासाद्याः कवयो वयमप्यमी।
पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम्॥" इति

कालिदास इव कालिदासः शयने स्वपने पथि जागरणे प्रान्तरे कान्तारे अन्तरीक्षे क्रीड़ायां व्यायामे भोजने पाने ध्याने किमधिकं सर्वत्र सर्वदा सर्वस्मिन्नेव विषये कवीनां मनसि अनिशं चकासते। उक्तञ्च—

"पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥"इति

एतदप्यस्माकं विस्मयसमुत्पादकं नाम, यत् कवेरिदं काव्यं, काव्यमार्गेणैव कविः परिचीयते। अतएव न कथमप्येतत् समीचीनतया प्रतिभाति, तत् किमेतत् असमीच्यकारि कपोल-कल्पितं, किमु मृषा जल्पितम्, उतास्य गूढ़ार्थोऽपि कश्चिद्विरा-जते खलु? अत्रास्माकं मानसलतिका विकाशयति नामैवं सिद्धान्तकुसुमं, न जानीमहे सदैवैतत् विद्वज्जनप्रपूजनविधौ विधिनिबद्धं भवेन्न वा? अपि च माघस्य चिन्ताशक्तिप्रसूतमेतत् काव्यमिति अनायासेनैवावगन्तुमर्हन्ति धीराः, एतेन काव्यस्य उत्कर्षः समजनि न कवेः, 'कविकालिदासः' इत्यस्य न कश्चित् विकत्थनावसरः, कालिदासः निजप्रतिभाबलेनैव स्वग्रन्थे भावादिकं निवेशयामास। सरस्वती तु तस्यानुवर्त्तिनी, तद्ग्रन्थ-विरचनविधौ च एवमेवानुमिनुमो, यत् कविरयम् अलङ्कारादिकं नानुससार, अलङ्कारादय एव तमनुसरन्ति स्म। काव्यलिखन

काले कालिदासस्त्विन्तां नाश्रियाय ; तस्य स्वभावलेखनमुखे सुललितपदावली स्वतएव समागताभीत्। उक्तञ्च—

"कविता वनिता चैव सरसा स्वयमागता।
बलादाकृष्यमाणा चेत् सरसा विरसायते ॥" इति

अस्य कवेर्मेघदूतस्य रचना नूतनभावसम्पदा सम्पादितासीत्। तदेकेनैव काव्येन स 'कविकालिदासः' इति यथार्थत एव साधु प्रयोगं वक्तुमुपयुज्यते, कालिदासविरचितवचनपीयूषधाराप्रसिक्त-हृदयः कश्चिदेवं प्राह—

"कालिदासकविता नवं वयः
माहिषं दधि सशर्करं पयः।
एनमांसमबला च कोमला
सम्भवन्तु मम जन्मजन्मनि ॥" इति

अपि च काव्यशास्त्रं तावज्जगति समाजशिक्षार्थं परिचरति, सर्वे खलु समाजचराः शास्त्रविज्ञानतत्परा न वर्त्तन्ते। तेषामुपदेशविषये सरलभाषोद्भाभितमनुशासनमेवोपयोगितया किं पुनस्तत्र तर्कः ? यो हि सर्वमनोरमेण वचनेन सर्वानेव मनुजनिकरान् विनोदयितुमर्हति, स एव प्रधानकविपदमारोढुं शक्नुयात्। माघः खलु शिशुपालवधे दीर्घचिन्ताप्रसूतातिकठोरपदानि सन्निवेश्य काव्यस्योत्कर्षमसाधयत्, किन्तु स यदि सामाजिकान् स्वयमेव अध्यापयति, तदेव सामाजिकास्तत्काव्यार्थमवगन्तुं प्रभवन्ति, एवम्विधकार्य्यस्यासम्भवतया तेन काव्येन तादृक् समाजहितं न विहितम्। ये तावत् आभिधानिका

व्याकरणशास्त्रपारगामिनस्तदर्थपरिग्रहे तएव प्रभवन्ति। अतएव शिशुपालवधस्योत्कर्षं प्रत्याययन्ति। यो हि साधारणजनानां मनसि स्वकीयरचनामाधुर्य्यप्रकाशयितुमसमर्थस्तस्य कवेः किं नाम माहात्म्यं? कालिदासस्य कविता श्रुतिगोचरमात्रेणैव सर्वेषां हृदयविनोदिनी समवर्त्तत। अतएवोक्तं "काव्येषु माघः कविकालिदासः" इति यत् तत् तथ्यमेव चकास्ति। अलमति विस्तरेण, नाभिकाङ्क्षामो वयं मण्डूककण्ठनिर्घोषसदृशकठोर-शब्दप्रचारेणात्रभवतः सामाजिकान् व्यथयितुमिति शम्।

---

## "कः परः प्रियवादिनाम्"

इह तु नानासुखोपचीयमाने ज्ञानविज्ञानसन्ताने संसारे कस्तावदेवम्भूतोऽस्ति पुण्यप्रतिमः, यः सर्वेषां चेतः समाकृष्टु-मानन्दयितुमुत्साहितुञ्च प्रभवति, युगपत्तत्यमूल्येनैत्यभिज्ञानार्थं वक्तमुपयुज्यते यः खलु दिष्ट्या सकलानन्दसन्दोहनिःसन्दिवचना-मृतमन्दीकृताखिलतापकलापः सन्ततं प्रफुल्लनयनाननमानसः प्रकटीकृतप्रभूतकार्य्यपर्य्यायवहः प्रेमविह्वलदेहो लीलाललित-कोमलसकलकर्म्मणा लोकशोकसंहारो आसकलप्रीतिभाजन-मनन्तशक्तिमप्रियवादीति।

अपीदमेव हि चिरन्तनं सत्यं यत्तावन्नैव हि सर्वं सर्वस्य प्रियं प्रेमास्पदं स्नेहस्थलं वा साकल्येन भवितुमर्हति। यच्चैकस्य

प्रियं तदपरस्याप्रियं कथञ्चिद्वा प्रियतममिति। प्रियत्वाप्रियत्वयोर्न तावत् साधारणीरीतिरेकरूपा परिलक्ष्यते। तच्च प्रतिक्षणमेव विविधया दृशा चित्तवृत्तिमाकृष्योन्नयति, निर्नमयति वा मनुजानत्र जगति। प्रियञ्च तदेव तस्य यद् यस्यान्तःकरणे झटिति मन्दाकिनीनीरधाराप्लुतकूलतलमिव समुपप्लाव्य प्रमोदपरम्परया प्रीतिपयोधौ निमज्जयति, परं विशुष्कयति च प्रबलज्वलनज्वालासम्पृक्तसातकुम्भमिव शासनशासितवाचातिमात्रम्। एवमेवानन्तयाऽसीमशक्तिमत्यामृतया भाषया यः सततमर्थयुक्तप्रियमेव भाषितुमागृहीतव्रततो मानवको जातोऽत्र जगति। हन्त! तस्यावश्यमेकोऽपि परो नावशिष्यते; अवान्धवा अपि वान्धवायन्ते, अमित्रा अपि मित्रायन्ते, अवश्याश्च वशतां यान्तीति सनातनो निसर्गनियमः स्यात्।

सैव हि प्रियवाक् साधारणतोऽर्थहीना अर्थयुक्तेति द्विधा विभक्तुं शक्यते। तदादिमार्थनिर्मुक्ता तु केवलस्फोटात्मिका शुक-पिक-कारण्डादि-विहङ्गमानां ध्वनिः। अपरा नानार्थालङ्कारानुप्राशादिसद्भावयुक्ता मानुषाणां भाषा। यद्यपि चाज्ञानिनां शुकपिकादीनामर्थहीनापि ध्वनिरूपा वाक् सपदि लोकचेतांसि समधिकरोति, रञ्जयति सुखयति च द्राक्, तर्हि ज्ञानविज्ञानानुशीलयतामुच्चैर्ज्ञानवतां प्रियभाषणानुशीलनतत्पराणां मनुजानां प्रस्फुटार्थप्रकटनपरमधुरपदयोजनकदम्बकलितललितधुरीणा सकलगुणविकाशनप्रकर्षा लोकभाषा पर्याप्तं सर्वथा चेतश्चमत्कुर्वतीति किमेवाश्चर्यम्। एवमपि हि विशुद्धचित्तवतां

शान्तिसुखापचितानामपरिमितदुर्भावनाभिमतानां दूरीकृत-सकलकुलनयप्रबन्धानां कोपोपरतान्धानां प्रायोन्मत्तवतामपि प्राणभृतां विदधाति प्रिया वाक् राध-मध्याह्न-मध्यगत-चण्ड-मार्त्तण्डातप-तापिततनुनामनूनप्रच्छायशीतलतलं न्यग्रोधपादप-मूलमिव सपदि प्रत्यक्षं शान्तिसौख्यम्। परं कठोरभावनयो परीकृतचित्तचेतसां दुर्मनायमानानामपि तादृशो वाणी शुचे-र्निरन्तरा नीरधारेव बाहुल्येनाभिवर्षाद्रीयते, कुरुते च समु-च्वैरातिमात्रम्॥ एवं समपनयति विषादं, दूरं गमयति क्लमं, व्यपनयति च खेदम्। किञ्च शमयति परस्परविद्वेष्टॄणामपि द्वेषम्, जनयत्यसौहृद्येऽपि हृद्यम्।

एवं नामावलोक्यते लावण्यललितायितं रूपं, दृष्टिसमा-कृष्टिं यौवनलक्ष्मीं, कोटिपरिमितं वसुमपि च प्राग् नावलोक-यन्ति सुसूक्ष्मदृष्टिमन्तो विद्वांसः। ते हि यत्नतः प्रथममाचार-व्यवहारौ वार्त्तालापक्रमेणैवान्यत् सर्व्वमभिज्ञातुमुत्सहन्ते, नितरामभ्युदयकाङ्क्षिणां येषां केषामपि च वचः सर्व्वथा शोभनं प्रियञ्च कर्त्तुमुचितम्। अश्लीलोऽप्रियश्चाप्यालापो यं कमपि व्यथयति, तेन स्वात्माधः पतति, तस्माच्च दुरितमापादयति स एव सम्यक्। अतो विस्मृत्यापि कदा तन्न व्यवहरणीयं सुधि-यामिति किं तत्र तर्कावसरः। यतो हि श्रूयते तच्चातिशयां मर्म्मपीड़ामातनोति स्वभावसुपेलवे चित्तप्रदेशे दुरारोग्यव्रण-मिवामरणमत्र जगति। यथोक्तञ्चार्य्यमिश्रैः—

"छिन्नं रोहति खड़्गेन शरैर्व्विद्धं रोहति।

वचोदुरुक्तं बीभत्सं वाक्क्षतं न प्ररोहति ॥" इति

परमेवमपि चेदकैतवमपि वचोऽप्रियं स्यात्तर्हि नोच्चरणीयं पुंसेति नीतिशास्त्रप्रवर्त्तयद्भिरुद्गीतम्। यथा—

"सत्यं ब्रुयात् प्रियं ब्रुयान्माब्रुयात् सत्यमप्रियम्।"

किञ्च—

"सत्यमपि तन्न वाच्यं यदुक्तमसुखावहम्।" इति

यत् सत्यं सहस्राश्वमेधापेक्षयापि गुरुभारमुक्तं महर्षिणा रामायणे यथा—

"अश्वमेधं सहस्रन्तु सत्यञ्च तुलया धृतम्।

तुलयित्वा तु पश्यामि सत्यमेवातिरिच्यते ॥" इति

एतादृशमपि सत्यमसुखावहमप्रियमपि चेत् कदा नोच्चारणीयं केषामिति सकललोकाचारसंविद्भिर्नयज्ञैः शासनशतैर्वाक्यैरभिमतम्। नितरां परानुकृष्टिमन्त्रोपमं मधुरं प्रियमेव वचः स्वस्वरसनासने शश्वदेव स्थाप्यमित्युच्यते नयकुशलिभिः परमविधेयैः पुरुषैः, यथा—

"वाङ्माधुर्य्यान्नान्यदस्ति प्रियत्वं
वाक्पारुष्यान्नोपकारोऽपि नेष्टः।
किं तद्द्रव्यं कोकिलेनोपनीतं
को वा लोके गर्द्दभस्यापराधः ॥"

अन्यच्च—

कामान् दुग्धे विप्रकर्षत्यलक्ष्मीं
कीर्त्तिं सूते दुष्कृतं या हिनस्ति।

तां त्वाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः ॥ इति

अवगतं तावदनेकैर्यत् गभीरवनान्तचारिणो विहङ्गमोत्तमाः पिक शुक प्रभृतयोऽशेषविभूतिमद्भिर्धनिकैः सुस्वरत्वादेव सुरपुरप्रासादोपमं स्वभवनमानीय रम्यं भक्ष्यं सुपेयञ्च यथेच्छमर्पयित्वा सातिशयमाद्रियन्ते। एवमपि हि रम्यहावभावोल्लसितैः सुरपुरसुन्दरीरपि विडम्बयन्तीभिरनेकाभिर्वराङ्गनाभिर्नवपल्लवपेलवेनालूनकोकनदच्छदप्रतिमाग्रहस्तेन भ्रमरकृष्णपक्षपुट पतत्रिणं प्रमार्ज्य रसालं भोजनं भोज्यमानाः, किञ्चानेकशो विलासिनीभिः पण्ययुवतीभिर्गाढ़तिमिरवर्णप्रतिमकाकावयवाः कलकण्ठाः त एव विहगाः कण्ठरवार्थमेव सातिशयमभिनन्द्यन्ते। एवं तुल्यवर्णत्विषौ पिककाकौ यदा स्निग्धवनस्पतिलतान्तरितौ भूत्वा क्षुद्रफलानि भक्षितुमुपक्रमेते तदा कण्ठरवमन्तरा तयोर्निपुणेनापि कथं कथमपि शक्यते विभावयितुमेकतरोर्भेदः। परं कण्ठरवोच्चारणमात्रादेव कोकिलं सस्पृहमवलोक्योत्कर्णं तद्ध्वनिः श्रूयते धीरैर्मूढैरपि चात्र जगति। काकस्तु सातिशयकर्कशस्वरतया चञ्चुव्यादानमात्रादेव विविधोपायैस्ताड्यत इति प्रकृतेश्चिरन्तनी निरर्गला पद्धतिः। परं दृश्यते तावदनेकत्र बहुदोषदुष्टोऽपि केवलं मधुरवचनप्रयोगादेव जनादरं प्रतिष्ठाञ्च लभते, प्राप्नोति च साधारणानां वैशिष्ट्यं सहानुभूतिम् इत्यभीक्ष्य कोकिलदृष्टान्तेन कविनोच्यते—

पिकः कृष्णो नित्यं परमतृषया पश्यति दृशा
परापत्यद्वेषो स्वसुतमपि नोपालयति च ।
तथाप्येषोऽमीषां सकलजगतां वल्लभतमो-
न दोषा गृह्यन्ते मधुरवचसां केनचिदपि ॥ इति

पुराणे च श्रूयते—पुरा जगत्येकार्णवे हि योगनिद्रोत्थितेन भगवता वासुदेवेन सार्द्धं दुर्द्धर्षौ मधुकैटभौ पञ्चदशसहस्रवर्षं युद्धं कृत्वा भगवतो मधुरया गिरा मुग्धितौ वरच्छलेन स्व स्वमरणं स्वीकृत्य तस्य वध्योपगतौ। एवं सुराणां श्रुत्यायार्थपूर्णातिविभव-विस्तरया वाचा दनुजवृन्दनाशायेरम्बदार्थं महर्षिर्दधिचिरात्मदेहं देवेभ्यः समुपहारीचकार। इत्थमित्थमेव बहुशः कार्य्योप-पत्तिः समुपजायते मधुरतो वचनादिति कस्तत्र सन्देहावसरः ? प्रियभाषणे नूनमपूर्व्वास्ति समाकर्षणी शक्तिः, सा हि जातु विद्वेषयतामपि द्वेषमपाकर्त्तुं शक्नोति ।

एवं नाम स्फुटमेवावलोक्यते यत् कस्यचिच्चेतसि गुरुव्य-थोत्पादानानन्तरमेव चिरेण स्वल्पेन कालेन वा तादृशी ततो-ऽधिका वासह्या मनोवेदना विचिकित्सा किमु क्षोभमस्वच्छान्ध्यं वा स्वचित्तभूमिमधिकृत्यातलकलुषमहापूरके चिरं निमज्जयति-तराम्। तथा तद्विपरीतया सुकथया कस्यापि प्रसादोपपादिते स्वचित्तमपि तद्विमलानन्दरसप्रवाहधारा समुपगम्य स्वर्गीया-नन्दसुखमनिर्व्वचनीयाञ्च तृप्तिं विदधाति। परं स खलु सन्तुष्टमनाः सततमभिवर्षति शुभाशिषं, जनगोष्ठीषु च कीर्त्त-यति यशः, सकलहितञ्चेहते, इत्यादि प्रियभाषणे इहामुत्र

लाभमतमभोच्य प्रियवादिनां न कोऽपि परः इति सर्व्वेषामनु-भवसिद्धमतएव याथार्थ्यं साधूनाञ्च चारित्र्यादिलोकाचारविशेष-ज्ञेन प्रेक्षावता "कः परः प्रियवादिनाम्" इति सुधाधिक-वाक्येन ।

---

## सञ्चयी नावसीदति—

सञ्चयस्तावत् प्रयोजनीयद्रव्याणामुतोपार्ज्जितानामर्थानाञ्च कियदंशरक्षणं नाम प्रत्यपदिशन्ति शास्त्रसिद्धान्तकारिणः परम-विधेया आर्य्यमिश्राः । नीतिरप्यास्ते—"आपदर्थे धनं रक्षेत्" इति । वस्तुतः संसारेऽस्मिन् सर्व्वेषामेव गृहमेधीनामवश्यमेव सञ्चयः कर्त्तव्यः । नितरां ऋते च तत् सञ्चयं नहि तावदे-केषामपि रोग-शोक-परितापपूर्णे संसारे कथं कथमपि जीवन-यात्रा सुखेन प्रतिपद्यते । यस्य यादृश एव अर्थागमो भवति स हि तादृशव्ययेन यदि निःश्वसिति तर्हि भाविनि वार्द्धक्ये कायक्लेशेनाप्युपार्ज्जनासम्भवे बाढ़मेव नानाज्वालामयीं दशां समेत्य प्रतिक्षणं दुर्दमनीयमर्म्मवेदनया दंदह्यत इति नास्ति तत्र सन्देहोऽल्पोऽपि, एवमुपार्जनकाले च यदि हेलया सञ्चयं न कुर्य्यात् तर्हि दुर्भिक्षे वा तादृशे प्राणसंशयकरे समये समा-याते तस्याविमृश्यकारिणो वराकस्य शतशो विपदसंकुलायाः संसार-यात्रायाः कथं निष्पत्तिः स्यात् ? परं तदा प्राणप्रतिम-पुत्र-पौत्र-

भार्य्यादिकुटुम्बानां तृष्णाविशुष्ककण्ठं मर्मन्तुदां सुदारुणां जठरज्वालाञ्च समीक्ष्य जीवतोऽपि च मृतवदेव तस्य सुनिश्चितं वर्त्तितव्यम्।

एवं नाम देहिनां देह एव रोगमात्राणामावासभूमिर्विपत्तीनां तीर्थशीला, कष्टानामाकरस्थलमिति समामनन्ति तत्त्वदर्शिनो महर्षिप्रमुखाः यथा—"शरीरं व्याधिमन्दिरम्" इति। अत एव यदि दैवगत्या बलवता व्याधिनाक्रम्यमाणः दीर्घदिनानि तल्पतलमधिशयानो रात्रिन्दिवं केवलं शय्यामेवाध्यास्ते हर्हि सञ्चयहीनं तमेव वराकं क एव सुहृद्‌द्रष्टुं समीपमागत्य सुव्यवस्थया करुणावारिधारामभिवर्ष्य स्ववसुव्ययेन निरामयं कर्त्तुमभिलषति, क एव वा भिषक् रोगाभिभूतं तमर्थमन्तरा निरामयं कर्त्तुमुत्सहते? परं तमेव निःस्वं कुटुम्बाः कुटुम्बिन्योऽन्तरङ्गबान्धवा वा न्यक्कृत्यावजानीयुः, न हि परिजनाश्चापि सुचिरं दिनं तस्य प्रायश एव वशतापन्नाः स्युः, नितरां यथाकालोपचारपथ्यादिपरिचर्य्याभावाज्जीवन्नपि मृतवदास्थायाचिरेण परेतपुरातिथिर्भवन्नाकालिकमहाप्रस्थानजनितात्मनाशकलुषपङ्के निमज्जन्नन्तकालं दुःखं लभेत, स खलु सञ्चयपराङ्मुखो मन्दभाग्यः।

अपि हि सञ्चयमन्तरेण नहि तावत् काम्ययागादिकर्म्मानुष्ठानं व्रताचरणं तीर्थदर्शनमन्यत् किमपि वा अर्थव्ययसाध्यं पारलौकिकक्षेमास्पदं कार्य्यं सम्भवतितराम् जनानाम्। परं व्याहते सर्व्वेन्द्रियार्थे वार्द्धक्ये समुपागते प्रतिपदमेव स्खलनं

भवति तेषाम्। सत्यं तत्र सञ्चयिनमर्थवन्तमर्थलोभेन निःसम्पर्कितोऽपि पुत्राधिकयत्नेन सेवते। परमर्थहीनं तमेवात्मपरिजनोऽपि समवज्ञायते, उक्तञ्च श्रीमदाचार्य्यपादैः—

"यावद्वित्तोपार्ज्जनशक्तस्तावन्निजपरिजनानुरक्तः।
तदनु च जरया जर्जरदेहे वार्त्तां कोऽपि न पृच्छति गेहे॥" इति

वस्तुतः अर्थमर्जयितुमसमर्थस्य सञ्चयपराङ्मुखस्य तपन इव प्रदीप्तो वंशः, वृहस्पतिरिव धीः, स्कन्द इव रूप शक्ति-सामर्थ्यमेवमन्यदपि सर्व्वमेव विफलतया प्रतिभाति, नितरां गृहस्थमात्राणामेव विलासादिव्ययमपाकृत्य भोजनाच्छादनेष्वपि किञ्चित् क्लेशं स्वीकृत्यावस्थानुरूपं सञ्चयमवश्यमेव करणीयम्। हन्त! तत्र कीदृगेव तत्त्वपूर्णमभाणि वाक्यं श्रीमद् विष्णुशर्म्मनाम्ना कविपुङ्गवेन—

"शनैः शनैश्च भोक्तव्यं स्वीयं वित्तमपार्ज्जितम्।
रसायनमिव प्राज्ञैर्हेलया न कदाचन॥" इति

नैतदप्रत्यक्षगोचरं केषां यत् सञ्चयशीलं बन्धुबान्धवसम्पर्कहीनमपि पथिकं सादरमेवाभ्यर्थयन्ति लोकाः, किन्तु सञ्चयहीनं भार्य्यापुत्रादयोऽपि यथोचितं प्रायशो नाद्रियन्ते, तस्य समुचितप्रयत्नेऽपि मन्दादराः, कार्य्यमात्रेषु छलमवतार्य्य वादप्रतिवादपरायणाः एव भवन्ति। अतः सर्व्वेषामेव समुचितेषु ग्रासाच्छादनादिषु दैन्यमनुभूय यथासम्भवं सञ्चयनमवश्यं कर्त्तव्यम्। एवं हि पर्य्यवलोक्यते तावन्निकृष्टप्राणिमध्येऽपि सञ्चयप्रवृत्तिः, मधुकरो भविष्यदर्थमेव पुष्पात् पुष्पान्तरं परि-

भ्रम्य कणं कणमिव मधु संगृह्य मधुक्रमं विचरति। पीपि-लिकादयो नगण्याः कीटाः भाविदिनसुखप्रतिपत्तये अहोरात्र-माहार्थ्यमन्विष्य निजविलदुर्गे सञ्चित्योपभुञ्जते। भ्रमरकीट-पतङ्गाद्यामसृविर्मिते गृहे भोज्यार्थं विजातीयं कीटमानीय स्थापयन्ति। पतत्रिनिकरेषु वायसाः खोदिनार्थं भक्ष्यं नयने निमिल्य यत्र तत्र गूहन्ति।

एवं नाम सतामाभाणकमस्ति—"तृणादपि भवेत् कार्य्यं यत्नेन रक्षितं यदि"। इति वस्तुतः सांसारिकाणां तुच्छवस्तुमात्र-मपि नोपेक्षणीयं तच्च समयान्तरेण प्रयोजनीयं भवेत्। यतः एकैकेनापि सञ्चीयमानेन तृणेन काले प्रभूतमुपेत्य महदुपका-रास्पदत्वमाधीयते। अतः कणमात्रमपि वस्तु नावज्ञातव्यं नोपेक्ष्यं न परिहातव्यञ्च क्वचिदपि गृहस्थानाम्।

नूनमवगन्तव्यं तावत् प्रतिक्षणं भग्नसूर्पस्यास्ति भस्मनिक्षे-पार्थं प्रयोजनम्। एवं जीर्णवस्त्राञ्चलस्य द्रव्यशोधने, सम्मार्जने, कन्थादिनित्यप्रयोजनीयद्रव्यनिर्म्माणे च व्यवहारः स्यात्। अत-एव यत् किमपि वस्तुजातं यत्नेन रक्षणीयञ्चेत् कालान्तरे सातिशयामुपकृतिं साधयेत्। प्रतिदिनं संगृहीतेनापि लोष्ट्र-खण्डेन गभीरं कूपं प्रपूरयितुं शक्यते। इत्याद्यसंख्येयाः सन्ति दृष्टान्ताः। ते हि निपुणपर्य्यवीक्षणेन वीक्ष्यन्ते चेत् तेषां कार्य्य-कारित्वमपि सर्व्वत्रावलोकयितुं शक्यते निपुणैः। कार्षवराटक-श्चैकोऽपि नहि नहि कदा गृहस्थानां विफलरक्षणो भवति।

वाढ़मेव जगत्यस्मिन् सञ्चयपरो न तावत् कथं कथमपि

सांसारिकेषु दुःखमुपभुञ्ज्य नितान्तदुर्गतदशायामुपस्थितः स्यात्। एवञ्च तस्य भवलीलाललितनिबन्धे तु न पुनरभावो नाम व्यन्तरेण मुखं विकृत्य प्रकटविकटदशनं वहिष्कृत्योप हस्यति, स खलु सञ्चयपरवशो जनो लवमात्रमप्यत्र जगति।

एवमपि दृश्यते सुखे वा दुःखे वा नितान्तदुर्गतदशायां वा संसारे सर्व्वैवार्थस्य प्रयोजनम्। नचार्थमन्तरेण विषयिणां किमपि कार्य्यं सुसम्पन्नं स्यात्। जीवने मरणे वाप्यर्थानामावश्यकम्। नितरामेवंविधानामर्थानामभावः कीदृश एव दुःसहो मानवानां तदभावग्रस्तजन एव प्रमाणम्।

तादृशार्थार्जनकालान्तरे केवलं स सञ्चयो हि नाम नराणामाश्रयस्थलं, जीवनधारणस्य शरणः, आदरस्य निलयः, प्रतिष्ठायाः हेतुः, सुखस्य च मूलमिति सर्व्वं विदित्वा शोभनमभिहितं नीतिशास्त्रविशारदेन केनापि पुरुषेण—"सञ्चयी नावसीदति" इति।

---

## आर्जवं हि कुटिलेषु न नीतिः—

इह तु विधातुर्विधानवैचित्रे संसारे सर्वे खलु भावाः परस्परविलक्षणाकारा द्वन्द्वमया एवाभिवर्त्तन्ते! तद्द्वन्द्वमयत्वं तावत् परस्परविपरीतधर्मरूपाः सातिशयविलक्षणाकाराश्च, यथा हि यत्र निखिलप्रकाशतेजः प्रतिभाति ननं तदनु तत्रैव मेदुरस्तिमिरस्तोमः समायाति ; तथा यत्र सुखं तत्रैव दुःखं ; यत्र

धनकनकादीनामुपचयः तत्र तेषामपचयोऽपि सदर्पमुपसर्पति ; यत्र अरातिविजयश्रीर्वरिष्ठस्य वीरस्याङ्कमधिकरोति तदलक्ष्ये चालक्ष्मीरपि तत्र स्वैरं स्वैरं समायाति। सद्यःप्रसूतार्भको यथा मातापित्रोरनन्तानन्दाश्रयः तथा निखिलनिरानन्दस्यापि ; इत्थमित्थं पुत्र-कलत्र-मित्रादिपदार्थमात्रेषु प्रियाप्रिययोः मिलनविरहयोरुत्पत्तिविनाशयोश्चानन्तसमावेशमभीक्ष्य नूनं समुदयः संसार एव द्वन्द्वचर इति सर्वथा प्रतिपन्नोऽस्ति। यदि नाम द्वन्द्वमय एव प्रतिपदं परिलक्ष्यते संसारस्तर्हि सारल्यस्य विरुद्धधर्म्मि कौटिल्यमपि वर्त्तत इति का भवितुमर्हति विप्रतिपत्तिस्तत्र ?

तच्च कौटिल्यमतिशयमायानिगूढ़रहस्यानामावासस्थलम् ; न महातार्किकस्य विचारलभ्यम् ; लोकप्रत्यक्षकार्य्येऽविदितात्मपक्षम्, सभ्यसंसदिजनमनोविप्रलम्भकं, प्रच्छदपटावृतवस्तुवल्लोकगोष्ठीषु च स्वमावृत्य विलसतितराम्। यथा भीषणतिमिरस्तोमसन्निपाते व्यालादिहिंस्रप्राणिनां गतिर्नकेषां ज्ञानगम्या ; यथा वा पाथोधेरन्तश्चारिणां मीन-नक्र-मकरादीनां विचरणपद्धतिः स्थलाभिचरतां मानवानामतिशयदुर्व्वोध्यैवास्ति ; तद्वदेव कौटिल्यस्यात्मविकाशः न कैरभिज्ञायते धरणीपृष्ठे। यथा च वंशीस्वरमूर्च्छनया प्रतारिता वागुराभिः कुरङ्गाः, हस्तिनीस्पर्शनोन्मादनया निगड़ैर्मातङ्गाः, तण्डुलादिकणलोभनया पाशोपन्यासैर्विहङ्गाः, मण्डूकादिव्यालभोज्यदर्शनेन, मन्त्रौषधिभिश्च भुजङ्गाः स्ववशीक्रियन्ते ; तथात्ममाहात्म्यातिशयार्पणेन

कौलिन्येनाक्रम्यन्ते प्राणिनिवहाः सुपर्य्याप्तम्। तच्च सर्व्वथाति-दुर्लक्ष्यञ्च मानवानां हृदि कौटिल्यं नाम कूटचित्तवृत्तिमन्तरा-व्रजति।

परं कुटिलता खलु कुटिलजनहृदयाश्रयवृत्तिः, तद्विपरीता सरलता च पुनः सरलचित्तवृत्तिकस्येति निर्व्विरोधितो विचार-सिद्धान्तः परमसत्यञ्च वचः श्रीमदाचार्य्यपादानाम्। परञ्चैत-दुभयोः पर्य्यालोचने प्रथमा तावदसाधुजननिषेवणीया पिशुन-मनोवृत्तिमतां चिरक्रीड़नभूमिः, अपरा च सभ्यसञ्चितपरि-शोभना चतुर्व्वर्गादि परमपदपद्धतिपरिचायत्री सुखदात्री मधुरा परा सरलता नाम, महती चित्तवृत्तिर्म्मानवानाम्।

अपि हि व्यवहारोपगते नूनमेतदुभययोरेकतरयार्जववृत्त्या मतिमतामव्याधमशङ्कञ्च वर्त्तितव्यम्; एवं हि निरन्तरमसदभो-प्सुना कुटिलप्रकृतिना तद् दुर्लक्ष्यं कौटिल्यमवश्यमेवावलम्ब-नीयम्; यतः कुटिलेषु सारल्यं सारल्ये च कौटिल्यं मिथ्योप-चारिकव्यवहार इव सर्व्वथा प्रतिपद्यते, एवं समायाति तेन नयपथोल्लङ्घनं नाम प्रत्यवायस्य निरन्तरा धारा, घटति च महानर्थस्यैकायनो विरोधभूमिः। नितरामनुत्साहादिदोष-स्तमेव विषमव्यवहर्त्तारं गृह्णातीति प्रकृतिसिद्धो नियमः। तत्राभाणकमप्यस्ति—

"सारल्यं सरले कुर्य्यात् शठे शाठ्यं समाचरेत्।" इति

वस्तुतः सांसिद्धिकभावविरुद्धाचरणे प्रतिपदमेव स्खलनं सम्भवति, सम्भवति तेनापि च चरमदुर्द्दशायास्तलातलगमनम्;

ततश्च मरणमपि नाधिकदूरमिति क्रमपर्य्यायिता श्रेणी व्यवहारपद्धतेराश्चर्य्यमिश्रैवालोच्यते ; नितरां प्रकृतिकृतनियमानुवर्त्तित्वमेव सर्व्वथा वर्त्तितव्यमवश्यमेव प्राणिनाम्। तद्‌यदि सम्यग् व्यवहर्त्तुं समर्थ्यते तर्हि वाङ्मेव निखिलेप्सीतभाजनं भवितुमर्हति नान्यथा शतेनापि चेष्टया तदर्थं समीहते स्तोकमपि कश्चन मानवोऽत्र जगति।

अपि नाम यस्य यादृश एव स्वभावस्तदनुरूपेणैव भावेन तेन सह व्यवहारः करणीयस्तेन हि स्वाभिष्टसिद्धिः सौख्यमपि च सम्भवितुमर्हति। तद्विपरीताचरणं नयमार्गविरुद्धं क्लेशानिष्टयोरन्यस्यापि वा व्यसनस्य सुप्रशस्ता शरणिस्त्रासस्यापि च चेत्तं भवेत्। उक्तञ्च कविना—

"सम्बर्द्धितोऽपि भुजगः पयसा न वश्य-
स्तत्पालकानपि हिनस्ति बलेन सिंहः।
दुष्टः परैरुपकृतस्तदनिष्टकारी
विश्वासलेश इह नैव बुधैर्विधेयः॥" इति

इयमभिसन्धिर्दैवगत्या कस्यापि प्रत्यक्षं चेत् रंहसोपगतः फणभृत् स्वीया सामान्यश्वासप्रश्वासक्रिया व्याकुलीभूय मुहुर्मुहुर्गर्जन् शब्दायते, तर्हि तत्र नहि कुटिलव्यवहारमन्तरा सदयव्यवहारः कथं कथमपि दृशदि समापततितराम्। परं कृतेऽपि तादृशे दाक्षिण्यव्यवहारे प्राणानामपि संशयो भवति सुनिश्चितम्। एवमपि हि ऋक्ष-व्याघ्रतरक्षुषु साधारणपशुत्वात् तत्संसर्गो व्यवहारश्च न कस्य मनसि समुदेति मनाक्।

नूनं तत्र क्रूरवृत्त्या क्रूरव्यवहार एव केवलं तेषामाक्रमणतः परित्राणहेतुरिति प्रत्यगात्मनि वाढ़मेवानुभवसिद्धम्। एवं नाम गोमहिषादिग्टहपालिते शान्तस्वभावे जन्तौ सदयव्यवहारेण तद्द्वारा शकटचालनं हलकर्षणमन्यान्यपि च प्रभूतकार्य्याणि सहजसाध्यानि भवन्ति। कर्कशाचरणे तु पयस्विनी माहिषी वा नार्थिभ्यो यथोचितं दुग्धं प्रत्यर्पयति, परं विषाणचरणादिप्रहारेण प्रथमतस्ताड़यितुमुद्यच्छते॥ ततो रज्जुना जङ्घां बद्ध्वा दुग्धं दोग्धुं प्रवृत्तश्चेत् न पर्य्याप्तं दुग्धं समर्पयति क्वचिर्दाति प्रत्यक्षसिद्धम्। सुतरां प्रतिपन्नोऽस्ति सरलेषु कौटिल्यं कौटिल्येषु च सारल्यं सर्वथातिविषमम्, परमनिष्टस्य च हेतुः। अतः सरलेषु सारल्यमेव व्यवहरणीयम्, तथा कुटिले कौटिल्यमिति मर्म्मज्ञानां विशेषवाणी।

दृश्यते हि पिशुनचेतसि साधुवृत्त्या व्यवहरणं तेषामसाधुवृत्तेरेव सहायकम्; यथा भुजगशिशूनां दुग्धपानेन तद्विषज्वाला एव समधिकं वर्द्धते, न च दुग्धमहिम्ना प्रशाम्यति, न वा किञ्चिदूनं च लभते। तथा कौटिल्यव्यवहर्त्तरि सरलव्यवहारस्तत् कूटकार्य्यप्रवर्द्धनार्थमेव प्रभवति। यथा प्रज्वलद्धुताशनजठरे शुष्कतृणेन्धनादिसमर्पणेन तत्तापस्य द्विगुणाभिव्यक्तिरेवोत्पद्यते, न शान्तिः, न च वा तापनिवृत्तिः। दुर्जनमुद्दिश्य कविनोक्तम्—

"दुर्जनो नार्जवं याति सेव्यमानोऽपि नित्यशः।
न त्यजेत्तैलमर्दनैः शुनः पुच्छं हि वक्रताम्॥"

किञ्च—"स्वेदितो मर्द्दितो वापि रज्जुभिः परिवेष्टितः ।
मुक्तो द्वादशभिर्व्वर्षैः श्वपुच्छः प्रकृतिं गतः ॥" इति

एतावता पिशुनो वदुशः सरलताविधायकैः कार्य्यैर्न सारल्यं लभते, केवलं कौटिल्येनैव सारल्यमितीतिहासप्रमाणम् । एवं नाम नैतदविदितमस्ति सभ्यानां यत् पुरा मूर्त्तिमत्सरलतारूपाः पञ्चपाण्डवाः स्वभावदौर्य्यस्य दुर्य्योधने सरलविश्वासस्थापनादेव द्यूतच्छलेन राज्यैश्वर्य्यादिहृतसर्व्वस्वाः कठोरवनवासदुःखमनुभवन्तः सुचिरं द्वादशवर्षं वनमुषित्वा दुर्व्विसहं दुःखमुत्सहन्ते । तथा सरलवृत्त्या नलभूपतिरक्षदेवनादेव परिभूयारण्यवासक्लेशमनुभवन् दैवगत्या पत्नीमपि च हारयन् परमनिर्व्वेदमभजत् ।

इतिहासगर्भेषु समवलोक्यते—परमनीतिचतुरेण कौटिल्यापरनाम्ना सुरगुरुणेव सकलार्थशास्त्रसंविजानता गूढ़चारप्रयोगकुशलिना चाणक्येन स्वप्रतिमः कुटिलमतिश्चतुरचारचयसञ्चालनकुशलः परमकौटिल्यकलानामिकाधिपतिरिवापरसाहाय्यमन्तरा स्वयमेव नन्दराजराज्योद्धरणकामप्रोत्साहोज्ज्वलहृदयवृत्तिश्चन्द्रगुप्तबलबाहुल्यन्यक्कृताशेषशक्तिसामर्थ्यः प्रच्छन्नचारकार्य्यप्रचारभासुरमाहात्म्यभास्वरः प्रखरशतचमूबलोपचीयमानापरिग्रहविग्रहः परमकुटिलकर्म्मश्लिष्टो विशिष्टो राक्षसो नाम सकलाभिनन्दितो महामहिमो महाराजनन्दसचिवः केवलं कूटनीतिप्रवाहपारम्पर्य्यप्रभावमाहात्म्येन चन्द्रगुप्तमन्त्रित्वपदे संस्थापि, सुचिरमिति संक्षेपवृत्तम् ।

इत्थमित्थं पुराणेतिहासागमेषु दृष्टान्तबाहुल्यमवलोक्य स्फुटं

प्रतिपद्यते, यत् कुटिलेषु नाप्रतियोगि सारल्यमभियुज्यम्। तत्र सर्व्वात्मना कौटिल्यमेव संविधातव्यमिति नीतिविदामभिमतम्। अतएवातिशोभनमभिहितं कविताचयरचनचतुरचूड़ामणिना लोकहर्षप्रकटनप्रकर्षेण श्रीमता श्रीहर्षकविना—"आर्जवं हि कुटिलेषु न नीतिः" इति सुधाधिकवचसा।

———

## × दारिद्र्यमनन्तकं दुःखम्*—

अत्र तावत् प्रतिनियतपरिवर्त्तिनि प्रकृतिचक्रेऽपारसंसारचक्रे सत्वरजस्तमस्त्रैगुण्यवैगुण्येन परिभ्रमता विधिव्यवहारजाल-पतिताः किल समस्ता देहभृतः सर्व्वत्र स्वातन्त्र्येण सुखं काम-यन्ते। काम-क्रोध-लोभ-मोहैः प्रवलतमैस्तस्करैर्म्मुषितज्ञान-भागी, वाढ़मेव प्रायशो जीवलोके साकल्येन प्रोल्लसद्द्वेषरागे सर्वे हि दुःखे वद्धदृढ़द्वेषाः सुखे चात्यन्तरागाभिनिवेशाः सम-वलोक्यन्ते। उक्तञ्च—

"सर्व्वाणि भूतानि सुखे रमन्ते
सर्व्वाणि दुःखस्य भृशं त्रसन्ते" इत्यादि

एवं निश्चितं ये हि यत्र प्रगाढ़ानुरागवन्तस्ते हि तत्राधि-गन्तुं यथाशक्ति यावज्जीवमेवात्मचेष्टामनुतिष्ठन्ति, इत्येतदनु-सारेनैव सर्वे हि प्राणिनः स्वदृढ़ानुरागविषयं सुखं लब्धुं विश्वं परितो भ्रमन्तीति प्रत्यक्षसिद्धम्।

* सर्व्वं नष्टं दरिद्रस्य। सर्व्वशून्या दरिद्रता।

तच्च सुखं विभिन्नरूपतया तत्साधनमूलीभूतोऽर्थ एवैकः सर्वतोऽतिरिच्यते, प्रशस्यते च शास्त्रकृद्भिः। धर्मादिचतुर्वर्ग-साधनेषु केवलमर्थ एव प्रधानसहायतया तमेव सर्वतोऽभि-कामयन्ते कामिनः। नूनमेकमर्थमुपलभ्यैव ते स्वर्गादिसाधन-शरणं यागयज्ञकाम्यव्रतनियमादि सत्कार्य्यविधायकञ्च नाना-कर्म्म निर्वाहयितुं शक्नुवन्ति, प्रभवन्ति च प्रतिनियतसुखा-स्पदस्य धर्म्मस्यार्जने समर्थाः अतएव सर्वविधहितानुष्ठाने धनमेव प्रधानोपायभूतं भवति। उक्तञ्च धनमधिकृत्य कविना—

"धनैर्निष्कुलीनाः कुलीनाः क्रियन्ते
धनैरापदो मानवा निस्तरन्ति।
धनेभ्यो न किञ्चित् सुहृद्विद्यतेऽतः
धनान्यर्जयध्वं धनान्यर्जयध्वम्।"

अपि च—"यस्यास्ति वित्तं स नरः कुलीनः
स एव वक्ता स च दर्शनीयः।
स पण्डितः स श्रुतवान् गुणज्ञः
सर्व्वे गुणास्तत्र समाश्रयन्ति॥" इति

हन्त! पुनर्व्विभवशून्याः संसारे तावत् सारभूतेषु क्वचिदपि नैव विशुद्धसुखोचितलब्धभोगाः जनादृताः सफलमनोरथाश्च भवन्ति। प्रायो हि ते दारिद्र्यनिबन्धनतो विफलमनोरथ-तयैव गुरुकठोरघातप्रतिघातेन चेतसः शक्तिसामर्थ्योपभ्रष्टाः परिभवमासाद्य निर्विण्णाः, दुःखशोकनिलयास्पदत्वेनाक्लिष्टित-विवेकाश्च सम्भवन्तितराम्। यदाहुस्तावदार्य्यपादाः—

"दारिद्र्याद् ह्रियमेति ह्रीपरिगतः सत्त्वात् परिभ्रश्यते
निःसत्त्वः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकनिहतो बुद्ध्या विहीनो भवेत्
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥" इति

अपि हि दारिद्र्यमेव पुंसो निखिलजीवनप्रवाहस्य कठोर-निलयं नाम महाश्मशानमिवातिशयकर्कशं स्थानम्। तदधि-गतो जीवन्नपि च मृतनरैरास्ते विषयी। परं तञ्च सदा पूति-गन्धमिव विजहाति बन्धुजनो दूरतो दूरान्निरन्तरम्। भृशं वैरायते च अवैरोऽपि लोकयात्रानिर्वाहव्यापारेषु प्रतिनियतम्। संसारसद्मनि तु नितान्तवैरहेतुमेव समामनन्ति प्रायशो जीव-लोकाः। योजयन्ति च असम्भावितानाचारमपि तत्राहैधभावेन सम्यक्। उक्तञ्च—

"दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न संतिष्ठते
सुस्निग्धाविमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः ।
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
पापं कर्म्म च यत् परैरपि कृतं तत्तस्य सम्भाव्यते ॥" इति

अहो! सर्वैरेव प्राणिभिः प्रतिनियतात्मसुखान्वेषणप्रणिधि-परचित्तैरैकाग्र्येण कुत्रचित् सबहुमानमभिरम्यते, विस्तार्य्यते च नानाछद्ममयी वा कृपणा वाणी। किन्तु दुर्गतेषु जनेषु स्वार्थसम्पादनावसरं कथं कथमपि नासमीक्ष्य पुत्र-कलत्र-मित्र-भृत्य-बान्धवा अपि यथोचितं सम्मानमादरञ्च नाभिवर्षन्ति, नार्पयन्ति च सहजातस्नेहाभिवर्षणधाराम्। परं मधुपानां

पर्य्युषितप्रसूनमिव, सारसानां शुष्कसरमिव, मृगाणां दग्धवना·न्तरमिव, विहगानां पत्रपुष्पहीनं तरुमिव, सावज्ञं निर्दैवं विरजन्ति ते हि जनाः। एवञ्च शस्यौषधिपरिहीनोषरभूमिप्रायेषु हिमकणप्रपातसंवर्द्धनामिव दारिद्र्यप्रखरतापितान्तःकरणेषु प्रतिनियतदुर्म्मणायमानजनेषु स्नेहैकनिष्ठपितृभ्रातृप्रभृतयो महामाननीया नैव प्रविमुक्तहृदयनाशिषमभिवर्षन्ति, नाद्रियन्ते च सुतसुतादयः स्नेहप्रवणा जनाः, नापि सुहृदुत्तमा यथोचितं संवर्द्धयन्ति, प्रायशो नो वा सहधर्म्मिण्योऽपि मर्म्मवेदनां तुल्यरूपेण विश्रब्धप्रेमाभिर्व्यक्तिं प्रकटयन्ति, किमु आजन्मजातप्रेमबन्धना वयस्याः सम्भ्रान्तान्तःकरणमालिङ्गयन्ति ; हन्त ! नापि वा भृत्याः स्थापयन्ति योग्यामिव सम्माननाम्। अहो ! दग्धभागधेयं तमेव दुर्गतं स्वातन्त्र्येण जगति निर्म्माय किं पक्षपातदोषदुष्टान्तःकरणवृत्तिर्विधाता ? किमियं सृष्टेरपूर्व्वा सृष्टिर्दारिद्रता नाम। प्रस्तूयते च सम्यक् कविना ब्रह्महत्यादि पञ्चपातकातिरिक्तं षष्ठं महापातकं हि तद्दारिद्र्यं यथा—

"सङ्गं नैव हि कश्चिदस्य कुरुते सम्भाषते नादरात्
सम्प्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते।
दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया,
मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥" इति

हा हा ! नास्ति दीनजनस्य हृदयवेदनायाः समभागी कश्चिदपरोऽत्र जगति। स हि सततं परैः परिभूयमानः सारमेय इव गृहाद् गृहान्तरं ततोऽन्यत् तस्मादप्यपरं स्थानं जठर·

ज्वालया दंदह्यमानः क्षुत्पिपासे परिभ्रम्यात्मभाग्यवशेन कथं कथमपि न दरिद्रतामपाकर्त्तुं शक्नोति। न च गृहमेधिना-मश्लीलाभिभाषणस्य श्लेषवचनस्यापि वा प्रत्युत्तरमर्पितुमर्हति स खलु मन्दभाग्यो वराकः। अपि तु लवमात्र कूपोदकमिश्र-णात् पूततममन्दाकिनीसलिलराशिरिव निखिलललितकला-विशेषज्ञः, किन्तु सकलशास्त्रार्थदर्शी ज्ञानविज्ञाननेत्रो गुणगण-विभूषितोऽपि मनीषी दारुणदैन्यदोषग्रस्ततया वहति नीचाना-मप्यवज्ञाम्; समाप्नोति च जनमात्राणां विरागताम्। संगीयते तत्रैव केनापि कविना—

"न विद्यया नैव कुलेन गौरवं
जनानुरागो धनिकेषु केवलम्।
पिनाकिना मौलिकृतापि जाह्नवी
प्रयाति रत्नाकरमेवमादरम्॥" इति

वस्तुतो दारिद्र्यमेवमिदुरीकृते ज्ञानविज्ञानसन्दीपिते चेतसि मनस्विनां वारिवाहविनिर्मुक्ताः क्षणस्थचपलास्फुरणविलासा इव मनोरथा उत्थायोत्थायैव क्रमशो हृदि लीयन्ते। एवं प्रावृट्शैलनिर्झरिणीमहापूरसंहतय इव सर्व्वा विपत्तयस्तत्र समायान्ति, बहुलीभवन्ति च महान्तोऽनर्थाः, परं प्रक्षीणतां यान्ति किल ग्रीष्मकालोपरताः कुसरित्प्रवाहा इव तावन्तः सम्पत्तयस्तेषाम्। घनघोरतमोमयं जीवनं सर्वतो दुःसहभार-वहं निःस्वानाम्। तेषां रात्रिशेषयामोपगतक्षीणप्रभतारका निकरा इव सौर्य्यवीर्य्यगाम्भीर्य्यादयः पुरुषोचितगुणग्रामाः

स्वतएवान्तर्लीयन्ते। एवं शिशिरपातकलङ्कितं कुशेशयमिव मलीमसं तेषां मुखमण्डलं सततमभिकाङ्क्षति दयार्द्राणां करुणाधाराम्। किं बहुना तादृशस्य तपस्विनो देहयष्टिरपि यथोचितभरणपोषणाभावेनाचिरेण आमयोभूत्वा परेतपुरपतेरतिथितामुपगता।

अहो! प्राय एव तादृशो मन्दभाग्यश्छिन्नवस्त्राञ्चलमात्रसहायेन दुर्व्वारणीयौ शीतातपौ वर्षाधारामन्यानपि च नैसर्गिकनियमान् पशुरिव निर्विवादं सहते, सहते च भृशं पिशुनकैतवशतं, समावहति हि पुनर्मूकवदन्यैरुपचारितं मिथ्यावादकलुषं दुर्ललितं वचःशैलम्। एवं स्वावासाप्रसस्तोटजस्य विरलाच्छादनतया समापतति तदन्तरे रात्रिन्दिवं सूर्य्याचन्द्रमसोर्निरर्गला तेजोधारा। गेहमध्यं तैजसभाजनाभावेन करण्डैश्छिन्नकन्थाखण्डैः कपालपात्रैश्च मण्डयति चौणकर्म्माशयोऽकिञ्चनोऽत्र जगति।

स हि दुःस्थो निरन्तरक्लेशकशायितक्षतविग्रहोऽमुत्र श्रेयस्करं किमु तदपायमिति न समवधारयितुमवसरं समीहते। नितरां महापातकादिकलुषविषयं दुष्कार्य्यमविचार्य्यैव स्वतः प्रवर्त्तते, रमते च येषु केषु पापविषयेषु साग्रहम्। दारिद्र्यप्रपीड़ितहृदयस्य चारुदत्तस्य वाचा प्रकाशयति कविः कर्कशकठोरस्वरूपं दारिद्र्यस्य। यद्धि मरणादपि सातिशयं भैरवम्। यथा—

"दारिद्र्यान्मरणाद्वा, मरणं मम रोचते न दारिद्र्यम्।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम्॥" इति

अपि सत्यमेवाजन्मसुखोपभोगनिरतानां विलासोपकरणे न्यस्तचेतसामृद्धिमतां दैवगत्यापतितं दारिद्र्यकष्टं वाढ़मेवात्यन्तदुःसहमिति कोऽस्ति तत्र सन्देहावसरः ? नैव ते साधारणवत्तद्दुःखं मर्षितुं समीहते, नापि वा तदपनेतुमपि प्रभवन्तीति इयमेवात्यन्तदुर्विसहम्। उक्तपूर्वं दारिद्र्यस्वरूपोपवर्णयिता भासेन किमु शूद्रककविना—

"सुखं हि दुःखान्यनुभूय शोभते
घनान्धकारेष्विव दीपदर्शनम्।
सुखात्तु यो याति नरो दरिद्रतां
धृतः शरीरेण मृतः स जीवति॥" इति

इह हि प्राय एव दारिद्र्यविषसंमूर्च्छनया मुह्यमानाः मनुष्याः कार्य्याकार्य्यं धैर्य्याधैर्य्यं पात्रापात्रञ्च विगणय्य विश्वं परितः अटन्ति, कुर्वन्ति च अनेके स्वशक्त्यातिरिक्तं स्वस्वभाववैपरित्यं वा कार्य्यशतम्। तेन शुभमशुभं वा तद्भावयितुमपि नैवायात्यवसरः। सुभाषितमत्रास्ति भाषान्तरे कस्यचिन्महात्मनः—

"उदर्‌भरणकारण् प्राणी न करइत लाज्।
नाचे वाचे रण्भीरै वाछैना काज् अकाज्॥" * इति

इत्यादि दारिद्र्यमाहात्म्यमालोच्य कविभिर्यदुच्यते—

* प्राणी जठरज्वालानिवृत्तये लज्जां त्यक्त्वा नृत्यति, अर्थात् लज्जाशीलापि स्त्री बुधसंसदि नृत्यति। अपटुरपि नाविकः दुस्तरं समुद्रं तर्तुमभिलषति। रणभीरुश्च युद्धार्थं संग्रामं निविशते। एतत् सर्व्वस्य मूलं दरिद्रता नाम मानवानामवस्था विशेषः।

"दारिद्र्यमनन्तकं दुःखम्" "सर्वशून्या दरिद्रता" सर्वं नष्टं दरिद्रस्य" इत्यादिश्लोकपादा अन्वर्थां अर्थानुहन्तीति यथार्थं वक्तुमुपयुज्यते। तत्र किमधिकेन वचसेति शम्।

---

## संसर्गजा दोषगुणा भवन्ति—

संसर्गो हि नाम परस्परेणैकत्रावस्थानरूपः सम्बन्धः। स तावत् स्थूलतो द्विविधो भवितुमर्हति सदसद्भेदात्।

दृश्यते सर्वे खलु प्राणिनः संसर्गप्रियाः; न च किल कोऽपि संसर्गमन्तरेण वर्त्तते; निकृष्टप्राणिमध्येऽपि सुस्पष्टं प्रतिभाति, एकः अपरस्य संसर्गं कृत्वा परस्परं सम्मिल्य समजं निर्माय काननावनौ वियति वा विचरति। इत्यादिक्रम एव विलसति सर्वत्र विधातुः।

मनुष्येषु किञ्चिद्वैशिष्टम्—यो हि यस्य संसर्गे वर्त्तते स हि तत्संसर्गानुरूपं गुणं दोषं वा विधत्तेतराम्, संक्रामन्ति च तत्र प्रसभं तड़ित्प्रवाहा इव तत्तद्गुणदोषाः, आचारव्यवहारादयश्च। नितरामैहिकं किमु पारत्रिकमिष्टमनिष्टं वा प्रतिसर्गोऽपि कारणमेकमसाधारणम्। उक्तञ्च नयविदाचार्य्यपादैः—

"यादृशो यस्य संसर्गो भवेत्तद्गुणदोषभाक्।
अयस्कान्तमणेर्योगादयोऽप्याकर्षको यथा॥"

कविनापि—

"सन्तप्तायसि संस्थितपयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वात्यां सागरशुक्तिमध्यपतितं मुक्ताफलं जायते
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥" इति

नैतदप्रत्यक्षं यत् संसर्गतः एव चरित्रवान् चरित्रहीनो भवति, दुर्ज्जनोऽपि सुजनायते साधुपुरुषसंसर्गेण तस्करोऽपि सुनिवृत्तिमवलम्ब्य इहामुत्र परमसुखमुपभुङ्क्ते इति दृष्टान्तस्यापि नासद्भावः ।

अपि प्रायशस्तु संसर्ग एव पुंसामनुकरणप्रवृत्तिमुत्पादयति। तेन हि स्वर्गं नरकं वा घटते किमु समुन्नतिमवनतिं वा । तत्र तावत् प्रथममेव समाकर्षन्ति चेतो ब्रोटनद्वीपवासिनोऽस्माकं राजजातीयाः पुरुषधौरेया इंराजाः ।

ते हि पुरा अन्योऽन्यं कलहं कुर्व्वन्तः सुचिरं दिनमनयन् । ततो रोमाणीया ब्रोटनद्वीपं तांश्च विजित्य शशासुः । ततस्तत्यास्तेषां शासनसमयादारभ्य विजेतॄणां संसर्गात् तेषामाचारधर्म्मादिकमनुकृत्य शनैः शनैरुन्नतिपदवीमधिरुह्य क्रमविकाशेन वर्त्तमानैंराज जातित्वमवापुः ।

एवं संप्रति नानाज्ञानविज्ञानसन्ताना जापानीयाः शौर्य्यवीर्य्यगाम्भीर्य्य-ज्ञान-विज्ञानाभिमानिनां भूमण्डलाधिवसतां पुरुषपुङ्गवानां समधिकां दृष्टिमाकर्षन्ति, तान् तु नानेके ज्ञानविज्ञानाध्यवसायगुणगुरवो मूर्त्तिमन्मात्सर्य्यप्रतिमतया

सभ्यपदवीत्वेनाप्यङ्गीकर्त्तुमतिशयकुण्ठितकण्ठा लज्जिताश्चासन् ; तानेव हि संप्रति ते मानवयितुमनुगच्छन्ति। जगतामेकतम-शक्तित्वेन प्रस्तुवन्ति ; वाणिज्येऽप्रतिद्वन्द्विनश्चेत्याख्यायन्ति च। तेषामेतस्या उन्नतेर्व्वर्त्तमानसभ्यताभिमानिनामिलमण्डलाधिवसतां पुरुषसिंहानां संसर्ग एव प्रकृष्टहेतुतया विनिर्द्दिश्यते सकल-तत्त्वार्थदर्शिपरमविविधैः।

अधःपातस्य च भारतीया एव मुख्यतमप्रमाणम्। ये हि प्राक् ज्ञानविज्ञानालोकधारया अलौकिकप्रतिभया च भूमण्डलाधिवसतां न केवलं तेषामुत स्वर्गपातालस्थानामपि जीवानां विस्मयमुत्पादयन्ति ते नूनमिदानीं स्वाधीनचित्ता ऋषिपुत्राः स्ववृत्तिमाश्रित्य न किं चरमदुर्द्दशामुपागताः? भवतु तद्वितथमवितथं वा तत्प्रमातारो जगद्वासिन एव प्रमाणम्।

अस्ति तावन्महाभारते गौतमनामा कश्चित् ब्राह्मणः। स हि भिक्षामटन् ब्राह्मणहीनं धनकनकसमृद्धं ग्राममभीक्ष्य तत्र गत्वा दस्युपतिं शरणमाश्रित्य वासस्थानञ्च प्रार्थ्य प्रार्थना-नुरूपं सर्व्वं ततो युवतीं दासीञ्च प्राप्य तत्र गृहं निर्म्माय निव-सति स्म। ततस्तत्रत्यानां संसर्गात् क्रमशो व्याधवृत्तिमवलम्ब्य सुचिरं सुखेनास्ते। अथ कदाचित् गौतमस्य कश्चित् सुहृद् दैवगत्या तत्रागत्य तस्य जातिधर्म्मादिकं समुल्लिख्य मृदुभर्त्सयन् गौतमगृहे रात्रिवासं कृत्वा प्रातरन्यत्र ययौ। तदनन्तरं गौतमोऽपि गृहान्निर्गत्य पथि बकरूपिणा नाड़ीजङ्घेन समं

मैत्रीं विधाय तदुपदेशेन विरूपाक्षं राक्षसपतिं प्राप्य बहुहाटकानि तस्माल्लब्ध्वा प्रत्यावृत्तवेलायां भक्ष्यार्थं सुहृदुत्तमं बकं व्यापाद्य मार्गं चलति। ततो विरूपाक्षेण तस्य तादृशं दुष्कार्य्यमभिज्ञाय जीवनदण्डेन स दण्डितः। ततः पुरन्दर-वरेण गौतमबकौ जीवनं लब्ध्वा स्वस्वधाम गतौ। गौत-मस्तु स्वगृहमेत्य भवर्य्यां सुतादीन् जनयामास। अतएवोक्तं नयशास्त्रप्रवर्त्तृभिः—

"हीयते हि मतिस्तात हीनैः सह समागमात्।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम्॥" इति

विशिष्टसंसर्गाच्च लष्टृपुत्रो व्यासशिष्यो लोमहर्षणो नितान्त-हीनवर्णोऽपि सकलशास्त्रार्थदर्शी पुराणवक्ता। स पुरा नैमिषा-रण्ये महर्षिगणोपेतमाश्रमपदं नानाविधया शास्त्रदृशा सुख-रितमकरोत्। अतः संसर्गस्यानन्ता शक्तिरतुलनीया च गतिः। उक्तञ्च—

"काचः काञ्चनसंसर्गाद्धत्ते मारकतीर्द्युतीः।
तथा सत्सन्निधानेन मूर्खो याति प्रवीणताम्॥" इति

अपि च समनुश्रूयते तावन्मलयाद्रौ चन्दनपादपसुसन्निहितो हि निकृष्टवन्यमहीरुहः स्निग्धश्रीखण्डगन्धेन स्वसारं पूरयति। उपदिष्टञ्च नीतिविदा—

"मानवैः पूजनीयः स्याद्देवसंसर्गतः पशुः।
कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः॥" इति

नूनं सत्संसर्ग एव जगतामशेषदुःखदैन्यमपाकरोति,

चरित्रं शोधयति, सुखमातनोति, यशः प्रसारयति, स्वर्गद्वार-सरणिमपि चाविष्करोति। उक्तञ्च कविना—

"जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति।
सन्तोषमाकलति दिक्षु तनोति कीर्त्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम्॥" इति

वस्तुतो यस्तावदिह दयायाः प्रतिमूर्त्तिः, सुखे वा दुःखे वा सातिशयदुर्गतदशायां वा न कदाचिदपि स्वकर्त्तव्यतो विचलति, धर्म्मतो लोकतो वा अनुचितं कर्म्म न कथं कथमपि विदधाति ; सर्वत्र सत्यवादितया प्रत्यायते, इन्द्रियग्रामाश्च यस्य वश्याः, सततं शत्रुरपि गुणे यस्य समधिकादरः, ईदृगेव परम-पुरुषलक्षणलक्षितो महामनाः साधुनाम्ना व्यपदिश्यते प्राचीना-र्य्यवर्य्यैः। तादृशस्यैव संसर्गः सर्वथा कर्त्तव्यः। तत्संसर्गा-च्चतुर्वर्गसिद्धिरपि करतलामलकवत् स्वल्पायासेनैव सम्भवति। श्रूयते किल साधुसंसर्गमाहात्म्यात् कुटिलः सरलायते, असरलः सरलीभवति ; समप्रधानतपोवनान्तश्चारिणः सिंहशार्दूलादयः पुरा मुनिवटुभिः समं गृहपालितमार्जारवत्या क्रीड़न्ति स्म। नीवारकणलोभेन मृगशिशुः कण्डूयति स्म मुनिजायांशदेशम्। अहो! धन्यमेव साधुमाहात्म्यम्। साधुताप्रभावेनोटजान्तरं दीनस्य प्रासादतलादपि सुसम्पन्नतया मनोरमं सर्वथा प्रतिभाति। शोकतापतापितान्तःकरणे पूतोपदेशधारया शान्तिमुपनयति सैव साधुता नाम। उक्तञ्च केनापि—

"गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे
गुणा दोषायन्ते जगति किमिदं विस्मयपदम् ।
यथा जीमूतोऽयं लवनजलधेर्वारिमधुरं
फणी पीत्वा क्षीरं वमति गरलं दुःसहतरम् ॥" इति

नूनं केवलं सत्संसर्गत: एव यत्प्रभवितुमर्हति ; न च तत् शास्त्रवचसा, सद्गुरूपदेशेन, कोटिकोटिपुण्यफलाधिगतेन, तीर्थसलिलनिमज्जनेन, इन्द्रियनियमनेन च सम्भवति । यथा सत्संसर्ग उन्नयति, प्रसारयति च देशतो देशान्तरं प्राधान्यम् । तथासत्संसर्गश्चाधःपातयति सङ्कोचयति च माहात्म्यम् । सकल-गुणगरिष्ठो विद्याविभूषितश्चापि संसर्गपापात् निन्दनीयः, मनुष्य-पदवीत्वेन च परिहीयते, महाकुलप्रसूतोऽपि सङ्गमाहात्म्या-द्विजगोष्ठीभिः सममात्मानं मलिनयति । कुसंसर्गेण कमला-कुलपुत्रोऽपि नाचिरेण दरिद्रायते । क्षितिपतिरपि चेद्व्रतो भ्रष्टः, पुण्यप्रतिमश्च वर्जनीयनामा भवति । अत्र सतामाभा-णकम्—

"असतां सङ्गदोषेण को न याति रसातलम् ।" इति

इत्थमित्थमसंख्यात एव वर्त्तन्ते गुणदोषाः संसर्गात् । तत्त्व विज्ञातुमिच्छुना केनाप्याश्रमाधिगतेन आश्रमिणा शुकपोतः पृष्टः । स तं प्रत्युत्तरेणाह—

"माताप्येका पिताप्येको मम तस्य च पक्षिणः ।
अहं मुनिभिरानीतः स चानीतो गवाशनैः ॥

अहं मुनीनां वचनं शृणोमि
गवाशनानां स वचः शृणोति ।
न तस्य दोषो न च मे गुणो वा
संसर्गजा दोषगुणा भवन्ति ॥"

इत्यास्तां विरतिः संसर्गसंवाहिनीकथाया अविस्तरेणेति ।

---

## दयावान् धरणीपूज्यः *

इह खलु संसारे जलबुद्बुदनिकाशकल्पे विनश्वरे जगति क्षणभङ्गुरमिदं शरीरं लब्ध्वा ये नरा दयाप्रवणहृदयास्ते हि निखिलासीमधर्म्मसम्पदमासाद्य भाविन्यपि च जनने पूजार्हा भवन्ति। समाचिन्वन्ति च महतीं कीर्त्तिं परत्र च शाश्वतिकं धर्म्ममिति। किं बहुना भगवता मङ्गलमयेन समं पूजयन्ति दयावन्तमाचार्य्यमिश्राः कर्म्मबहुलायामत्र भारतभूमौ। परमिद्धाधिव्याधिनिरवच्छिन्नपर्य्याकुलिते जीवधामनि कति कति नरा जहिरे असून्। कति कति वा उत्पद्यन्ते उत्पत्स्यन्ते च को तान् परिगणयन्ति आमनयन्ति च। ते खलु पुण्यतमाः सार्थकजन्मानो ये तावत् परक्लेशमपाकर्त्तुं प्रभवन्ति। अपरे केवलं पानभोजनार्थमुत पशुवृत्तिसम्पादनार्थं वा प्राणान् धारयन्ति। उक्तञ्च—

---

* दयालुर्देवता साक्षात्। दयैव परमो धर्म्मः।

"सर्वेषु जीवेषु दयालवो ये
ते साधवो मे गुरवो न चान्ये।
पाषण्डिनस्तूदरपूरकाश्च
प्राणातिपातेन वदन्ति धर्मम् ॥" इति

अस्ति तावदस्योदाहरणं दयावन्तमधिकृत्य—पुरा हेमकूटाद्रेः समीपवर्त्तिनि धर्मपुराख्ये नगरे जीमूतकेतुर्नाम श्रीमान् राजचक्रवर्त्ती विद्याधरपतिः पुरोहूत इव प्रतिवसतिस्म। तस्य राज्ञो बुद्धिसत्त्वांशसम्भवः सर्वभूतानुकम्पी दानवीरो निखिलगुणोपचयान्वितो जीमूतवाहनो नाम सुतोऽभवत्। तं तु यौवराज्येऽभिषिच्य राजा परमां प्रीतिमलभत। कुमारोऽपि यौवराज्यमासाद्य धराणामशेषदीनदैन्यदशामवलोक्य स्वायत्तं सर्वकामदुघं कल्पपादपमर्थिभ्योऽदात्।

अथ तस्य गोत्रजा मात्सर्य्यादसहिष्णवो मूलबलोपचितेन कल्पपादपपरिरहितं तं युद्धाय समाह्वयन्तः। जीमूतवाहनस्तु स्थविरपितरमभ्येत्यप्राह—'तात, किं पुनरेतस्य विनश्वरस्य देहस्य कृते ज्ञातिबन्धुनिधनातिगर्हिताचरितकल्मषानुसरणेन? विशेषतोऽतिमात्राल्पक्षणापातसुमनोरमा सम्पत् तड़िल्लतेवातर्कितै नैवोदेति विनश्यति च तदर्थमलं, तस्यानुसंशक्तविग्रहेणास्माकम्। येनेहामुत्रक्लेशभाजं भवेम?' जीमूतकेतुस्तदाकर्ण्य—'हे पुत्रक, तवार्थमेव मे राज्यमेतादृशो सम्भावना च यद्येतन्न रोचते ते कृतमनेन। ततो राज्यं परिहाय पितृभ्यामन्वितः कुमारो मलयाचलमभ्यगच्छत्। तत्र च कृताश्रमः सहजसमुत्पन्नैः

स्कन्दमूलफलैरनुदिनं मातापितरौ समभ्यसेवत। ततः स्वल्पै-रेवाहोभिः कुमारस्य तत्रत्यसिद्धराजस्य विश्वावसोरङ्गजेन मित्रा-वसुना महती मैत्री सञ्जाता। मित्रावसुस्तु जीमूतवाहनस्या-लौकिकगुणेन विमुह्य स्व-स्वसारमनवद्याङ्गीं मलयवतीं तस्मै सम्प्रदात्। साप्यनुगुणमेव भर्त्तारमासाद्य परां प्रीतिमलभत।

अथैकदा कौतुकप्रणोदितो जीमूतवाहनः समुद्रवेलाभूमि-मभ्यचरन् नातिदूरे रमणीकण्ठसमुत्थितातिकरुणक्रन्दनरोल-मश्रौषीत्, अद्राक्षीच्च क्षणादेव पुरवर्त्तिन्यनतिदूरे धवलाति-तुङ्गगिरिशृङ्गमिवास्थिराशिम्। तदन्तिके च सुकुमारकुमार-मन्विताम्—'हा पुत्रक, शङ्खचूड, हा! दुःखशतलालितकुलतन्तो, क्वाहं त्वां पुनर्द्रक्ष्यामि? हा हा!! वत्स, दिनकरकरस्पर्शादेव यद् दूयते तवाङ्गं तत् कथं कथमपि तार्क्ष्यभक्षजां दारुणां रुजां सहिष्यसे? हा हा!! अधन्याया नयनानन्द' इति भूम्यभि-लुण्ठितां व्यलपन्तीं कामपि कामिनीम् तामभिगम्याह जीमूतवाहनः—'अम्ब, किन्ते परिवेदननिदानम्? कोऽयं वा ते वेलास्थलगृहीतोऽर्भक' इति तदति करुणमपि वचो निशम्य साश्रुपूर्णेक्षणा बाष्पावरोधितकण्ठा गरुडशङ्किनी सन्त्र-स्तालपत्—'भो, महाप्राण पतगेन्द्र, मां भक्षय जहिहीमं मे तनयम्' इति। तावत् शङ्खचूडः—'कस्ते व्यामोहः? मातः, साध्वसास्पदं वैनतेयं कं परिगणयसि? वीक्ष्यसे न च किमस्य मेदू-राह्लादास्पदमुखं येनेक्षणेनेक्षितव्यमात्रेणात्मीयते सपदि नूनम्।' ततः पुनः कुमारी ब्रवीति—'अयि स्नेहैकशरण्ये, मा बिभिषि,

गृहं प्रतिनिवर्त्तस्व, त्वत्पुत्रार्थं जीवितं देहञ्च बलिमुपहरामि पतगेन्द्राय।' इत्याकर्ण्य—'धिङ् मां मन्दभागिनीमित्यालापयन्ती बाष्पावरोधितकण्ठा भुजङ्गमाङ्गनाह—'हे महाभाग, किशोररूपिन्, पुरुषोत्तमविग्रह, अस्मत्कृते यदुद्यमस्ते तेनैव परिक्रीणासि विपन्नभागधेयां मादृशीं प्रायोपवेशनकल्पामधन्याम्। गृहं प्रतिगच्छ, प्रीणीहि च पितरौ आप्यायस्व च प्रियगृहिणीम्' इति। ततश्च शङ्खचूड़ः—'हे मनुजकुञ्जर, दर्शिता त्वया महाप्राणता, गृहीता वयमौदार्य्येण, किन्तु नेच्छेदात्मविनिमयेन युष्मत्पादान् विक्रेतुम्, अपि चेह कोऽयमिच्छति—'वैदुर्य्यविनिमयेन तुच्छोपलखण्डंलद्ध्म्? नूनं मादृशैः क्षुद्रैरेव पूर्णा वसुन्धरा। परं विरलास्तु भवादृशा महानुभवपरार्थसाधनप्रवणहृदयवेगाः। तत् भद्र, इन्दोरिव द्युतिष्वतो ममान्वयस्य नाहमानेष्यामि कलङ्काङ्कम्। अयि, मातः प्रतिनिवर्त्तस्वाहरहो जननीहृदयाश्रितस्नेहविद्रावोनी भूमितलात्। अहो! किं न पश्यसि? द्विरदरदच्छदातिधवलं पीतशोणितहरिदशनमिव महोरगजानामसृगनुलिप्तं बध्यशिलातलम्। तदामन्त्रये ममोत्तरजन्मनि दर्शनाय इति क्षणादेवात्र त्वं संसारविध्वंसनैकशरणमम्बिकाविलासिनमम्बिकापतिं गोकर्णाख्यमभिवन्द्य प्रत्यागमिष्यामि, युव तावत् व्रजथः' इति कथयित्वा शनैः शनैरेवादृश्यमभ्यगात्। मातापि तदनुशरणक्रमेण रोदनपरा प्रतिगता।

अत्रैव क्षणे प्रावरणाच्छादिताङ्गो जीमूतवाहनो बध्यशिलातलमधिकृत्यासीत्। तावत् सपदि पक्षिराजः शङ्खचूड़

मन्यमानश्चञ्चुपुटेन निर्भिद्य भोक्तुमारभत। तेनापि च हृष्टमाननं पुलकोद्गमरोमराजिमवलोक्य विस्मयान्वितः खगपतिरचिन्तयत्—'अहो! आबाल्यतो नागाशनात् वर्द्धते मे शरीरं किन्त्वद्यापि न पश्यामीदृशीं धैर्यप्रवणताम्' इति मुहूर्त्तं विनिवर्त्तिते भक्षणे—

"सिरामुखैः स्यन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि च ते महात्मन्
किं भक्षणात्त्वं विरतो गरुत्मन्॥"

इत्युक्ते जीमूतवाहने युगपच्छतवृश्चिकदंशनोपमं मर्म्मणि भिद्यमानं दुःखं मन्यमानो वैनतेयः प्रतिनिवृत्याशनादचिन्तयत्—'अहो! रे कोऽयं भवागारैकशरणो धैर्यप्रतिमूर्त्तिमान् आजन्मतः पन्नगपिशितभक्षयता मया निर्मुच्यते अद्य जठरदैन्यात्। ये भक्षणीयास्ते हि मद्दर्शनमात्रेण मुञ्चन्ति संसारग्रन्थिम्।' भवतु तावत् वेद्मि—'भो महासत्त्व, को भवान्, किमर्थं ते एतादृशी दशा' इति। ततो जीमूतवाहनोऽब्रवीत्—'हे गरुत्मन्, कोऽयं ते प्रश्नः? वेलातिवर्त्तते प्रकृतमनुसर' तस्मिन्नेव मुहूर्त्ते शङ्खचूडस्तत्रागत्य—'हं हो! विनतानयनानन्दनखगोत्तम, किमद्य ते विभ्रमः? मैवं समाचर। नायं पन्नगः, अहमेव भवद्भोज्यः। किं न पश्यसि मे भोगं द्वे रसने सुव्यक्तं पुच्छस्व? परिहर एनं विद्याधरतनयं जीमूतवाहनम्' एतन्निशम्य स्वभ्रमनिष्कुषितप्रत्ययोदयात् खगपतिर्भृशमनुतप्तः

कुमारमाह—'भो नरोत्तम, का ते रुचिः? किमर्थमेतादृशं साहसमाहितम्?' इति। स आह—'बिसिनीपत्रगतेन जलकणेनेव क्षणस्थायिना कायेनैकस्यापि सरिसृपस्य तद्विनिमयेन जोवनं रक्षितुं प्रभवामि चेत् मन्ये सार्थकतास्य देहस्य' इति। तच्छ्रुत्वा खगपतिः तं बहुशः स्तुत्वा किन्ते प्रियमुपहरामीति तस्मिन्निगदिते स चाह—'पक्षरथ, यदि मे वरं दास्यसि तर्हि अद्यप्रभृति नागाशनात् प्रतिनिवर्त्तस्व, जीवयतु भक्षिताहीन्' इति। बाढ़मेव स्यादित्युक्त्वा गरुड़ः स्वर्गादानीयतया सुधया तं सरिसृपाणामस्थिराशिमाभ्यसिञ्चत्। ततस्तेनैव च सर्वे निसर्गतोऽपि जनप्रतिमशरीरमलभ्य स्वपुरमभ्यगच्छन्।

इत्थमेवाकिञ्चित्करव्यपदेशिनापि दयालवः पुरुषाः स्वं शरीरं जीवनञ्च परार्थं बलिमुपहयामासुरिति साधूच्यते 'दयावान् धरणीपूज्यः' उत 'दयालुर्देवता साक्षात्' किंवा 'दयैव परमो-धर्म्मः' इति किं बहुना।

---

## अवैयाकरणस्त्वन्धः—

व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्युत्पत्त्या व्याकरणं नाम शब्दशास्त्रमुच्यते,—

"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः।
ज्योतिषामयनञ्चैव वेदाङ्गानि वदन्ति षट्॥"

इत्यादिना वेदाङ्गत्वमपि विश्रुयते शास्त्रेष्वस्य। तच्च व्याकरणं बहुभिरेव नामभिः श्रूयते सर्वेषामेव तेषां दृष्टो भाषासु व्युत्पत्तिसम्पादनोपयोगः। शब्दार्थप्रतिपत्तिप्रयोजकत्वञ्च व्याकरणस्य उपलभ्यते—

"शब्दग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥"

इत्यादि प्राचीननिरुक्तेः। तथाहि—व्याकरणात् पदानां प्रकृतेः प्रत्ययस्य च भेदेन ज्ञानं, तज्ज्ञानात् शक्तिसम्बन्धेन तदर्थज्ञानं, ततो विषये प्रवृत्तिः, प्रवृत्तिमूलञ्च इष्टम्। तद्धि व्याकरणं सन्धिशब्दधातुकारकसमासादिभेदेन बहुधा विभक्तम्। तेषु द्वयोः सुसन्निकर्षः सन्धिः, शब्दाः स्यादियोग्या वृक्षादयः धातवः तिङ्योग्या अस् भू प्रभृतयः, कारकाणि अपादानादीनि षट्, समासाश्च कर्म्मधारादयः षट् इत्यादि। एतेषां प्रत्येकमेव वस्तुतो व्याकरणस्य अङ्गभूतम्, एतेषामेकस्यापि अपाये व्याकरणज्ञानस्य उद्देश्यभूतं विपर्य्यस्येत्, तद् व्याकरणं वेत्ति यः सः वैयाकरणः, सनमवतोत्यवैयाकरणः व्याकरणप्रतिपादितपदार्थज्ञानानविरहितो वेत्यर्थः अन्धः अन्धतुल्य एव। तथाहि यथा अन्धः सत्स्वपि आलोकमवधानादिषु घटादिप्रत्यक्षयोग्येषु कारणेषु केवलेनेकेन चक्षुरिन्द्रियसन्निकर्षरूपकारणविरहितो न घटादिप्रत्यक्षं प्रपद्यते, तथैव सत्स्वपि बोधयोग्येषु मनः संयोगादिषु केवलेन भाषाबोधसाधकेन व्याकरणज्ञानेन विना न पदार्थान् परेण सुतरां बोधयितुमुपक्रान्तानपि प्रतिपत्तुं क्षमते इति

समवलम्बितस्य विषयस्य निर्गलितार्थः। सर्वासामेव भाषाणां बोधविषये समुपयुज्यते व्याकरणम्, अज्ञातव्याकरणतत्त्वः नाधिगन्तुमर्हति कथमपि तत्तद्भाषाणामर्थान्, अभिभूताश्च भवन्ति परैरुच्चारितासु अपि कथासु परेषामादेशादिविधौ सुतरामेव अगृहीततत्त्वाः नालं भवन्ति प्रभूनाप्यादेशपालनादिकं कर्म्म कृत्वा जीविकामपि अर्जयितुम्, तथाहि 'घटमानय' इति आदिष्टं प्रभुणा भृत्यं प्रति स च भृत्यः घटशब्दस्य तदुत्तर-द्वितीयाविभक्त्या आनयेति तिङन्तपदस्य च प्रतिपाद्यमनवधार्य्य, मातरं प्रति घटग्रहानुरोधं वा अवगत्य प्रकृतं घटानयनं न कुर्य्यात्, प्रभुश्च क्रुद्धः तं कार्य्याधिकारादवरोपयेत् इति। एवं श्रूयते शालिवाहनस्य व्याकरणमविजानतो निजपत्नीसमीपतः कृतसन्धिकस्य 'मोदकं देहि राजन्' इति वाक्यस्यस्य मोदक-मिति पदस्य प्रतिपाद्यनिर्द्धारणेन भूयान् निकारः, तदनन्तरमेव तस्य व्याकरणजिज्ञासया सर्ववर्म्मनिर्म्मितकलापाध्ययनेन व्याक-रणार्थपारदर्शिता, सर्वा एव भाषा नियन्त्रिताः प्रायेण व्याकरण-विधिषु अतएव तत्तन्नियमानविजानतामेकस्य स्थाने अपरस्य विनियोगे भवति भूयसोऽर्थस्य हानिः, प्रकृतवृत्तापरिज्ञानञ्च विदुषाम्। तदेवं क्रमेण व्याकरणज्ञानम् उपयुज्यते भाषाविधौ तेन विना अन्ध इव हस्तामर्षो न प्रकृतं तत्त्वम् अधिगन्तुमर्हति कोऽपि, अधिगतव्याकरणञ्च सर्वं यदेव शास्त्रं अध्येतुं प्रवर्त्ततां पाठार्थी तत्र तत्रैव प्रयोजनं व्याकरणस्य, अनेकेषामेव वर्त्तते धारणा, तथा यत् तर्कादिदर्शनशास्त्रेषु न उपयुज्यते व्याकरण-

ज्ञानं, वस्तुत: तन्मिथ्यैव, यतस्तत्रापि वर्त्तते भाषा, भाषामात्रञ्च व्याकरणसहायकेन अधिगन्तव्यम्, अन्यथा अध्यापकानां वचनमात्रमेव सर्वत्र सम्बलं स्यात्, न तु विस्मृतगुरुवृत्तान्तानां कथमपि परिस्फुरितुमर्हति प्रकृतविषयस्तत्त्वत: अधिगतव्याकरणानाञ्च भाषाविदां, गुरुवाक्यविस्मृतावपि भाषासहायकेन वर्त्तते प्रकृतविषयाधिगतिक्षमतेति भूयसा समालोचनेन शोभनमेव समर्थितं केनापि 'अवैयाकरणस्त्वन्ध:' इति कृतं पल्लवितेन।

---

## पक्षता-विषयिणी—

पक्षतानाम पक्षपदपरिभाषाविषयतावच्छेदकोऽनुमितिजनको धर्म:, नत्वनुमित्युद्देश्यत्वरूपम्। तादृशपक्षताया: अनुमितिजनकतावच्छेदकत्वास्वीकारस्य, सिद्धिकालीनानुमितिकारणसमाजात् सिषाधयिषाविरहदशायामनुमित्युत्पादवारणाय। तादृशी पक्षता च कस्यचिन्मते साध्यसंशयरूपा, कस्यचिन्मते इच्छाविशेषरूपा, कस्यचिन्मते सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपा, तत्र साध्यसंशयस्य पक्षत्ववादिनये आत्मासाक्षात्कारहेतुमननधाराया अनुत्पादापत्त्या तद्बोधकवेदस्याप्रामाण्यापत्ति:। इच्छापक्षतावादिनये च इच्छाया अविषयीभूतस्य शब्दसम्प्रदादेरनुमानोच्छेद:, इति तयो: पक्षत्वं न मणिकाराद्यभिमतम्। सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षत्वेन

तादृशदोषाणामनवकाशः, अतस्तादृशसिद्ध्यभावरूपपक्षतायामेव चिन्तामणिकारादीनां सर्वथा निर्णयः। तादृशसिद्ध्यभाव रूपपक्षतायां सिषाधयिषाया उत्तेजकत्वम्, तच्च तत्पक्षकतत्साध्यकतत्पक्षकतद्धेतुकानुमितत्वेनानुगतरूपेणैव उत्तेजकत्वं; अन्यथानुगतरूपेण तत्पक्षे तत्तदिच्छाविरहव्यक्तीनां परस्परविशेष्यविशेषणभावे विनिगमनाविरहेणानन्तकार्यकारणभावापत्त्या तत्तदिच्छाविरहव्यक्तीनां एकत्र द्वयं रीत्या युगपदेव सिद्धौ विशेषणं, तत्रापि सामानाधिकरण्यव्यक्तीनां निरूपकभेदेन भेदात् प्रतीच्छाविरहव्यक्तिभिन्नतयानन्तकार्यकारणभावापत्तिस्तदवस्थेति तत्तदिच्छाविरहाधिकरणव्यक्तेरनुगतेन निरूपितवृत्तित्वसम्बन्धेन सिद्धौ विशेषणम्। सिद्धिः साध्यवत्तानिश्चयः समवायः समवायसम्बन्धावच्छिन्नप्रतियोगिताकतदभावः समवायसम्बन्धेनानुमितौ आत्मनिष्ठो हेतुः। एतादृशसिद्ध्यभावस्य पक्षतास्वीकारे शाब्दसिद्धिदशायां मननस्य मोक्षोपायत्वज्ञानेन सिद्धिविशेषेच्छया पुनरेवानुमानं निष्प्रत्यूहं अनाकाङ्क्षितशब्दसम्पदादेरनुमानन्तु सिद्धिविरहरूपपक्षतासत्त्वे सुकरमेव। यत्पक्षकयत्साध्यकानुमितिः कस्यापि न जायते, तत्पक्षतत्साध्यकानुमितौ सिद्ध्यभावमात्रम् कारणम्, न तु तत्र सिषाधयिषा उत्तेजकत्वं वाच्यम्। पक्षसाध्यभेदेन पक्षतारूपकारणभेदस्यावश्यकस्वीकरणीयत्वात्। यत् साध्यकानुमितेः पूर्वं नियमतः तादृशानुमित्सा जायते, तत्साध्यकानुमितौ सिषाधयिषामात्रं कारणं लाघवात्, नतु तत्र तादृश-

गुरुतरसिद्ध्यभावात् कारणत्वं कल्पनीयं, यस्य पुरुषस्य यत् साध्यकानुमितिर्नियमतः परामर्शद्वितीयक्षणे जायते, तत्पुरुषीय-तत्साध्यकानुमितौ पक्षताया हेतुत्वाकल्पनेऽपि न क्षतिः, तत्र सिद्धिदशायामनुमित्यापत्त्यसम्भवात्। पक्षतायाः कारणत्वं कश्चिन्न स्वीक्रियते, तन्मतं न समीचीनं; पक्षता न कारणमिति तु भ्रमः इत्यादिना श्रीमता शिरोमणिना दूषितत्वात्।

---

## स्मृतिविषयिणी—

जगत्यस्मिन् मानवाः सर्वे एव निसर्गत इहामुत्र च इष्टमभीप्सवोऽनिष्टं परिजिहीर्षवश्च भवन्ति, परं न स्वरसत एव तदभिलषितं लब्धुं क्षमन्ते धर्ममन्तरा। धर्मलक्षणन्तु "धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयसाधन"मिति भविष्यपुराणादवगतम्। सत्येव सुखस्य साधनोपाये शतशः पुनरपायदर्शनात् बिभ्यतां तत् प्राप्तुकामानां धर्म एव समाश्रयणीयः। यथा हि हास्य-सम्वर्द्धमानं स्वागतसम्भाषणप्रापपल्लकमात्मानमभिलक्ष्य आह्वान-कारिकरक्रीडनकमिव तं प्रत्यभिमुखो भवति क्रूरदृष्टीन् तर्ज्ज-यतो बलवत उपलभ्य दूरादेव पलायते सर्वो जनः। तथा इतरः पश्वादिरपि प्राणभृद्वर्गः निसर्गत एव स्नेहाञ्जन-रञ्जित नयनं हरिततृणपूर्णपाणिमभिलक्ष्य तं प्रत्यभिमुखो भवति। कुटील-भ्रूकुटीभीषणान् दण्डोद्यतकरान् उपलभ्य प्रपलाय्यात्मानं

रक्षितुमीहते। इत्थमाहारनिद्रादिभिरपि अपरेषां प्राणिनां मनुजानाञ्च सत्यपि साम्ये एक एव परं धर्म्मः साधयत्येतेषां महदन्तरम्। अयमेव धर्मः संस्काररूपेण प्राणिनिकायमाकलयन् प्रेरयति प्राणिवर्गं स्वस्वकर्म्मानिवहेषु। ततः सर्वप्रयत्नेन पूर्वं पूर्वजन्मजनितसंस्काररक्षयसाधनं परम पदप्राप्त्युपायभूतं धर्म्मं समाश्रयितुकामेन अखिलनिगूढ़-वेदतात्पर्य्यपर्य्यालोचनपरम्परावाप्तस्थिरांशा मुनिजनयोगसन्ततिलब्धमर्य्यादा स्मृतिरेव शरणीकरणीया। यतः खलु निखिलधर्म्माचाराचरणभास्वरे भारते वर्षे परमकारुणिकैर्निगमागमपारावारपारीणैर्वैदिककर्म्मोपासनाज्ञानकाण्डधुरन्धरैः लोकोपकृतये स्मृतिशास्त्रसरणयः सादरं समाविष्कृताः। परं तेषु अनेकर्षिप्रणीततया परस्परविरुद्धत्वेन मौलीभूतश्रुत्येकवाक्यतावगताथयाथार्थ्येन मनोः स्मृतेः प्राधान्यं तथाहि—

"मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते।

वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम्॥" इति।

भवतु वा अन्यासां स्मृतीनां प्राधान्यं तत्र न काश्चिदस्माकं विप्रतिपत्तयः, यतः—"सम्भवत्येकवाक्यत्वे वाक्यभेदो न युज्यते" इति शास्त्रबलमालम्ब्य सर्वस्मृतीनामेकवाक्यतया येन सर्वपरिग्रहः स्यात्, तस्यैव ग्रहणमिति युक्त्या सर्वासामेव प्रामाण्यं परिगृहीतं प्रमाणतत्त्वज्ञैः। परममूषां स्मृतीनामुपर्य्ययमेवाक्षेपदण्डः, भण्डैः कैश्चित् शास्त्रतात्पर्य्यमजानद्भिः पात्यते तद्यथा—बलवद् विधिबहुलकर्म्मसु फलश्रुत्या प्रलोभयन्त्यः स्मृतयः

बहुव्ययायाससाध्ये कर्म्मणि प्रवर्त्तयन्त्यः प्रतारयन्ति मुधा मुग्धान् जनान्। प्रत्युत श्रुत्युदितकर्म्मानुष्ठानेन वासनाभिवृद्ध्या बन्ध-हेतुभूतकर्म्मपरम्परासु प्रवर्त्तन्ते जनाः। तदानीं नाङ्कुरेत् कैवल्यविषयिणी काचित् कथापि मनसि। श्रुतिरपीममर्थमनु-गृह्णाति "तद् यथेह कर्म्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत" इति। "ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्त्यलोकं विशन्तीति" स्मृतिरपि इममेवार्थ-मनुमोदते। "यत् कृतकं तदनित्यम्" इति व्याप्तिश्च श्रुतिस्मृ-त्योस्तात्पर्य्यमेतदेवेति वर्णयद्भिरेतर्हि तां वाग्भटीमारभ्य श्रुति-प्रणोदितकर्म्मणां क्षयित्वं प्रतिपाद्यते, तदपर्य्यालोचनविजृम्भित-मित्येवावधार्य्यते। तथाहि—

"फलश्रुतिरियं नृणां न श्रेयो रोचनं परम्।
श्रेयो विवक्षया प्रोक्तं यथा भैषज्यरोचनम्॥
पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकम्।
पित्वेव मुक्तः पिबति न फलं तावदेव हि॥" इति

विष्णुपुराणीयानुशासनात् यथा पथ्यसेवायाम् उत्कटानु-रागवशेनारोग्यमपि तुच्छमधिगच्छन्तः रोगिणोऽपथ्यप्रदानतोऽ-प्यौषधपाने प्रवर्त्तयितव्यास्तथैव विवेकविहीना बहुतरदुःख-शबलसुखमात्रलिप्सया अमृतमप्यवधीरयन्तः पुत्रपश्वादिफल-प्रलोभनेनेव प्रवर्त्तिताः क्लेशाकरकर्म्मसु स्मृतिविधिना। एवञ्च पुनः पुनरपथ्यसेवनेन विवृद्धिमापन्नस्य दोषनिवहस्यागदप्रयोगेण स्तोकशोऽपगमाद् यथा सुदीर्घकालेनाप्यारोग्यं सम्भाव्यं तथा

रागिणोऽपि तत् तत् फलभागावश्यम्भावात् दुष्कृतनाशस्याल्पशः सम्भाव्यमानतया सुचिरेणापि कालेन कैवल्यं सम्भवत्येव। ये पुना रोगिण आपातमधुरं रोगवृद्धिनिदानभूतमपथ्यमस्पृशन्तः स्वत एव पिबन्ति भेषज्यं, तेषां दोषवृद्धेरभावात् पूर्वसञ्चितदोषस्यागदेनापनयनात् सपद्यारोग्यं सम्भाव्यं, तद्वत् सुखखद्योतविद्योतनाकुलमपि दुःखदुर्द्दिनान्धकारितं संसारं व्यालविततफणच्छायमिव मन्यमाना विवेकवन्तो बन्धकारिणोभूतफलान्यवधीरयन्तः कर्म्मसु प्रवर्त्तमाना आहतपाप्मानस्तूर्णमेव लभन्ते कैवल्यम्। इति परमहंसं तर्कमनुसन्दधाना अवधानाय चित्तशुद्धिनिदानं स्मार्त्तं कर्म्मेति व्यवस्थापयति जनानुकम्पापरवशा स्मृतिः। तथा यथाविधिसंस्कारकर्म्मभिरपि बीजगर्भसमुत्पन्नपापप्रणाशेन विशुद्धसत्त्वप्रधानतया चित्तनैर्म्मल्यमाधीयते इति संस्कारकर्म्मसु सनिर्बन्धमनुरुध्यते जनमङ्गला भगवत्या स्मृत्या। तत्राह हारीतः—"गर्भाधानवदुपेतो ब्रह्मगर्भं सन्दधाति, पुंसवनात् पुंसवनात् पुंसीकरोति, फलस्थापनात् मातापितृजं पाप्मानमपोहति रेतो रक्तगर्भोपघातः पञ्चगुणो जातकर्म्मणा प्रथममपोहति, नामकरणेन द्वितीयं, प्राशनेन तृतीयं, चूड़ाकरणेन चतुर्थं, स्नापनेन पञ्चमम् एतैरष्टाभिः संस्कारैर्गर्भोपपद्यात् पूतो भवतीति।" इममेवार्थं समर्थयितुं दृष्टान्तयत्यङ्गिराः—

"चित्रं कर्म्म यथानेकरङ्गैरुन्मील्यते शनैः।
ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैः॥" इति

अहो ! दुर्दैवं ! ! यत् इत्थं धर्म्मकर्म्मकरणसामर्थ्यमपयच्छन्तं संस्कारमवधोर्य्याधुनिका यथेच्छमाचरितुं प्रायशः प्रवर्त्तन्ते जनाः। किं बहुना सर्वसंस्कारमौलिलालितं दिव्याङ्गसंस्कारमपोदानोन्मना विलासलालसाप्रशमनोपायं मन्यमाना अधःपातयन्ति स्वोयान् वंश्यान् यथाविध्यनाहितसंस्कारगर्भोत्पत्त्यादिना। अतस्तद्दोषप्रशमनकामैर्धर्म्माभिलाषुकैः संस्कारशुद्धौ सर्वथा यत्नो विधेयः।

अपि च नाममात्रावशेषस्मृतस्य किमपि परिग्रहीतुमसमर्थस्य श्राद्धादिविधयः केवलं कर्म्मसु रुच्यर्था न तत्र किमपि फलमुपलभामहे इत्युपहासशतैः स्मृत्युदितश्राद्धकर्म्मणि केषाञ्चिदाक्षेपावतारं भगवत्यः स्मृतयः समादधिरे। तथा हि नित्यस्य विभोरात्मनो विजातीयमनःसंयोगध्वंसः मृत्युरित्यभिधीयते। वस्तुतो देहविगमेऽप्यात्मनो विनाशाभावः।

"अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित् कर्त्तुमर्हति॥
अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।
अनाशिनोऽप्रमेयस्येत्यादिभिः सहस्रशः॥"

स्मृतिवाक्यैरवगम्यते। अतो विगतपूर्वदेहस्यापि पूर्वपूर्वजन्मजनिताहितसंस्कारस्य सूक्ष्मशरीरावच्छिन्नजीवस्य श्राद्धादिना तृप्तिरवश्यम्भाविनी। तथाहि विष्णुपुराणम्—

"श्राद्धासमन्वितैर्दत्तं पितॄणां नाम गोत्रतः।
यदाहारास्तु ते जातास्तदाहारत्वमेति तत्॥"

तथा मत्स्यपुराणम्—

"देवो यदि पिता जातः शुभकर्म्मानुयोगतः।
तस्यान्नममृतं भूत्वा देवत्वेनानुगच्छति॥
दैत्यत्वे भोगरूपेण पशुत्वे च तृणं भवेत्।
श्राद्धन्तु वायुरूपेण नागत्वेऽप्युपतिष्ठते॥
दनुजत्वे तथा मद्यं प्रेतत्वे रुधिरोदकम्।
मनुष्यत्वेऽन्नपानादिनानाभोगरसं भवेदिति॥"

तथा तेषां तृप्तये प्रतिसम्बत्सरीयमृताहनिमित्तकश्राद्धमप्युपदिशन्ति भविष्यपुराणप्रभासखण्डप्रभृतयः—

"मृताहनि पितुर्य्यस्तु न कुर्य्यात् श्राद्धमादरात्।
मातुश्चैव वरारोहे! वत्सरान्ते मृताहनि॥
नाहं तस्य महादेवि! पूजां गृह्णामि नो हरिः॥" इति

तथाकरणे दोषश्रुतिमपि दर्शयति मरीचिः—

"पण्डिता ज्ञानिनो मूर्खाः स्त्रियोऽथ ब्रह्मचारिणः।
मृताहं समतिक्रम्य चाण्डालेष्वभिजायते॥" इति।

इत्थमगणितमुपदेशमनुसन्दधाना स्मृतिरपौरुषेयश्रुतिवाक्यगतगूढार्थमुद्घाटयन्ती सर्वथानुगृह्णात्यस्मान् जड़मतीनपि कर्मसु प्रवर्त्तयति। अतः स्मृतिमन्तरा धर्म्मप्रच्युतिरवश्यम्भाविनीति सर्वप्रयत्नेनास्माकमनुसरणीयेति शम्।

वेदान्तविषयिणी—

स्थूलतो वेदस्य द्वौ विभागौ कल्प्येते—कर्म्मकाण्डो ज्ञानकाण्डश्चेति। तस्य प्रथमे भागे सकामयज्ञादिकर्म्मणः, शेषे च परमार्थज्ञानस्योपदेशः प्रधानतो लक्ष्यते। यद्यपि ज्ञानकर्म्मणोरुभयोरेव परम्परोपकार्य्योपकारकभावेन कैवल्यसाधकत्वमस्ति, तथापि कल्पितप्रतिभागस्य प्रथमांशे यज्ञादेः प्राधान्यं लक्षीकृत्य पूर्वभागः कर्म्मकाण्डप्रधानः सकामप्रवृत्तिमार्गप्रदर्शकः, परभागे च परमात्मज्ञानस्योपदेशप्राधान्यं दृष्ट्वा तत् कैवल्यमार्गस्योपायभूत इति सङ्गिरन्ते वेदविदः। तस्य तावदेतौ द्वौ भागाववलम्ब्य द्वे प्रधाने दर्शने रचिते। एकं जैमिनिकृतं पूर्वमीमांसादर्शनमपरं महर्षिर्बादरायणकृतमुत्तरमीमांसादर्शनं वेदान्तदर्शनं वा। यज्ञादिकर्म्मणा कालक्रमेण मोक्षः समजायत इति जैमिनिन्यायः। व्यासश्च 'सकामयज्ञादिकर्म्मभिः मोक्षः कदापि न साध्यः' यतो हि—

"न जातु कामः कामानामुपभोगेन शाम्यति।

हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥" इति।

यद्यपि यज्ञादिना उत्तरोत्तराणि उत्तमोत्तमानि लोकादीनि, आभूतसंप्लवरूपञ्च अमृतत्वमपि लभन्ते, तथापि केनापि प्रकारेण आत्यन्तिकदुःखनाशककैवल्यप्राप्तिस्तु न भवेत्, यतः श्रुतिराह—"क्षीणे पुण्ये मर्त्यलोकात् च्यवन्ते।" यच्च वेदस्य

परभागे परमात्मज्ञानं प्राधान्येनोपदिष्टं, न तावत्तत्र कस्यचित् मतविरोधलवोऽपि। तस्य शेषभाग उपनिषदिति नाम्ना प्रस्तूयते। उपनिषद् वेदान्तश्च एकपर्य्यायवाचकः शब्दः। वेदान्त-शब्दस्य तावदर्थत्रयमाहुरार्य्यपादाः—वेदानाम् अन्तः वेतान्तः। अत्र किलाभिधानिको हेमचन्द्रस्तत्कृताभिधाने तमेवार्थं समर्थयामास ; केचिच्च—वेदानाम् अन्तः चरमोद्देश्यः प्रदर्शितो यत्र स एव वेदान्तः। अपरे वेदस्य ज्ञानस्य अन्तः परमात्मसाधनरूपचरमोत्कर्षः प्रदर्शितो यत् स वेदान्त इति। मतत्रयस्य साम्यार्थबोधकत्वात् न तद् विचारसहम्। वेदान्तशब्दस्य यौगिकार्थो यथा भवतु वा, प्राचीनकालादद्यावधि वेदविद्भिर्महामहोपाध्यायैर्वेदान्तशब्देन उपनिषदभिहिता।

तेषां खलु पूर्वाचार्य्याणां केचिद् गौणमुख्यभेदेन वेदान्त-शब्दस्य अर्थद्वयं कल्पयित्वा मुख्यतः उपनिषदं गौणतश्च उपनिषद्-भित्तिकानि अन्यानि शास्त्राणि निर्दिशन्ति। केचिद्वा उप-निषद्वेदान्तदर्शनभगवद्गीतात्मकं प्रस्थानत्रयं 'वेदान्तः' इत्या-मनन्ति। केऽपि आर्य्यमिश्राः वेदान्तशब्देन प्रधानतो व्यासकृतं वेदान्तदर्शनमाकलयन्ति। यथाह वेदान्तसाररच-यिता परमहंसः सदानन्दो वेदान्तसारे "वेदान्तो नाम उप-निषत्प्रमाणं, तदुपकाराणि शारीरकसूत्रादीनि च।" तस्य टीकाकारः नृसिंहसरस्वती च अस्मिन्नुपष्टम्भे सुबोधिनी-टीकायां—वेदान्तनामेति उपनिषद एव प्रमाणम्; उपनिषदो यत्र प्रमाणमिति वा। तदुपकाराणि वेदान्तवाक्यसंग्राहकाणि

"अथातो ब्रह्मजिज्ञासा" इत्यादीनि सूत्राणि आदिशब्देन भगवद्गीताद्यध्यात्मशास्त्राणि गृह्यन्ते, तेषामुपनिषच्छब्दवाच्यत्वादिति भावः। तस्यान्यतमटीकाकारो विद्वन्मनोरञ्जिन्यां ब्रह्मात्मप्रतिपत्तिपरेषु श्रुतिसूत्रेषु विद्वज्जननिर्मितनिबन्धेषु चाविशेषणवेदान्तशब्दस्य लोके प्रयोगदर्शनात् सर्वत्र मुख्यवृत्तितः प्रतीतिं वारयन् मुख्यगौणभेदेन वेदान्तशब्दं व्युत्पादयन्ति वेदान्तो नाम इत्यादिना। वेदान्तशब्दस्य पुनः प्राचीनत्व परिकल्पनमसम्भवम्। आधुनिकाः पाश्चात्त्यपण्डिताः पञ्चसहस्रवर्षपूर्वां महाभारतस्य कालं इत्यङ्गीकुर्वन्ति। उपनिषत् तद्बहुसहस्रशो वत्सरपूर्विकेति क्व तावदत्र सन्देहः? केचिद् विंशसहस्रवत्सरपूर्वां केचिद्वा दशसहस्रवर्षदेशीयेति प्रस्तुवन्ति अतोऽत्र वयमुदासीनाः श्रुतावुल्लेखत्वात् तत्समयनिरूपणमसाध्यम्। अत्र तावद् यानि दर्शनषट्कानि सुप्रचलितानि वर्त्तन्ते। तेषु किमपि दर्शनं न मूलतः स्वाधीनम्। सर्वाण्येव उपनिषन्मूलकत्वात्। वेदान्तदर्शनञ्च प्राधान्येन श्रुतिप्रमाणं, श्रुतिसमन्वयं, श्रुतेः समीचीना व्याख्या वेति वक्तुमलं स्मः। अस्मिन् किल सृष्टितत्त्वेश्वरस्वरूपजन्मान्तरतत्त्वादिनिरूपकविविधविषयज्ञानं ब्रह्मज्ञानञ्च सुष्ठु पर्य्यालोचितम्। अवाङ्मनसगोचरस्य तद्ब्रह्मणो नान्वयेन व्यतिरेकेण वा केनापि दृष्टान्तेन वा विशेषणेन वा स्वरूपं वेद्यम्। तथा च श्रुतिः—

"यद्वाचा नाभ्युदितं येन वागभ्युद्यते।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥

यन्मनसा न मनुते येनाहुर्मनो मतम्।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥
यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम्।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥
यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥"

कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा। येन वा रूपं पश्यति, येन वा शब्दं शृणोति, येन वा गन्धानाजिघ्रति, येन वाचं व्याकरोति, येन वा स्वादु चास्वादु च विजानाति। यदेतत् हृदयं मनश्चैतत् संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा-दृष्टिर्धृतिर्मतिर्मनीषा ज्योतिः स्मृतिः सङ्कल्पः क्रतुर्ध्यं कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति।

"अशब्दमस्पर्शमरूपमव्ययं
तथा रसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥
न तत्र सूर्य्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥

ब्रह्मप्रतिपादकाभिराभिः श्रुतिभिः कथञ्चित् ब्रह्मस्वरूप-ज्ञानं घटेत; परं निर्गुणस्य तस्य न किमपि कार्य्यञ्चास्ति तथाहि—

न तस्य कार्य्यं करणञ्च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥
अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम् ॥
न तस्य कश्चित् पतिरस्ति लोके
न चेशिता नैव च तस्य लिङ्गम् ।
न कारणं करणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः ॥"

सगुणेऽप्यत्र सर्गादिकार्य्यजातकर्तृत्वमधिक्षिपन्ति तत्रभवन्तो महर्षयः तथाहि—"आत्मा वा इदमेक एवाग्र आसीत् । नान्यत् किञ्चनमिषत् स ईक्षत लोकान् नु सृजा इति। स इमान् लोकान् असृजत। ऋतञ्च सत्यञ्चाभीद्धात् तपसोऽध्यजायत ततो रात्र्यजायत ततः समुद्रोऽर्णवः। समुद्रादर्णवादधिसम्वत्-सरोऽजायत अहोरात्राणि विदधत् विश्वस्यमिषतो वशी। सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवञ्च पृथिवीञ्चा-

न्तरीक्षमधः स्वः।" इति क्षुद्रतमेऽस्मिन् प्रबन्धे विस्तरशो वेदान्तविषयप्रतिपादनमसम्भवम्।

अनतिप्रसरे प्रबन्धे उपनिषत्प्रतिपाद्यं ब्रह्मस्वरूपादि-कीर्त्तनमङ्गुल्या समुद्रपरिमाणवत् सम्पूर्णमुन्मत्तचेष्टितम्। अतस्तु हन्त! वयं प्रतिनिवृत्य सर्वोपनिषत्सारं प्राचीनवचनं संस्मृत्य प्रतिनिवृत्ता भवामः—

"श्लोकार्द्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः।
ब्रह्मसत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः॥" इति।

---

## पाणिनिव्याकरणविषयिणी

इह किल भारते वर्षे सकलदर्शनानां प्रचारे सत्यपि साम्प्रतं वेदाङ्गेषु प्रधानमिति च व्याकरणं विद्वद्भिरतीवाद्रियते। तच्च व्याकरणं प्रथमतो वैदिकशब्दनिबन्धमुपजीव्य शाब्दिकशिरो-मणिभिः शाकटायनापिशलिगार्ग्यगालवस्फोटायनप्रभृतिभिः प्रणीतं वैदिकशब्दव्युत्पादकमासीत्। कालक्रमेण तस्मिन्नेव व्याकरणे विरलप्रचारतया तिरोहिते, भगवता पाणिनिना तेषां वैयाकरणानां मतमाकृष्य लौकिकानां तथा वैदिकानामपि अनुशासनं सङ्गमय्य सर्वेषां साम्प्रदायिकानामुपयोगिपरम-रमणीयमेतद्व्याकरणं निरमायि। इदानीं प्रचलितेषु शब्दानु-

शासनेषु इतोऽन्यत् नास्ति प्राचीनतमं व्याकरणमिति अविसंवादि मतम्।

केऽपि खलु मन्यन्ते इदमेव व्याकरणानामग्रग्रम्; तत्तु न श्रद्धेयं सहृदयानाम्। यतो हि 'त्रिप्रभृतिषु शाकटायनस्य।' ८।४।५। 'वा सुप्यापिशलेः।' ६।१।६ । इत्यादिसूत्रपाठेन स्फुटत एव प्रतिभाति यन्महर्षेरूर्द्धतने काले वर्त्तन्तेऽप्यन्ये वैयाकरणाः, नचेत् कथं तेषां नामानि सूत्रेषु विनिवेशितानि तत्रभवता महर्षिणा पाणिनिना। अपि च मुग्धबोधनिर्म्माता वोपदेवेन स्वनिबन्धकविकल्पद्रुमोपक्रमे ये चाष्टौ शाब्दिकमुख्या निर्द्दिष्टाः; तेषु पर्य्यायेण आपिशलेश्चतुर्थत्वेन शाकटायनस्य पञ्चमत्वेन विनिर्द्दिष्टतया केश्चिदेवमेवानुमीयते यत् प्राचीनतातारतम्येन तस्य तथाविधो निर्द्देश इति। एवमपि गोय्यते तैः ख्रीष्टजन्मतः पूर्वं चतुःसप्तत्यधिकचतुःशततमो वर्ष उत पञ्चसप्तत्यधिकचतुःशततमो वर्षो वा एतस्य व्याकरणनिबन्धकारस्य समयः। कृतं संप्रति तदालोचनयास्माकम्।

एतदेव व्याकरणं यदतिमात्रं विमोहयति विदुषस्तत् सर्वथैवायमवितर्कितः सिद्धान्तः। एतस्यैव व्याकरणस्य तावत् वर्त्तन्ते सूत्रपाठो गणपाठो धातुपाठो लिङ्गानुशासनञ्चेति चत्वारो विभागाः, किन्तु तदेव हि व्याकरणं शिक्षाविषये नातिपर्य्याप्ततया न्यूनांशपरिपूरणेनात्यन्तावश्यकाक्षेपसमाधिप्रदर्शनेन च मुनिना कात्यायनेन संपादितकल्पवैशद्यमपि विस्तृतेन व्याख्यानेन भगवता भाष्यकारेण पतञ्जलिना सुपरिष्कृतं विजयतेतराम्। क्रमेण

संप्रदायस्य विरलभावेन भाष्यस्य गूढाशयतया तत्रत्यानामभ्युपगमवादानामेकदेशिवादानां सिद्धान्तवादानाञ्च दुरूहतया मन्दमतीनां ततोऽभीष्टसिद्धावन्तरायमालोच्य सरलान् निबन्धान् निर्मिन्वता सर्वांचां विभिन्ना विभिन्ना शैली लक्ष्यते ।

केचन सूत्रपाठक्रमेण व्याचख्युस्ततः शब्दसिद्धौ भूयांसं विलम्बमवगम्य तच्छब्दसाधुत्वोपयोगिनां भिन्नभिन्नप्रकरणपठितानामपि वचनानामेकत्र सङ्कलनपूर्वकं चापरे तेऽपि धातुपाठे व्यत्यासकरणे विशेषमलभमानास्तं तथैवोददीधरन् । वेदभाष्यकारः निखिलविद्वन्माननीयमनीषी सायनाचार्य्यस्तु 'शब्दयोनिश्च धातवः' इत्यभियुक्तोक्तिं सर्वनाम धातुजमाह शकटस्य च स्तोकमिति भाष्यकारोक्तिं च मनसीकृत्य सर्वानेव शब्दान् साक्षात्परम्परया वा धातुप्रकृतिकानेव मन्यमानो धातुपाठमेव मुख्यस्थाने प्रकल्प्य तद्व्याख्यानक्रमेण तिङन्तरूपाणि कृदन्तरूपाणि तत एव सुबविभक्तितद्धितादिप्रत्ययांश्च पर्य्यदर्शयत् । तद्भाष्यकारादिवचनानुरूपा वर्त्तन्ते च तावदेतस्य बहवो मान्यविद्वद्वरप्रणीता महान्तो निबन्धास्तथापि व्युत्पत्तिसौकर्य्यानुरोधेन विद्वत्कुलतिलकपदवाक्यप्रमाणपारावारीणभट्टोजीदीक्षितविरचिता सिद्धान्तकौमुदी विद्वज्जनमानसकैरवकौमुदीव पठनपाठनादिप्रचुरप्रचारा सर्वैरेव विद्वद्वरैरत्यन्तमुपकारिणीति शिरसाद्रियते ।

एतस्य पुनः सन्ति यावन्ति भाष्यटीकाटिप्पनादीनि परश्शतान्यपि न तावन्ति कस्यापि शब्दानुशासनस्य प्रचुरतया

परिकल्पितानि आचार्य्यपादैः। परं एतदधीयानानां करतला-मलकवत् निखिलशास्त्रार्थोपपत्तेः सुलभतया प्राधान्यमस्य सर्वै-रेव स्वीकरणीयम्। सुरतामितदेव व्याकरणं किं प्राचीनत्वेन किमार्षत्वेन वा विजयतेतरां स्वगौरवमहिम्नात्र जगति। परमे-तस्य समधिकदोषगुणकीर्त्तनपूर्विका समालोचना दुःसाध्या बाहुल्यसापेक्षा चेति गौरवभिया उज्झिता स्वल्पयैव वाचा। अतः परं सूक्ष्मदर्शिगुणग्राहिणः प्रति एतस्य विचारणभार-समर्पणमेव विधेयं गवेषणीयञ्च तैरित्यलं शाखाचंक्रमणेन।

---

## कलापविषयिणी

इह खलु व्याकरणं नाम शब्दानुशासनम् "अथ शब्दानु-शासनम्" इति भाष्योक्तेः। अपि च 'एकः शब्दः प्रयुक्तः सम्यग्-ज्ञातः स्वर्गे लोके च कामधुग् भवति।' इत्यादि श्रुतिवाक्ये-भ्यश्च सुप्रतीतमेव शिष्टशब्दानामुपादेयत्वम्। व्याकरणानि तावत् बहुनि वर्त्तन्ते, तानि च प्रदेशभेदेन आद्रियन्ते लोकाः। काश्यादिप्रदेशेषु पञ्चनदादिस्थलेषु च पाणिनीय-सारस्वतयोः समधिकादरः। वङ्गेषु क्वचित् संक्षिप्तसारस्य क्वचिदपि सुपद्मस्य क्वचिदपि वा मुग्धबोधस्य कुत्रचित् प्रदेशे रत्नमालायाः कुत्र-चिदपि कलापव्याकरणस्य पठनं पाठनञ्च प्रचलति। एषु पाणिनीयस्य ऋषिप्रणीततया भगवतः पतञ्जलेर्भाष्यकृतत्वेन

परं छन्दोऽंशेन च व्याकरणानामग्रमङ्गीक्रियते सहृदयैः। किन्तु रचनापारिपाट्येन शृङ्खलोपनिबन्धनेन च निरसेषु व्याकरणेषु कलापव्याकरणं सनातनमिति नास्त्यत्र क्रियानपि सन्देहावसरः क्षुद्रोऽपि।

संक्षेपेणेह लौकिकानि पदानि व्युत्पादयिषुणाचार्य्येण सर्व्ववर्म्मणा कलापापरनामधेयं कातन्त्रं नाम व्याकरणं प्रणीतम्। आख्यातान्तं विरच्यान्यत् प्रसिद्धत्वादुपेक्षितम्। तच्चार्य्येण कृदन्तशब्दजातं कात्यायनेन व्युत्पादितम्। भगवता दुर्गसिंहेनाचार्य्यसूत्राणां कात्यायनसूत्राणाञ्चोपरि समीचीना वृत्तिर्व्यरचि। सैवेदानीं पठनपाठनयोः प्रचरति। कात्यायनः किल कतिचित् छान्दसानि कृदन्तपदान्यपि व्युत्पादितवान्। कृदन्तभिन्नानां छान्दसानां पदानां कृदन्तानामपि सर्व्वेषां छान्दसपदानां व्युत्पादनं कातन्त्रव्याकरणे न विद्यते, कात्यायनो हि लोके यानि प्रयुज्यन्ते तान्येव छान्दसानि पदानि व्युत्पादयामास न सर्व्वाणि।

ततो निखिलशब्दार्थशास्त्रपारंगतेन महात्मना श्रीपतिदत्तेन तदवशिष्टानि कलापपरिशिष्टानि निर्म्माय लघुवपुः कलापः किञ्चित्स्थौल्यमनायि। हा! हा!! किं दुर्भाग्यं कालापिकानाम्? सन्धितः समासस्य कति सूत्राणि संरचयन् निर्म्ममकालेनाग्राहि स पुरुषवर्य्यो महात्मा श्रीपतिदत्तः। ततः प्रभृति असंपूर्णमासीत् कलापकायः। साम्प्रतञ्च महामहोपाध्यायेन श्रीमता चन्द्रकान्ततर्कालङ्कारेणास्य छान्दसप्रकरणं

प्रणीय पाणिनेरविशेषः अन्वष्ठायि। निखिलदोषोपस्कारिणी च सलक्षणा या भाष्यैरप्यनिन्दिता कलापचन्द्राख्या टीकास्मिन् आचार्य्यपादेन सुसेननाम्ना निरमायि। तादृशी विद्वज्जनगण-मनोहारिणी विचारभावपरिशुद्धा सिद्धान्तसन्दोहनी टीका केष्वपि व्याकरणेषु न विद्यते। तथाहि आचार्य्याः—

"नत्वा शिवं कृतिकृतामनिबन्धसिन्धुमुन्मथ्य सूक्तिमय-
चारुपयः प्रबन्धम्
ज्ञात्वा गुरोर्विबुधवृन्दविनोदनाय कामं तनोति विकलङ्क-
कलापचन्द्रम्।
श्रीमत्त्रिलोचनकृताखिलपञ्जिकायां दोषान्धकार-
निकरं प्रतिपच्चदत्तम्
निःसार्य्य सत्पथगतेरपि दर्शकोऽयं कामं भविष्यति
मदीयकलापचन्द्रः॥"

अपि च पाणिनेर्यथा आर्षत्वेन प्रामाण्यं कलापस्यापि तथैवदैवतत्वेन प्रामाण्यमवश्यमेव स्वीकरणीयम्। यथा—

"शङ्करस्य मुखाद्वाक्यं श्रुत्वा चैव षडाननः।
लिलेख शिखिनः पुच्छे कलाप इति कथ्यते॥"

इत्युक्तेः एतद्व्याकरणं पुनः कुमारवक्त्रान्निर्गलितत्वेन कौमारनाम्ना ख्यातम्। अस्ति तावत् आख्यायिका कथासरित्-सागरे—"आचार्य्यो निराहारकृच्छ्रं तपश्चरन् तुष्णीभूय किञ्चित् गते तपःक्लिष्टतया निःसञ्ज्ञो धरणीतलं पपात। ततः शक्तिहस्तो दिव्यपुरुष एकः समागत्य—'हे पुत्र! सर्व्वं ते स्फुटं

सम्पत्स्यत' इत्यवोचत्। अथ तेनामृतासारसंसिक्त इव तत्क्षणं प्रबुद्धः क्षुत्पिपासादिरहितः स्वस्थो बभुव। ततो भगवान् स्कन्दस्तं 'सिद्धो वर्णसमाम्नायः' इति सूत्रमवादीत्। तत् श्रुत्वा आचार्य्यो मनुष्यचापल्येनोत्तरसूत्रं व्याजहार। तदाकर्ण्य शक्तिधरः सविमर्षमाचष्ट—'अहो! यद्यपि त्वमुत्तरसूत्रं नावदिष्यस्तर्हि पाणिनियोपमर्द्दकमेतत् शब्दशास्त्रमभविष्यत्' इति।" तथाहि—

"अथाब्रवीत् स देवोमां नावदिष्यः स्वयं यदि।
अभविष्यदिदं शास्त्रं पाणिनीयोपमर्दकम्॥
अधुना स्वल्पतन्त्रत्वात् कातन्त्राख्यं भविष्यति।
मद्वाहनकलापस्य नाम्ना कालापकं तथा।
इत्युक्त्वा शब्दशास्त्रं तत् प्रकाश्यामि नवं लघु॥" इति

एतस्य पुनः वृद्धत्वमप्यवश्यमेव स्वीकर्त्तव्यं सभ्यानाम्। येन हि गरुड़पुराणादावपि प्रामाणिकग्रन्थेऽस्योल्लेखो वर्त्तते। तथाहि—

"कुमार उवाच—अथ व्याकरणं वक्ष्ये कात्यायनसमासतः।
सिद्धशब्दविवेकाय बालव्युत्पत्तिहेतवे॥"

इत्यादि वाक्यसन्दर्भेण। अपि च—"आधारकर्म्मविहिते द्विविधे च क्यचि क्यङि इत्यादौ क्यच् क्यङ्णमुलः कलापमते यिनाप्यणमः" इति दर्पणकारोक्तेरप्रतिहत एवास्माकं सिद्धान्त इति किं बहुना वाक्प्रपञ्चेन।

---

# मुग्धबोधविषयिणी

सन्ति यावन्ति शब्दशास्त्राणि तेषु संक्षिप्तरचनाकौशलेन मुग्धबोधमेवान्येभ्यः सविशेषादरास्पदमलंकृतमिति नास्ति तत्र कियानपि विकल्पः। तत्पठनपाठनयोः स्वल्पदिनसाध्यत्वेन नीरसमप्येतद्व्याकरणमाकर्षत्यतिमात्रं चेतः सहृदयानाम्। विशेषतः कारकप्रकरणं कृदन्तांशश्चामुष्य निरुक्तमत्वेन समधिकमाद्रियन्ते महनीयगुणग्रामा महान्तः। तद्धि शब्दार्थपारंगतोवन्दनीयपदारविन्दो महात्मा वोपदेवः स्वयमिन्द्रचन्द्राद्यखिलशाब्दिकमतमुदधिमालोड्य तस्मात् महार्घमणिनिचयवदुपादेयवचनजातमाहृत्य तदायासमङ्गीकर्त्तुमशक्तानां संक्षेपतो व्याकरणबोधलिप्सूनां तदुपहारेण महोपकारमकरोत्। आह स्म स्वयञ्चास्य पठनीयतामुल्लेख्य—

"गीर्वाणवाणीवदनं मुकुन्दसंकीर्त्तनञ्चेत्युभयं हि लोके।
सुदुर्लभं तच्च न मुग्धबोधान्नलभ्यतेऽतः पठनीयमेतत्॥" इति

तस्यैवाचार्य्यचक्रचूड़ामणेरपराकृतिः कविकल्पद्रुमो नाम धातुपाठः। स हि कवीनामभीष्टफलदातृतया कविकल्पद्रुम इत्यन्वर्थनामधेयो धातुपाठः, यथा तदुपयोगित्वेन सकलवैयाकरणसंप्रदायेषु समानादरं लभते। उक्तञ्च केनापि वोपदेवगुणग्राहिणा—

"दीर्वाचस्पतिनेव पन्नगपुरी शेषाहिनेवाभवत्
येनैकेन विदुष्मती वसुमती मुख्येन संख्यावताम्।

सोऽयं व्याकरणार्णवैकतरणिश्चातुर्य्यचिन्तामणिः
जीयात् कोविदगर्व्वपर्व्वतपविः श्रीवोपदेवः कविः ॥" इति

अस्य तावद्व्याकरणस्य द्वे टीके स्तः। एका श्रीमद्दुर्गादासविद्यावागीशकृता। अपरा च परमविदुषा महानुभवेन श्रीमता श्रीरामतर्कवागीशेन विरचिता। अनयोस्तर्कवागीशटीकाया एव समधिकादरो दृश्यते। शाब्दिकमुख्येन श्रीमन्नन्दकिशोरचक्रवर्त्तिना पुनर्विरचितं मुग्धबोधपरिशिष्टं नामापरमत्युपादेयमेकं परिशिष्टमेतद्व्याकरणस्य।

स खलु शब्दार्थविज्ञानधुरीणो वोपदेवः कस्मिन् समये कतमं देशं जन्मनालङ्कृतवान् तद्यथावदवधारयितुं न शक्यते। परन्तु प्रत्नतत्त्वान्वेषिणः कतिशः कृतिनो मानवाः द्वादशोत्युत्तरैकादशशततमशकसंवत्सरे द्विचादिवत्सरन्यूनाधिके वा स किल महात्मा भिषग्व्यवसायिनः केशवनाम्नो विप्रात्मजजन्मा विदुषो धनेश्वरमिश्रादधिगतविद्यो दक्षिणापथवर्त्तिन्या अधुनातन 'दौलातवाद' इत्याख्याया देवगिरिराजधान्या अधिपतेर्महादेवस्य सभापण्डितपदमास्थाय तत्रावासीदिति निर्णीतवन्तः। चतुर्व्वर्गचिन्तामणिनिबन्धकारो हेमाद्रिरपि तस्यैव राज्ञः समस्तकरणाधीश्वरः प्रधानामात्यपदमध्यासितः। तेन सह वोपदेवस्य परं सौहार्दमासीत्। तेन प्ररोचितः स हरिलीलाख्यं मुक्ताफलनामधेयञ्च भागवतव्याख्यानं निबबन्ध। तथा हि तत्र हरिलीलाटीकायां—'मन्त्रिहेमाद्रितुष्टये' मुक्ताफलग्रन्थे च,—

'विद्वद्धनेशशिष्येण भिषक्केशवसूनुना।

हेमाद्रिर्वोपदेवेन मुक्ताफलमचीकरत् ॥'

इत्यनेनान्योन्ययोः परं सौहार्दं स्मारयतीति। एवं नाम अस्ति तावद्वोपदेवसम्बन्धिनी कापि परमाद्भुता किंवदन्ती—वोपदेवो बाल्ये वयसि व्याकरणमधीयानो दुर्मेधतया व्याकरणार्थं मनागपि स्वायत्तं कर्त्तुं नाधिशशाक। ततश्चैकदा परिजनतिरस्कृतेन परमनिर्वेदं गतो जीवनपातार्थमरण्यमेकं विवेश। तत्र मार्गगमनजनितक्लेशेन क्लिश्यन् जलं पातुं सरसीमेकां गत्वा पीत्वा च सलिलं श्रमोपनोदनार्थं तस्य सुरम्यसोपानशिलातलमुपावसत्; तत्र क्षणे कलसमुद्वहन्ती कापि रमणी सहसागत्य सोपानशिलायां तमेव कलसमास्थाप्य सम्पादितस्नाना तं कलसमुदकेन पूरयन्ती भूयो गृहमगात्। तदपश्यद्वोपदेवः पाषाणनिर्मितमपि सोपानं नारीनिहितमृण्मयकलससंसर्गेण क्षयमेत्य गोलाकारो गर्त्तक एकः संवृत्त इति। तत् समीक्ष्य च तस्याध्ययने पुनः प्रवृत्तिरभवत्, यत् कठिनमपि ग्रावनिर्मितसोपानं बहुवासरतो बहुशो मृद्भाण्डघर्षणेनापचयं यातम्। तस्मान्ममापि मतिर्मे मुहुरालोचनयावश्यमेव तीक्ष्णतामापत्स्यति। ततो गृहमागत्य कृतोद्यमेन तेनाधीत्य स्वाभीष्टफलमापेदे। केऽप्याहुः श्रीमद्भागवतमपि तेन वोपदेवेन निर्म्माय वेदव्यासनाम्ना प्रक्षिप्तमिति। भवतु तद्वा न वेति तत्र न किञ्चिद्वक्तुं मामकानामवकाशः। किन्तु स यदिदमपक्वितमल्पसमयसमापनीयं विबुधमुखमण्डनं मुग्धबोधं नाम व्याकरणं प्रणीयासाधारणीं शक्तिं प्रकटयामास, तेनैव विमुग्धा

विदग्धाः। तत्कृतौ किमपि वक्तुं नालमलम्। परं यावत् भवति रात्रिन्दिवं यावदुदेति च चन्द्रमास्तावदेव तस्य पुण्यकोर्त्तिरिदं व्याकरणमधीयानानां निःश्रेयसमार्गमुपदेच्यतीति किं बहुवाक्योपन्यासेन।

---

## सांख्यविषयिणी

आत्मानुसन्धानमन्तरेण दर्शनशास्त्रे प्रवृत्तिर्न जायेत। कोऽहमासं किं भविष्यामि, किं मे स्वरूपमिति केन वा रूपेण विश्वस्य सृष्टिरभूत्? कथं वास्य प्रलयो भवेत्? जन्ममरणादिदुःखमात्मनः स्वभावसिद्धो न वा? तदुच्छेदोपायः सम्भवोऽस्ति न वा? इत्यादयो बहवः प्रश्नाः मनीषिणां चेतसि स्वत एव समुत्पद्यन्ते। त एव प्रश्नाः चिन्ता वा मननशास्त्रस्याविर्भावे हेतुः। प्रवर्त्तमानेऽस्मिन् क्षुद्रे प्रबन्धे कापिलदर्शनानुसारेणैवामीषां प्रश्नानां सूक्ष्मसिद्धान्तः न संक्षेपेण सम्भवति। स्थूलत एव तत्र 'प्रकृतिपुरुषयोरन्यत् सर्व्वमनित्यम्' इत्युच्यते आचार्य्यपादैः। पुरुषो निर्गुणश्चेतनो विभुरनेकश्च। प्रकृतिरचेतना विभुरेका परिणामस्वभावा च। पुरुषसन्निधानतया अस्या जगदाविरासीत्। उपादानकारणगुणानुसारेण कार्य्यद्रव्येषु गुणाः समजनि तथा च 'कारणगुणाः कार्य्यगुणानारभन्ते' इति। अतः कार्य्यगुणानुरोधेन कारणगुणकल्पना प्रामाणिकानां न

दुःखावहाः। दृश्यन्ते कार्य्यवर्गेषु ज्ञान-सुखप्रसाद-प्रवृत्ति-दुःख-मोहावरणादयोऽनेके गुणास्तदनुसारेणैव मूलकारणे प्रकृतावप्येते गुणाः नूनमेव विद्यन्त इति कल्पनाप्रमाणकुशलैर्विद्वद्भिः स्वीचक्रे। सत्त्वरजस्तमसां साम्यावस्थोपलक्षिता हि सा प्रधाना तथा हि—

"सत्त्वं रजस्तम इति गुणत्रयमुदाहृतम्।
साम्यावस्थितिरेतेषामव्यक्तां प्रकृतिं विदुः॥" इति

सत्त्वस्य ज्ञानसुखादयोः, रजसो दुःखप्रवृत्त्यादयः, तमसश्च मोहावरणादयो धर्म्मा इति। ते च सत्त्वादयो गुणा न न्याय-वैशेषिकाभिमतरूपरसादिवदात्मनो धर्म्माः। ते हि गुणाः पुरुषं पशुवत् बन्धकत्वेन त्रिगुणरज्जुनिर्म्मातृकत्वेन च गुणशब्देन व्यपदिश्यन्ते वृद्धैः। न हि प्रकृतेर्गुणाः किन्तु गुणा एव प्रकृति-रिति ज्ञेयम्। ते च गुणा अनादिमिलिताः संयोगवियोगर-हिता अन्योन्याश्रयाश्रयिरूपेण नित्यसहचराः परस्परपरिणाम-स्वभावा एव। तथा च 'परिणामस्वभावा हि गुणा नापरिणम्य क्षणमप्यवतिष्ठन्ते' इति। सत्त्वादिगुणत्रयाणां बहुत्वं व्यक्ति-रूपेण स्वीकर्त्तव्यम्। यथा एकस्य वस्त्रकार्य्यस्य संख्यातीतानि सूत्ररूपाणि कारणानि दृश्यन्ते, तथानन्तस्य विश्वसंसारकार्य्य-जातस्य मूलकारणमेकमेवेति कल्पयितुं न शक्यते। अतिसूक्ष्म-तमस्य मूलकारणसमूहस्य समष्टिभावेन प्रकृतेरेकत्वमुच्यते। अवयवविभागादविभागस्य यत्र काष्ठाप्राप्तिः सैव मूलप्रकृतिः। नैयायिकास्तावत् परमाणुषु विश्रमन्ति, परमाणवो हि तेषां

निरवयवा नित्याश्चेति सिद्धान्तम्। किन्तु वृद्धास्तेभ्योऽपि सूक्ष्मतमेषु पदार्थानाधिक्षिपन्ति। तेषां तन्मात्राणि नैयायिकानां परमाणवश्चैकदेशगतानीति कथञ्चिद् वक्तुं समीहते, केवलं परमाणवो नित्याः, परं खलु जन्यानि तन्मात्राणीति।

एतन्मये नास्त्यसतामुत्पत्तिः सतां वा विनाशः। सर्वावकाशे प्रलयेऽपि सर्वं एवानभिव्यक्ताः प्रकृतिमुपगता वर्त्तन्ते। ततः कर्म्मवशात् सृष्टेः प्रागाविर्भूय विकाशन्ते। अस्मिन् तावत् उत्पत्तेर्नामाविर्भावः, विनाशस्य च तिरोभावः। वेदान्तवत् सृष्टिकर्त्तृत्वमीश्वरस्य नाङ्गीक्रियते। योगबलेनाणिमाद्यैश्वर्य्यवान् जीव एवेश्वरः। उभौ प्रकृतिपुरुषौ व्यापकावपि सृष्टेः प्राक् संयुज्येते। संयोगश्चायं भोग्यभोक्तृत्वरूपसम्बन्धविशेषः। प्रकृतिर्भोग्या, पुरुषो भोक्ता। प्रकृतिपुरुषयोरयमेव संयोगो विश्वं जनयति। यदा तु गुणत्रयं परस्परं वैरभावं परित्यज्य साम्यभावं भजते, तदैव प्रलयः। पुनः पुरुषसम्बन्धात् साम्यभावं परिहाय वैषम्यभावं गृह्णन्ति गुणाः। तस्मादेव गुणवैषम्यादभवत् सृष्टिः।

वैषम्यानाञ्च नानात्वेन विचित्रताकार्य्याणाम्। तदवस्थायाः प्रकृतेः प्रथमपरिणतिर्बुद्धिः। अन्तःकरणरूपमेकमेवद्रव्यं कार्य्यविशेषेण बुद्ध्यहङ्कारमनःशब्दवाच्यम्। निश्चयवृत्तिरूपं कार्य्यं बुद्धेः, अभिमानमहङ्कारस्य, सङ्कल्परूपञ्च मनसः। बुद्धिरूपपरिणतायाः प्रकृतेः पुरुषेण सम्बन्धो विशिष्यते। प्रकृतिरूपपरिणतानां गुणानां धर्म्माः पुरुषेणोपचर्य्यते, किन्तु बुद्धिरूपेण परिणतानां धर्म्माः सुखदुःखादि आत्मन्यारोप्यते। तदा निर्म्मल-

स्वभावः स वरेण्योऽपि संसारकीटरूपेण परिणमति। तस्येद-मनादिसंसारित्वं विवेकज्ञानेनोच्छिद्यते। बुद्धिर्गुणेभ्य उत्पन्नापि सत्त्वाधिक्येन सत्त्ववती। अतएवास्यां ज्ञानसुखादीनां विकाशो जायते। सत्त्वाधिक्यादेवास्यां तादृश्येका शक्तिरास्ते, यस्याः प्रभावाद् बुद्धिः पुरुषचैतन्यं प्रगृह्य स्वयं चेतनायमाना जीव-भावेन संसारं निर्वहति। आविरभूज्जीवो जड़चैतन्यमिश्रणात्। तदिदं मिश्रणं हृदयग्रन्थिशब्दवाच्यम्। जड़स्य स्थूलरूपपरि-णामेण सह जीवस्य भवति क्रमविकाशः। ततो बुद्धिधर्माः सुखादयः पुरुषेषु पुरुषाणां चिद्धर्मो बुद्धावुपचर्य्यते। यथा तप्ते अयसि वह्निलौहयोर्भेदेऽपि भेत्तुं न शक्यते। तथा बुद्धिपुरुषयो-रपीति सिद्धान्तम् एकस्य पुरुषस्य एकया बुद्ध्यास्त्यनादिस्वस्वामि-भावसम्बन्धः।

पतिव्रता हि बुद्धिः क्षणमपि पतिसम्पर्कं विहाय नाव-तिष्ठते। अयं सम्बन्धनाश एव लिङ्गशरीरनाश इत्युच्यते। सैव मोक्षावस्था। तथा च बुद्ध्यहङ्कारैकादशेन्द्रियसूक्ष्मभूतपञ्च-कानां समुदाय एव लिङ्गशरीरम्। तत्र बुद्धेरेव प्राधान्यमङ्गी-कुर्वन्ति वृद्धाः। तल्लिङ्गशरीरं स्वर्गनरकादिव्यवहारिकजीव-शब्दवाच्यम्। स्थूलशरीराल्लिङ्गशरीरस्य निर्गमनं मरणम्, तस्मिन्नपि प्रवेशो जन्म। तथा च तत्त्वकौमुद्याम्—'निकाय-विशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुष-स्याभिसम्बन्धो जन्म, न तु पुरुषस्य परिणामस्तस्यापरिणामि-त्वात्' इति। अन्यथा अनादिविश्वव्यापकस्यात्मनः कथं जन्म

मरणं सम्भवति ? परेतपतिः सत्यवतः कायात् पुरुषमेकं निनायेति महाभारतवर्णनश्रवणात् पुरुषशब्देनात्र लिङ्गशरीरमेव बुद्ध्यते। तथाहि—'ततः सत्यवतः कायात् पाशबद्धं वशं गतम्।

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्॥' इति

आत्मनस्तु परिमाणं महत्, अणुपरिमाणत्वे उपपन्नं भवति एकस्य शैत्यबोधे युगपत् सर्वशरीरे शैत्यस्य बोधत्वम्। मध्यपरिमाणत्वे घटपटादिवदात्मा विनाशी स्यात्। द्वाभ्यां स्थूलसूक्ष्मपरिमाणाभ्यामभिन्नरूपेण भाषमाणः पुरुषः अहं सुखी दुःखी करोमि शृणोमि गच्छामि अन्धो वधिर इत्यादि सकलसंसारव्यवहारं निर्वहति। लिङ्गशरीरविनाशादेवात्मनो भवति स्वरूपेणावस्थानम्। तदा तस्मिन्नात्मनि बुद्धिधर्म्माः सुखादयो न प्रतिभान्ति। इदमेवात्मनः स्वरूपेणावस्थानं मुक्तिशब्देन व्यपदिश्यते प्रेक्षावद्भिरिति दिक्।



## छन्दोविषयिणी

दृश्यते हि संस्कृतकाव्यनाटकादिषु प्राय एव एकादशाक्षरवृत्तित आरभ्य समवृत्तान्तर्गतानां छन्दसां बाहुल्येन व्यवहारः। नितरां क्षुद्रतमेऽस्मिन् प्रबन्धे सन्दर्भगौरवभयादस्माभिरेकाक्षरादिवृत्तानां व्यवहारं विहाय एकादशाक्षरादारभ्य महाकाव्याद्यन्तर्गतानां छन्दसां यथाकथञ्चिदुदाहरणानि प्रियसुहृद्भिः

उपक्रियन्ते। एकादशाक्षरयोरिन्द्रवज्रोपेन्द्रवज्रयोः शुद्धोदाहरण-मतिविरलमेव, किन्तु तयोरुपजातिस्तु कवीनामतिहृद्येति प्रतीयते। नास्ति किमपि महाकाव्यम्, यस्मिन्नेषा दृष्टिपथ-वर्त्तिनी भवेत्। कुमारसम्भवस्य प्रथमं सर्गम्, रघुवंशस्य द्वितीयम्, शिशुपालवधनैषधचरितयोस्तृतीयं सर्गम् इन्द्रवज्रोपेन्द्र-वज्रयोरुपजातिवृत्तेन रचितम्।

**भ्रमरविलसिता**—'प्रीतैर्यूना व्यवहिततपना' शिशु ४।६२।

**शालिनी**—'यत् सावित्रैर्दीपितं भूमिपालैः' उत्तरराम।

**दोधकम्**—'इत्थममुं विलपन्तममुञ्चत् दीनदयालुतया-वनिपालः॥' नैषध ११।४७।

**स्वागता**—वृत्तमिदं शिशुपालवधस्य दशमे, किराता-र्जुनीयस्य नवमे, नैषधचरितस्य पञ्चमैकविंशयोर्व्यवहृतम्।

**रथोद्धता**—एतदपि वृत्तं कविभिर्बाहुल्येन व्यवहृतम्। कुमारसम्भवस्य अष्टमे, रघुवंशस्य दशमैकादशयोः, नैषधचरित-स्याष्टादशे, शिशुपालवधस्य चतुर्द्दशे, किरातार्जुनीयस्य त्रयो-दशोत्तरार्द्धे।

द्वादशाक्षरावृत्तिषु—

**तोटकम्**—'स तथेति विनेतुरुदारमतेः प्रतिगृह्य वचो विससर्ज मुनिम्।' रघु० ८।९१।

**वैश्वदेवी**—'पद्मश्याकोशं भास्करं बालचन्द्रं वापी

विस्तीर्णं स्वस्तिकं पूर्णकुम्भम्।' मृच्छक०। 'दृष्टं कृत्वार्थं पत्रिणः शार्ङ्गपाणिः।' शिशु० १९।११९।

**मन्दाकिनी, प्रमुदितवदना, प्रभ्रलाक्षिका, गौरी वा प्रभा**—'अतिसुरभिरभाजि पुष्पश्रियाम्' शिशु० ५।५७। 'व्रजति शुचिपदं त्वयि प्रीतिमान्' किरा० १८।२६।

**जलोद्धतगतिः**—'समीरशिशिरः शिरःसु वसताम्' शिशु० ४।५४। 'सनाकवनितं नितम्बरुचिरम्' किरा० ५।२७।

**प्रमिताक्षरा**—वृत्तमिदं शिशुपालबधस्य नवमे, किरातार्जुनीयस्य षष्ठे यथा—'अपराह्णशीतलतरेण शनैः' शिशु० ९।४। 'सुकुमारमेकमनु मर्मभिदाम्' किरा० ६।४०।

**द्रुतविलम्बितम्**—शृङ्गारादावनुद्धते वाक्ये अस्य व्यवहारो यथा—शिशुपालबधस्य षष्ठे, नैषधचरितस्य चतुर्थे, रघुवंशस्य नवमे, किरातार्जुनीयस्य चाष्टादशे सर्गे।

**वंशस्थवृत्तम्**—एतेनैव हि शिशुपालबधस्य प्रथमः, किरातार्जुनीयस्य प्रथमश्चतुर्थः, अष्टमश्चतुर्दशश्च। नैषधचरितस्य प्रथमो द्वादशश्च, रघुवंशस्य तृतीयः, कुमारसम्भवस्य पञ्चमः सर्गः ग्रथितः। इन्द्रवज्रोपेन्द्रवज्रयोरिव वंशस्थेन्द्रवंशयोरप्युपजातिः स्यात्। शिशुपालबधस्याष्टादशः सर्गः अनया निर्मितः।

**जलधरमाला**—'दिव्यस्त्रीणां सचरणलाक्षारागाः रागायते निपतितपुष्पापीडाः।' किरा० ५।२३।

**भुजङ्गप्रयातम्**—'धनैर्दुष्कुलीनाः कुलीना भवन्ति' उद्भटः।

त्रयोदशाक्षरावृत्तिषु—

**कुटजा, नन्दिनी वा**—'कुटजानि वीक्ष्य शिखिभिः शिखरीन्द्रम् समयावनौ घनमदभ्रमराणि।' शिशु० ६।७३।

**कुटिलगतिः, क्षमा वा**—'इह दुरधिगमैः किञ्चि-देवागमैः सततमसुतरं वर्णयन्त्यन्तरम्।' किरा० ५।१८।

**मत्तमयूरवृत्तम्**—'दृष्ट्वा दृश्यान्याचरणीयानि विधाय' किरा० १८।८। 'हा तातेति क्रन्दितमाकर्ण्य विषण्णः' रघु० ९।७५।

**कनकप्रभा, मञ्जुभाषिणी वा**—'समयः स वर्त्तत इवैष यत्र मां समनन्दयत् सुमुखि गौतमार्पितः।' उत्तरराम। 'यदि शस्त्रमुज्झितमशस्त्रपाणयः' वेणीसंहारः।

**ओजोगुणव्यञ्जकवाक्येषु प्रहर्षिणीवृत्तम्**—'त्वं ब्रह्मा पशुपतिरर्यमा विधाता।' रुचिरा—शिशुपालवधस्य सप्तदशः सर्गः एतेन रचितः। 'अथोच्चलत् कलकलघोषभीषणम्।' शिशु०।१७।

चतुर्दशाक्षरावृत्तिषु—

**वसन्ततिलकम्**—वृत्तेनानेन चौरपञ्चाशिका शिशुपालवधस्य पञ्चमः सर्गः, नैषधचरितस्यैकादशत्रयोदशौ, कुमारसम्भवस्य सप्तदशः, ऋतुसंहारस्य तृतीयः सर्गश्च ग्रथितः।

**पथ्या**—'स्थगयन्त्यमूः शमितचातकार्त्तस्वरा: जलदा-स्तडित्तुलितकान्तकार्त्तस्वरा: ।' शिशु० ४।२४ ।

**कुटिला**—'नीतोच्छ्रायं मुहुरशिशिरश्मेरुस्रैः, आनीलाभैर्विरचितपरभागा रत्नैः ।' किरा० ५।३ ।

पञ्चदशाक्षरावृत्तिषु—

**मालिनी**—वृत्तमिदं विदुषामतिसन्तोषकरम्, एतेनैव शिशुपालवधस्यैकादशः सर्गो रचितः। प्रायशः काव्यानामपि सर्गावसाने अस्य व्यवहारो दृश्यते।

**पञ्चचामरम्**—वृत्तमिदं स्तोत्रादौ बाहुल्येन कविभिः प्रयुज्यते। 'जटाकटाहसम्भ्रमभ्रमन्निलिम्पनिर्झरी विलोलवीचिवल्लरी विराजमानमूर्द्धनि ।' शिवताण्डवस्तोत्रम् ।

सप्तदशाक्षरावृत्तिषु—

**हरिणी**—'प्रतनुविरलैः प्रान्तोन्मिलन्मनोहरकुन्तलैर्दशनमुकुलैर्मुग्धालोकं शिशुर्दधती मुखम् ।' उत्तरराम० ।

**शिखरिणी**—वृत्तमिदं हृदयस्य स्फुरणं द्रवीभावं वा जनयति। आनन्दलहरीहंसदूतादयः ग्रन्थाः एतेनैव रचिताः 'इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयोरसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः । उत्तरराम० ।

**पृथ्वी**—भावगाम्भीर्यद्योतकमिदं वृत्तम् । 'प्रचण्डपरिपण्डितः स्तिमिरवृत्तिरन्तर्मुखम् ।'

**मन्दाक्रान्ता**—मेघदूतपदाङ्कदूतादयो ग्रन्था एतेनैव वृत्तेन ग्रथिताः। 'तीर्थेतोयव्यतिकरभवे जह्नुकन्यासरय्वोः' रघु० ८।९५।

**वंशपत्रपतिता(तं)**—'दर्पणनिर्मलासु पतिते घनतिमिरमुषि, ज्योतिषि रौप्यभित्तिषु पुरः प्रतिफलति मुहुः। शिशु० ४।५७। 'सम्प्रतिलब्धजन्मशनकैः कथमपि लघुनि, क्षीणपयस्युपेयुषिभिदां जलधरपटले। किरा० ५।४३।

**अतिशयिनी**—'इति धौतपुरन्ध्रिमत्सरान् सरसि मज्जनेन, श्रियमाप्तवतोऽतिशायिनीमपमलाङ्गभासः। शिशु० ८।७१।

अष्टादशाक्षरावृत्तिषु—

**महामालिनी, महामालिका, तारका, नाराचकं वा**—'कृतसकलजगद्विबोधोऽवधूतान्धकारादयः। शिशु० ११।६७। 'रघुपतिरपि जातवेदो विशुद्धां प्रगृह्य प्रियाम्।' रघु० १२।१०४।

ऊनविंशत्यक्षरावृत्तिषु—

**शार्दूलविक्रीडितम्**—वृत्तमिदमुद्धतवाक्ये वीरचरितादौ लभ्यते। 'चञ्चत्पञ्चशिखण्डमण्डनमसौ मुग्धः प्रचण्डः शिशुः।' वीरचरि०।

**मेघविस्फूर्जिता**—'श्रिया जुष्टं दिव्यैः सुपटहरवैरन्वितं पुष्पवर्षैः। शिशु० २०।७९।

**सुमधुरा**—'वेदार्थान् प्राकृतस्त्वं वदसि न च ते जिह्वा निपतिता।' मृच्छक०।

विंशत्यक्षरावृत्तिषु—

**सुवदना**—'उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलम्। मुद्रारा०।

एकविंशत्यक्षरावृत्तिषु—

**स्रग्धरा**—वृत्तमिदं समुद्धते वाच्ये, रौद्रे, वीरे, भयानके च रसे सम्यगुपयोगमर्हति। 'उत्कृत्योत्कृत्यगर्भानपि शकलयतः क्षत्रसन्तानरोषात्।' वीरचरि०।

अर्द्धसमवृत्तेषु—

**वियोगिनी सुन्दरी वा**—वृत्तस्यास्य करुणरसे सम्यगुपयोगो लक्ष्यते। कुमारसम्भवस्य चतुर्थः, रघुवंशस्याष्टमः, शिशुपालबधस्य षोड़शः, किरातार्जुनीयस्य द्वितीयश्च सर्गः अनेन विरचितः।

**औपच्छन्दसिकं**—वृत्तस्यास्य वीररसे भूयान् व्यवहारो दृश्यते, 'चमरान् परितः प्रवर्त्तिताश्वः क्वचिदाकर्ण्य निकृष्टवल्लभवर्हाः। नृपतीनिव तान् वियोज्य सद्यः सितबालव्यजनैर्जगाम शान्तिम्॥' रघु० ९।६६। 'व्यवहार इवानृताभियोगं तिमिरं निर्जितवत्यथ प्रकाशे' शिशु० २०।४१।

**मालभारिणी**—'इयमस्मदुपाश्रयैकचित्ता मनसा

प्रेमनिबद्धमत्सरेण। नियतं कुपितातिवल्लभत्वात् स्वयमुत्प्रेक्ष्य ममापराधलेशम्। वेणीसंहारः।

**गाथा**—अस्य तावत् छन्दसः किमपि लक्षणं न पर्य्याप्ततया संलभामहे ; केवलमुदाहरणतो ज्ञातव्यमिति।

'अमी वेदिं परितः क्लृप्तधिष्ण्याः समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः।
अपघ्नन्तो दूरितं हव्यगन्धैर्वैतानास्त्वां वह्नयः पावयन्तु॥'

इति महाभारतादिषु पुराणनिवहेषु अस्य तावत् भूयान् व्यवहारो दृश्यते। सन्दर्भगौरवभयात् तानि तान्युदाहरणानि उज्झितानि। आशास्महे छन्दोविषयकज्ञानमभीप्सूनां यथाकथञ्चिदुपकारमातन्विष्यत्ययं सन्दर्भ इति कृतं विस्तारेण।

---

## पौराणिकेतिवृत्तानि—

**अंशुमतः**—सर्वानिर्वहणम्,—महर्षेः कपिलस्य क्रोधाग्नौ सूर्य्यवंशावतंसे षष्टिसहस्रे सगरसन्ताने विनाशमुपगते पितामहनिदेशेनासौ पातालभवनं गत्वा महर्षिं संस्तूय यज्ञीयाश्वं गृहीत्वा पितामहसगरस्य शतक्रतुं निर्वाहयामास।

**अकचस्य उत्पत्तिः**—पुरा किल देवानां समुद्रमथनोद्भवायाः सुधायाः पानावसरे प्रच्छन्नदैत्यभावस्य केतोर्गलमात्रपर्य्यवसिते पीयूषे सूर्य्याचन्द्रमसौ तद्रहस्यं नारायणं व्याचख्याते। ततः स सपदि चक्रेण तस्य शिरश्चिच्छेद। ततःप्रभृति विदे-

हस्य तस्य उत्तमाङ्गं राहुरपराङ्गं केतुश्चेति कीर्त्यते। तदारभ्यामर्षतया लोकसाक्षिणं चन्द्रमसञ्च पर्व्वणि ग्रसति।

**अग्नेः खाण्डवभक्षणम्**—कदाचिदग्निः श्वेतकिराजयज्ञे प्रभूतहविर्भक्षणजनितं विकारं परिहर्त्तुं ब्राह्मणरूपेण कृष्णार्जुनयोरातिथ्यं स्वीकृत्य तयोः साहाय्येन बहुप्राणिशङ्कुलं खाण्डवारण्यं षट्प्राणिमात्रवर्ज्जं समस्तं कवलयन् पुनः स्वास्थ्यमापेदे। निर्मुक्ताः षट् प्राणिनश्च किरीटिशरण्यो मयो नाम दनुजः, जनन्यामिषेणापवाहितस्तक्षकतनयो हृतबन्धुरश्वसेनः, कृशानोरनुग्रहजीवितश्चत्वारो मन्दपालसूनवः शार्ङ्गकाश्चेति।

**शुकं प्रत्यभिसम्पातः**—अथैकदाग्निः अश्वत्थान्निर्गत्य शमीगर्भगत इति शुकेन प्रस्तुतत्वात् शुकजातिं प्रति तेनाभिशप्तम्—'वाग्विहीनो भूयाः' इति।

**वारणेष्वभिसम्पातः**—कदाचिद्देवगणानुरोधादूर्द्धरेतसः कालिकापतेः चरितमोषद्रेतः संगृह्य चण्डीशापभयात् सुश्रान्तं तारकघातिसुतोत्पादनक्षममनलमश्वत्थस्थमन्विष्यद्भ्यः सुरेभ्यः कोऽपि करी व्याजहार। तेन कुपितेन हुतवहे—'प्रतीपा वो रसना भवेत्' इत्यभिसप्तम्।

**अगस्त्यस्य उत्पत्तिः**—एकदोर्व्वशीमभिलषतोः मित्रावरुणयोः कुम्भन्यस्तात्तेजसोऽगस्त्यो निमिशापाद्विदेहो वशिष्ठश्च संजज्ञाते। तेन तौ मित्रावरुणसंज्ञां संलभेते।

**विन्ध्यशासनम्**—अथ कदाचिदगस्त्यो देवैरभ्यर्थितो मेरुस्पर्द्धया दिनकरगमनवर्त्मानमवरोद्धुमिच्छन्तं विन्ध्यगिरिमगमत्। तत्र मुनिमभ्यर्थितुमवनते च तस्मिन् 'पुनर्गमनं यावत् नतशिरसैव वर्त्तितव्यम्' इत्युक्त्वा तस्मात् परेताचरितां दिशं प्रस्थितो न पुनस्तत्रागमत्।

**नहुषशापः**—सोमवंशावतंसो नहुषभूपतिरिन्द्रपदं प्राप्यागस्त्यादिभिर्महर्षिभिः शिविकां वाहयन् तमगस्त्यं दुर्मतितया पादेनास्पृशन् तच्छापेन भुजङ्गमयोनिमासाद्य तिर्य्यक्त्वमापन्नो राज्ञा युधिष्ठिरेण तस्मान्मोचितः। ततः स त्रिदशालयं ययौ।

**वातापिदलनम्**—महर्षिरगस्त्यः कदाचित् स्वभार्य्यायाः लोपामुद्रायाः सन्तोषार्थं धनलिप्सुर्धरणीमभिचरन् इल्वलजनपदं गत्वा तस्य राज्ञः आतिथ्यं स्वीचकार। दनुजपतिरिल्वलः सहोदरं वातापिनं छागं विधाय तस्य पिशितैर्गृहागतान् प्रथमं भोजयामास, अनन्तरं मृतसञ्जीवनीप्रभावेणोज्जीवितेन तेन जठरं विदार्य्य निष्क्रामता घातयित्वा अतिथीनां धनानि समादधिरे, तान् मुनिर्विज्ञाय भुक्तं वातापिनमतित्वरितं कुक्षिवह्निना पपाच।

**समुद्रपानम्**—अथैकदामरसंस्तुतो मुनिः सागरगर्भलुक्कायितानां कालकेयादिदनुजानां वधार्थं सागरोदकं गण्डूषेण निःशेषं पीत्वा तेषां वधशरणीं प्रदर्शयामास।

**दक्षिणस्यामुदयः**—श्रूयते हि श्रुतौ शरदि दक्षिणस्यां दिशि नक्षत्ररूपेण समुदिते मुनौ सर्वत्र जलं शुध्यतीति।

**अघासुरस्य वधः**—नन्दालये कंसप्रेषितयोः पूतना-बकासुरयोर्बालकृष्णकरेण निधनमुपगतयोस्तयोर्भ्राता अघासुरो वृन्दावनं गत्वा वासुदेववधार्थं मायया अजागररूपं परिगृह्य क्रीड़द्भिर्बालैः सह श्रीकृष्णं कवलीकृतवान्। ततश्च तन्मायां ज्ञात्वा हरिर्विश्वम्भररूपेण आत्मदेहं विस्तीर्य्य तस्य गलनालीं शीर्षञ्च विदार्य्य बहिरगात्।

**अनिरुद्धस्य उषासमागमः**—स्वप्नदृष्टमनिरुद्धं प्रति बाणतनयाया उषायाः प्रगाढ़मनुरागमवगम्य तत्सखी चित्रलेखा गूढ़ं तमनिरुद्धमानीय समागमयत्। ततोऽसौ तया सह रहो विहरति स्म। अथ गच्छता कालेन, बाणेन ज्ञातः बद्धश्च। अन-न्तरं नारदमुखादुपलब्धवृत्तान्ताः यदुकुलप्रमुखाः कृष्णादयः ईशानगुप्तं शोणितपुरं गत्वा संग्रामं विधाय विजित्य च बाण-मनिरुद्धं मोचयित्वा उषया सह द्वारकापुरं संप्रापुः।

**आस्तिकस्य सर्पोज्जीवनम्**—पुरा किल वासुकि-भगिन्यां मनसादेव्यां जरत्कारुमुनिसम्भवः आस्तिकः सर्पसत्र-कारिणं जनमेजयमनुनीय कद्रोरभिसम्पातात् तद्यज्ञे निधनता-मुपागच्छन्तं भुजङ्गमकुलं परिररक्ष।

**इन्द्रस्य गौतमपत्नीधर्षणम्**—पुरा किल अहल्या-रूपविमुग्ध इन्द्रो गौतमरूपं धृत्वा तदाश्रमपदमभ्युपेत्य सुरत-

प्रार्थनयायत्तीकृतामहल्यां धर्षयित्वा बहिरागच्छन् दैवात् मुनिनावलोकितोऽभिशप्तश्च सोमो शून्यस्तव भविष्यतीति। अहल्यापि श्रीरामचरणस्पर्शनमृते शष्टव्या निराहाराश्मशायिनीत्यभिशप्ता।

**वृत्रहननम्**—पुरा किलाखण्डलशासनाय त्वष्टृकृत्पन्नो वृत्रो नामासुरस्तपस्यन्नेवान्तर्निविष्टनारायणांशेनेन्द्रेण सकलदेवताप्रार्थितकायस्य पुण्यात्मनो महामुनेर्गृहीतपरोपकारव्रतस्य दधीचेः कङ्कालैर्विनिर्म्मितेन कुलिशेन निहतः।

**पर्व्वतपक्षकर्त्तनम्**—यत्र कुत्रचित् पक्षबलेन गमनशक्तानां पर्व्वतानां गमनेन महदनिष्टशङ्कां भावयता मघवता तेषां पक्षाः कर्त्तिताः। तेषु नगाधिपतेरात्मजो मैनाको जलनिधेरम्भसि निमज्यालूनपक्ष एव वर्त्तते।

**उशीनरसूनोः शरणागतरक्षणम्**—पुरा किलाग्निः पारावतविग्रहेण चन्द्रवंशीयं शरणागतवत्सलं राजानं शिविमभ्येत्य 'श्येनभयत्रस्तोऽहम्' इत्युक्त्वा राजप्रसादं लेभे। ततश्च श्येनरूप इन्द्रस्तद्भक्षणाय राजानमागत्य तं प्रार्थयामास। राजनि तु तदङ्गविनिमयेनात्मशरीरतः स्वमांसं दातुं प्रवृत्ते स्वस्वरूपेण तौ वह्नीन्द्रौ सम्मुखीभूय वरं दत्त्वा अन्तर्हितौ।

**ऋष्यशृङ्गस्य अयोध्यानयनम्**—विभाण्डकस्य मुनेः पुत्रमृष्यशृङ्गं पुरा द्वादशवर्षव्यापिन्या अनावृष्ट्या राज्यनाशोपक्रमे राज्ञा दशरथेन आनीय यज्ञं कृत्वा राज्यरक्षा अकारि।

**एकलव्यस्य गुरुदक्षिणादानम्**—निषादाधिपते-र्हिरण्यधनुषस्तनयः एकलव्यो धनुर्विद्यामभ्यसितुमाचार्य्यं द्रोण-मुपगम्य शबरजातित्वेन प्रत्याख्यातः गृहं गत्वा मृण्मयं द्रोण-विग्रहं निर्म्माय ततः निखिलामायुधविद्यां लेभे। ततश्चायं कदाचिदर्ज्जुनतोषविधित्सवे अभिसन्धानार्थं समुपस्थिताय आचा-र्य्याय निजदक्षिणाङ्गुष्ठं छित्वा तदभ्यर्थनानुरूपां दक्षिणामदात्।

**ककुत्स्थस्य युद्धम्**—वैवस्वतान्वयसम्भवस्य राज्ञः शशादस्य सूनुः पुरञ्जयः सुरासुराणां महाहवे विष्णोरादेशेन वृषरूपिणः इन्द्रस्य ककुदमास्थाय युद्धमकरोत्। ततः प्रभृत्ययं वंशः काकुत्स्थ इति संज्ञामाप।

**कर्णस्य दातृत्वम्**—पुरा किल कर्णः प्रभाकरेण निषिध्यमानोऽपि स्वीयामङ्गलं ज्ञात्वा च प्रार्थिताय पुरन्दराय स्वाङ्गतः उत्कृत्य सहजातं कवचकुण्डलमदात्।

**कार्त्तवीर्य्यार्ज्जुनस्य नर्म्मदारोधः**—कदाचिदसौ हैहयः कृतवीर्य्यसूनुरर्ज्जुनो नाम भूपतिः जलकेलिव्यापारे भुज-सहस्रेणावरुध्य नर्म्मदां प्रतीपगां चकार।

**दशाननशासनम्**—अथ कदाचिदनेन हैहयेन योद्धु-मिच्छन् दशाननो नर्म्मदारोधसि दोर्भिर्निर्जितो बद्धा निजायतन-मानीतः पुलस्त्यानुरोधान्मोचितश्च।

**किरीटिनः गुरुदक्षिणा**—अथाचार्य्यद्रोणनिदेशेन

किरीटी तद्दक्षिणार्थे द्रोणद्वेषिणं द्रुपदराजं बद्धा दक्षिणारूपं तं दत्तवान्। तेनासौ द्रोणोऽर्जुनं प्रति प्रसन्नो भूत्वा सर्वेभ्यः शिष्येभ्यः समधिकमादरं कृतवान्।

**कुन्त्याः मन्त्रलाभः**—अथैकदा दुर्व्वासा मुनिस्तीर्थयात्राप्रसङ्गेन कुन्तिभोजराजगृहे वर्षमेकमुवास। तदा कुन्तिभोजाय पुत्रीत्वेन प्रदत्ता शूरसेनभूपतेः कन्या वसुदेवस्य स्वसा पृथा ऋषेरत्यद्भुतां परिचर्य्यामकरोत्। तत्परिचर्य्यया परितुष्टो मुनिस्तस्यै देवाकर्षणमन्त्रमेकमदात्। तन्मन्त्रपरीक्षार्थं मार्त्तण्डस्मरणेन तदौरसेन कर्ण इति सुतोऽजनयि। तं तु कानीनत्वात् मञ्जूषायां संस्थाप्य नदीप्रवाहे चिक्षेप। ततश्च स्वयंवरविधिना पाण्डुराजेन सह तस्या विवाहोऽभूत्। एकदा वनभ्रमणावसरे ब्राह्मणाभिसम्पातेन स्त्रीसंसर्गवञ्चितः पाण्डुरन्येन पुत्रोत्पादनाय पृथामादिदेश। ततः सा ऋषिदत्तमन्त्रबलेन धर्म्मराजं पवनमिन्द्रञ्च स्मृत्वा तेषामौरसेन युधिष्ठिरं भीममर्ज्जुनञ्च सुतानुत्पादयामास। सपत्नी माद्री तन्मन्त्रप्रभावेण च अश्विनीकुमारौ स्मृत्वा नकुलसहदेवौ कुमारौ लेभे।

**कृष्णस्य पूतनावधः**—पुरा किल स्तनन्धयो हरिः कंसप्रेषितया मायाविन्या पूतनया समर्पितो गरलसमासक्तस्तनचुचुकं तज्जीवनैः सार्द्धं पपौ।

**शकटभञ्जनम्**—अथैकदा शकटाधःशयानो हरिश्चरणेन घोरं तं दनुजं बभञ्ज।

**यमलार्जुनभङ्गः**—अथ कदाचिद्बालोऽसौ बलदेवेनोद्धतं खेलयन् यशोदयोदूखलबद्धस्तमुदूखलं कर्षयन् यमलार्जुनपादपान्तर्गतस्तौ आकृष्टोदूखलेन बभञ्ज ।

**अरिष्टबधः**—कदाचिदसौ रजनीमुखे रासलीलासमाप्तौ गोमुनिगणानुद्वेजयन्तं वृषभरूपधरमरिष्टाख्यमसुरमुत्पाटितेनैकेन तत् शृङ्गेन जघान ।

**गोवर्द्धनधारणम्**—अथैकदा कृष्णोपदेशेन इन्द्रमखभङ्गात् व्रजवासिनः प्रति कुपितेन इन्द्रेण महदुत्पातो व्यकारि । तद्वारणाय वामकनिष्ठाङ्गुलिना गोवर्द्धनगिरिं दधार ।

**कंसबधः**—अथासौ आत्मद्वेषिणमुग्रसेनतनयं मथुराधीश्वरं मातुलं कंसं मथुरां गत्वा निपात्य पितरं वसुदेवं मातरं देवकीञ्च बन्धनादुन्मुच्य कंसादधिकृतामिमामुग्रसेनायादात् ।

**गुरुदक्षिणा**—अथ कदाचिदयमध्ययनार्थी बलदेवेनावन्तीमुपेत्य चतुःषष्ट्यहोभिः सान्दीपनिमुनेरधीत्य निखिलां विद्यां तदङ्गजहन्तारं शङ्खं पञ्चजनासुरं विनिपात्य तदस्थिजं पाञ्चजन्यमापूरयन् शमनं विजित्य तदन्तिकादानीय गुरुपुत्रं गुरवे दक्षिणामदात् ।

**रुक्मिणीहरणम्**—अथ कदाचित् हरिः राजन्यवृन्दं विजित्य चेदिपतये शिशुपालाय दित्सतां भीष्मकपुत्रीं रुक्मिणीं राक्षसविधिना उद्वाह्य तस्यामनङ्गावतारं प्रद्युम्नमजीजनत् ।

**जरासन्धभीतिः**—अयं कृष्णः कंसपत्नीसमुत्तेजिताज्जरासन्धात् भयेन प्रपलाय्य रैवतकाद्रिप्राकारां कुशस्थलीमध्युवास।

**मुचुकुन्दतल्पशयनम्**—अथ कदाचिद् यादवद्वेषिणा यवनपतिना कालयवनेनाक्रम्यमाणोऽसौ कामपि गिरिगुहां प्रविश्य तत्र देवासुरयुद्धे प्रसन्नैर्देवैः क्लाम्यमानस्य मुचुकुन्दभूपतेः प्रार्थनया तस्मै दीर्घकालं निद्रासुखमर्पितम्। तदन्तरायो हि निद्राव्याघातं घटयिष्यति स भूपतेर्दृष्टिमात्रेण भस्मत्वमेष्यतीति वरलब्धप्रसुप्तस्य तस्य तल्पलीन आसीत्। कालयवनस्तु तदनुसरणक्रमेण प्रविश्य कृष्णभ्रान्त्या पादेन ताडयन् तेन दृष्ट्या भस्मीकृतः।

**परीक्षिदुज्जीवनम्**—कदाचिदसौ अश्वत्थाम्ना ऐषिकास्त्रेण विनाशितमुत्तराजठरगतमभिमन्युतनयं परीक्षितमुज्जीवयामास।

**खुल्लनायाः जन्म**—इयं खलु तपस्विनी रत्नमालानाम्नी काचित् स्वर्गविद्याधरी, पुरा चण्डिकाकोपेन लक्षपतिवणिज औरसेन जाता। धनपतिसार्थवाहेन परिणीता। अस्यास्तनयः श्रीमन्तो नाम।

**गरुड़स्य निषादपुरग्रासः**—क्षुत्क्षामकण्ठेनानेन मातृनियोगादुदधिस्थं निषादपुरमश्नता खगपतिना गिलितो निषादीभार्य्यः कश्चिद् ब्राह्मणः कण्ठं दहन् समुज्झितः।

**चन्द्रस्य गुरुपत्नीहरणम्**—अथ कदाचिदनङ्गपीड़ितः शशी बृहस्पतेः पत्नीं तारां बलादपहृत्य तस्यां बुधनामानं सुतमुत्पादयामास ।

**दक्षादभिशापः**—रोहिणीनक्षत्रमात्रैकनिरतस्य शशिनो निजदौर्भाग्यदुःखिताभिर्दक्षपुत्रीभिः सप्तविंशत्या स्वपत्नीभिरावेदितस्य प्रजापतेः शापादेष यक्ष्मणाभिक्रान्तः शङ्करं तपसाराध्य निरामयोऽभवत् ।

**जरासन्धस्य उत्पत्तिः**—बृहद्रथो नाम राजा सन्तानहीनतया काक्षीवत्तनयं चण्डकौशिकमृषिं प्रसूय शरणं प्रपन्नः । ततस्तेन ऋषिणा प्रसादीकृतमाम्रफलमेकं राज्ञे दत्तम् । स तु राजा निर्बन्धप्रेरिततया तत् फलं यमजाभ्यां काशीराजतनयाभ्यां भार्य्याभ्यामर्पितवान् । ते च महिष्यौ तत् फलं समभागेन भुक्त्वा दोहदवत्यौ स्तः । ततस्तु पूर्णे दशमे मासे जीवितमर्द्धशरीरद्वयं प्रसूय परिचारिकया व्यसर्जयताम् । अथ सूनापरिचरा जरा नाम्नी कापि राक्षसी बालमृन्मांसार्थिनी कौतूहलवशवर्त्तितया तद्भागद्वयमेकीकृत्य रुदन्तं बालकं वीक्ष्य साश्चर्य्या राज्ञे उपायनं कृतवती ।

**जामदग्न्यस्य मातृशिरश्छेदः**—अथैकदा राममाता रेणुका कामपि स्रोतस्विनीं स्नातुमभ्येत्य तत्र जलक्रीड़ानुसंशक्तं गन्धर्व्वराजं चित्ररथं समीक्ष्य सञ्जाताभिलाषोन्मनस्का-

श्रमपदमागतेति विदितभूतार्थेन मुनिना कुपितेन समादिष्टो जामदग्न्यः कुठारेण मातृशिरश्छित्वा पितुः सन्तोषान्मातृप्रत्युज्जीवनादिकान् वाञ्छितान् वरान् समालेभे।

**षडाननविजयः**—त्र्यम्बकात् धनुरुपनिषदमधीयानेन जामदग्न्येन द्वन्द्वारम्भे षडाननं प्रति त्रैयम्बकशरे संयोजिते चण्डिका तयोर्मध्यस्थैनं न्यवारयत्।

**क्रौञ्चभेदनम्**—अथ कदाचिद्रामः कार्त्तिकेयस्य स्पर्द्धया क्रौञ्चगिरिमतिनिशितविशिखमुखेन लीलया मृत्पिण्डभेदमिव बिभेद।

**निःक्षत्रीकरणम्**—अथ कदाचिन्मृगयानुरक्तः कार्त्तवीर्य्यार्जुनोऽटवीं पर्य्यटन् जमदग्नेराश्रमं प्राप्य मुनिसत्कृतोऽसौ तं महीयसीं विभवरूपां कामधेनुं ययाचे। किन्तु प्राणव्ययेनापि तामदित्सन्तं मुनिमाहवे हत्वा होमधेनुं स्वपुरं नीतवान्। ततश्च पुष्करतीर्थात् प्रत्यावर्त्त्य कुपितो रामः त्रिःसप्तकृत्वः क्षत्रबधमङ्गीकृत्य पितृद्वेषिणं हैहयं सबान्धवं प्रतिज्ञातसंख्यया च सबालक्षात्रवीरान् निपात्य स्यमन्तपञ्चके पञ्चसरःसु सञ्चितेन तच्छोणितेन पितृपुरुषान् तर्पयति स्म।

**पृथ्वीदानम्**—अथासौ रामः समग्रां पृथ्वीं विजित्य तर्पितैः पितृपुरुषैर्निवारितहननव्यवसायो यज्ञेन देवान् प्रणीय गुरुकश्यपाय तावतीमिलां समर्प्य महेन्द्रगिरौ तपस्यायै ययौ।

**गणेशदन्तभञ्जनम्**—कदाचिद्भार्गवः कालिकापतिमभिद्रष्टुमुपगच्छन् पथि गणेशेन प्रतिनिवृत्तो प्रज्वलदनलेनेव स्वात्तेजसा तमभिभूय परशुना तस्यैकं दन्तं बभञ्ज।

**भीष्मेण पराभवः**—अथ कदाचित् सत्यसन्धो निखिलोपचीयमानक्षत्रवीर्यो भीष्मः स्वाचार्य्यरामेणादिष्टोऽपि शैल्यराजानुरक्तामात्मविजयलब्धपरित्यक्तां काशीराजसुताममम्बामुद्जहार। तस्माच्च कुपितं जामदग्न्यमाहवे आहूय महासंग्राममभिनीय पराजितः।

**ताड़कायाः शापावसानम्**—पुरा किल श्वेतकेतुर्नाम कश्चित् यक्षस्तपस्यया पितामहात् 'सहस्रमत्तमातङ्ग इव बलवती कन्या भविष्यति' इति वरं लब्ध्वा प्राप्तमातङ्गबलवतीं कन्यां सुन्दाय ददौ। ततस्तस्यां सुन्दौरसेन मारीचो नाम पुत्रो जज्ञे। अगस्त्यक्रोधाग्निना निहते सुन्दे समाहूतो मारीचो मुनिं हन्तुमुद्यतः। ततः कुपितो मुनिस्तौ 'राक्षसयोनिं प्राप' इति शशाप। ततः प्रभृति राक्षसौ भूत्वा मुनेराश्रमं प्राणिशून्यं कृत्वोषतुः। अथ गच्छति काले विश्वामित्रमखरक्षावसरे रामचन्द्रेण सा विनष्टा।

**दक्षस्य अ..मुण्डम्**—अथैकदा भृगुयज्ञसमुपागतो दक्षः शिवेनाकृतसत्कारः क्रुद्धन् शिवं निर्जेतुं तमन्तरा निखिलदेवमामन्त्र्य मखमारेभे। तत्र अनाहूता कनिष्ठतनया शिवभार्य्या सती अहेतुकीं शिवनिन्दां श्रुत्वा प्राणान् जहौ। तेन

जातामर्षाः प्रमथाः यज्ञं विनस्य दक्षशीर्षञ्चापि यज्ञाग्नौ ददहुः। ततो दक्षभार्य्यायाः प्रसूत्याः स्तवेन प्रसन्नो हरो दक्षदेहे छाग-मुण्डमेकं संयुज्य तमुज्जीवयामास।

**दुर्व्वाससः भार्य्याभस्मीकरणम्**—अयं खलु विदितवैभवो महातपा ऋषिरत्रेरौरसेनानुसूयायां जातः। श्वशुरौर्व्वानुरोधेनासौ कन्दल्याः पाणिग्रहणसमये तस्याः शतापराधं मर्षयिष्यामीति प्रतिज्ञातवान्। ततो गच्छता कालेन कन्दल्या उत्पन्ने शतैकेऽपराधे क्रोधाग्निना स तां ददाह।

**इन्द्रं प्रत्यभिसम्पातः**—अथ कदाचिदसौ मुनिः महीमटन् गच्छन्तमिन्द्रं दृष्ट्वा तस्मै पारिजातस्रजं दत्तवान्। स तु तां यथायोग्यस्थाने अप्रापितनया क्रुद्धेन मुनिना 'श्रीहीनो भूयाः' इति शेपे।

**पाण्डवान् प्रति सन्तोषः**—सुयोधनसत्कृतप्रसन्नेन मुनिना द्रौपदीभोजनोत्तरं पाण्डवेभ्यः सशिष्यमातिथ्यं प्रार्थयिष्यतीति तस्मै दुर्योधनाय वरं दत्त्वा हरिव्रतपारणावसरे तानभ्येत्यातिथ्यं ययाचे। ततो विपन्नाः पाण्डवाः हरिसहायेन आदित्य-दत्तस्थालीलग्नेन शाकान्नेन सशिष्यान् मुनीन् तोषयित्वा परां प्रीतिं लेभिरे।

**अम्बरीषात् पराभवः**—अथैकदा विष्णुभक्तस्य राज्ञोऽम्बरीषस्यातिथ्यमसौ मुनिः स्वीकृत्य स्नानाय काञ्चित् सरिद्वरां

गतः। ततो बहुकालात्ययेनापि समुपागतं तं नासमीक्ष्य त्रिदिनमुपोषिणा राज्ञा क्षुत्क्षामकण्ठतया किञ्चिज्जलं गृहीतम् इति विज्ञाय मुनिः क्रोधेन स्वशिरस्थामेकां जटां संछिन्द्य भूमौ पातयामास। ततः सपदि प्रत्युत्पन्नेनैकेन पुरुषेणाम्बरीषः समाक्रान्तः। विष्णुचक्रो हि तं व्यापाद्य मुनिं हन्तुमुद्यतः। ततस्तेन वित्रस्तो मुनिर्भुवमटित्वा कुत्रापि रक्षितारं नासाद्य विष्णोरुपदेशेनाम्बरीषशरणं गत्वा निष्कृतिमाप।

**यादवान् प्रत्यभिसम्पातः**—अथ कदाचित् स्त्रीजनोचितवेशभूषितः शाम्बः द्वारकागतं मुनिमभ्येत्य 'किं मे गर्भे भविष्यति' इति जिज्ञासयामास। ततस्तपःप्रभावेण विदितार्थोऽसौ 'मूषलं भविष्यति, तेन त्वत्कुलं निर्मूलं यास्यति' इति शशाप।

**धृष्टद्युम्नस्य जन्म**—पुरा किल द्रोणेन निर्जितो द्रुपदराजः परमनिर्वेदमालभमानो तद्वधार्थं पुत्रेष्टिं कृत्वा धृष्टद्युम्न इति नाम पुत्रं लेभे।

**द्रोणस्य बधः**—भारतयुद्धस्य पञ्चदशदिवसे 'अश्वत्थामा हतः' इत्युच्चैः 'गजः' इति लघुस्वरेण व्याहृतेन युधिष्ठिरेण द्रौणिर्हत इति बुद्ध्वा द्रोणः पुत्रशोकेन नाशाग्रवर्त्तिप्राणो रथतललग्नो धृष्टद्युम्नेन खड्गेन हतः।

**धृष्टद्युम्ननिधनम्**—भारतयुद्धस्य पर्य्यावसानरजन्याम् अश्वत्थामा पाण्डवशिविरं गत्वा प्रसुप्तं पितृहन्तारं धृष्टद्युम्नं खड्गेन जघान।

**नरनारायणयोः सृष्टिः**—धर्म्मराजस्य मूर्त्त्यभिधानाया: भार्य्यायाः जठरे नारायणांशेन एकात्मनोः विभिन्नवपुषोस्तयोरेव जन्म। बदरिकाश्रमस्थयोस्तयोरुग्रं तपो दृष्ट्वा संत्रस्तैर्देवगणैस्तपोभङ्गाय सहकामेनाप्सरसः प्रेरिताः। ततस्तदूरुस्थं विसृष्य तौ देवगर्वखर्व्वाय रमणीरत्नमुर्व्वशीं संसृज्य देवभूमिं प्रापयताम्।

**नारायणस्य शेषशयनम्**—अथासौ पुरा नारायणः कल्पान्ते समग्रां महीं स्वकुक्षौ निधाय कमलयोनिं नाभिकमले धारयन् रमया सेव्यमानचरणो योगनिद्राविमिलितेक्षणोऽनन्तशय्यामधिशेते स्म।

**मधुकैटभबधः**—एकार्णवे शयानस्यास्य कर्णमलादुत्पन्नौ मधुकैटभनामानौ दनुजौ ब्रह्माणं हन्तुमुद्यतौ, तस्माच्च भीतिग्रस्तेन हिरण्यगर्भेण संस्तूयमानो योगनिद्रातः उत्थाय पञ्चसहस्रवर्षाणि युद्धं कृत्वा ताभ्यां वरं लब्ध्वा जघने तयोः शिरश्चिच्छेद।

**पुरूरवसः जन्म**—श्रूयते हि पुरा वैवस्वतः पौत्रः इलः प्रद्युम्न इत्यपरं नाम; स तु भूपतिः मृगयाप्रसङ्गेनाटवीमटन् महेशेन प्रतिषिद्धगमनसुमाकाननं प्रविश्य सपदि स्त्रीत्वं परिजग्राह। ततस्तद्रूपविमुग्धो बुधस्तस्याः सम्भोगेन पूर्णमनोरथः पुरूरवसं तनयमुत्पादयामास।

**पृथोः पृथ्वीदोहनम्**—श्रूयते हि त्रेतायामङ्गराजस्यौरसेन सुनीथायामुत्पन्नो वेणः स्वराष्ट्रे देवार्चनां बलिञ्च निवारयामास। तेन जातामर्षास्तत्रत्याः ब्राह्मणाः मन्त्रपूतदर्भेण तं निजघ्नुः। ततो मृतस्य तस्य दक्षभुजघर्षणादुत्पन्नः पृथुर्नाम भूपतिः लोकहितकाम्यया धनुष्कोट्या पर्व्वतानुत्सार्य्य वसुन्धरां समतलां निन्ये। स्वायम्भुवं मनुं वत्सं परिकल्प्य गोरूपिणीं महीमोषधीश्च दुदोह। ततः प्रभृति धरण्याः पृथ्वीति संज्ञाभवत्।

**प्रमद्वरायाः प्रत्युज्जीवनम्**—भृगुवंशीयः प्रमतितनयो रुरुर्नाम कश्चिद् ब्राह्मणवटुः विश्वावसोरौरसेन मेनकायामुत्पन्नां प्रणयिनीं प्रमद्वरां सर्पदंशनेन त्यक्तजीवितामात्मजीवनार्द्धेन प्रत्युज्जीव्योपयेमे।

**बभ्रुवाहनस्य पितृभिभाषणम्**—पुरा कदाचित् मणिपुरं गतः पार्थः काममानायां चित्राङ्गदायां बभ्रुवाहनं सुतमजीजनत्। ततो गच्छति काले युधिष्ठिरेणानुष्ठीयमानस्य यज्ञस्य हयरक्षणकार्य्यानुरोधेन पुनस्तत्रैवागतं विज्ञायार्जुनिस्तमभ्यर्थयितुमागत्य पार्थेन तिरस्कृतोऽभवत्। तस्माच्च जातामर्षः आहवे आहूय पितरं स्वात्मवीर्य्येण पराजयते स्म।

**ब्रह्मणः जन्म**—श्रूयते हि 'बहुस्यामजायत' इति परमपुरुषस्य इच्छामात्रेण जलं तत्र निक्षिप्तान्निखिलवीजादण्डं ततश्च सर्व्वलोकपितामहः जज्ञे।

**कन्याभिगमनम्**—अथ कदाचिदसौ ब्रह्मा दुहितुः शतरूपायाः रूपेण विमुह्य तां कामयमानः उद्वुढ़मभिलषति स्म। ततः शिष्टैरनाचरितं कार्य्यं कर्त्तुमिच्छन् पुत्रैस्तिरस्कृतोऽपि च्छलेनोद्वाह्य तस्यां स्वायम्भुवं नाम सुतमुत्पादयामास।

**भरद्वाजस्य घृताचीसङ्गतिः**—बृहस्पतेरङ्गजो भरद्वाजो मुनिस्तपस्तप्तुं हिमालयं गत्वा तत्राप्सरसं घृताचीं दृष्ट्वा स्खलिततपाः कामयमानः तस्यां द्रोणनामानं पुत्रमजीजनत्।

**मयदानवस्य प्रत्युपकारः**—अयं खलु दैतेयः हेमाभिधानायां स्वर्गविद्याधर्य्यां मायाविदुन्दुभिनामानौ द्वौ सुतौ मन्दोदरीं नाम्नीञ्च सुतामजीजनत्। सा तु मन्दोदरी रावणेन परिणीता। ततश्च बहुतिथिं खाण्डवारण्यवास्तव्योऽयं दानवस्तद्वनदाहावसरे पलायमानोऽसौ कृष्णेन हन्यमानः पार्थेन परित्रातः। तत् प्रत्युपकारैषिणा मयेन पूर्व्वं विन्दुसरोगुप्तैर्वृषपर्व्वगृहनिर्म्माणावशिष्टैर्मणिशिलाकणकैः पाण्डवानाममानुषी काञ्चनी सभा रचिता।

**महाभिषस्य ब्रह्मलोकाच्च्युतिः**—अथैकदा ब्रह्मलोकवास्तव्यो महाभिषो नाम राजा समीरणोद्वेजितवसनायाः सुरधुन्याः दर्शनापराधात् क्रुद्धेन विरिञ्चिनाभिशप्तो मह्यां प्रतिपतनयः शान्तनुर्नाम भूत्वा सकामां तामुद्वाह्य वशिष्ठशापान्मर्त्तमापन्नानष्टौ वसून् क्रमशोऽजनयत्।

**मान्धातुः निधनम्**—श्रूयते हि वैवस्वतान्वयोत्पन्न-

स्याभिमन्त्रितयज्ञीयोदकपीतस्य राज्ञो युवनाश्वस्य वामकुक्षिं विभिद्यासौ जातः। जातमात्रेण 'कं धास्यति' इति ऋत्विजां प्रश्ने देवराट् सम्मुखीभूय 'ममायं धास्यति' इति प्रदेशिनीस्राविणीममृतधारां पीत्वा व्यवर्द्धत, तेन च मान्धातेति नामाभूत्। ततो गच्छति काले दिग्विजयक्रमेण समग्रां पृथ्वीं विजित्य स्वर्गं राज्यं जेतुमुद्यतो मान्धाता इन्द्रेण मधुवनं प्रेषयित्वा मधुनन्दनेन लवनेन विनाशितः।

**मूकदानवस्य निधनम्**—मूको नाम दानवः शौकररूपं परिगृह्य देवकृत्यविघट्टनकामस्तपस्यन्तं पार्थं हिंसन् किरातार्जुनयोर्बाणेनासून् तत्याज।

**ययातेः जरासंक्रमणम्**—पुरा किल सोमादुद्भवान्वयस्य नहुषनृपतेरात्मजो राजा ययातिरेकदा मृगयार्थी वनमटन् कूपमध्यपतितां शुक्रसुतां देवयानीं दृष्ट्वा यत्नादुत्तोल्य भार्गवं प्रेषयामास। ततो गच्छता कालेन पुनराखेटार्थी सखीजनपरिवृतां तां दृष्ट्वा कामयमानः शुक्रानुमत्या विवाह्य तस्यां यदुतुर्व्वसू सुतौ जनयित्वा भूयोऽनुरोधपरतन्त्रोद्वाहितायां दैतराजवृषपर्व्वसुतायामुपयाचिकायां शर्म्मिष्ठायां द्रुह्यनुरून् तनयानुत्पादयामास। ततस्तद्विज्ञाय भर्त्तर्य्यभिमानिन्या देवयान्या वेदितस्य पितुरुषणसोऽभिसम्पातात् जराग्रस्तोऽङ्गेषु आत्मीयां जरां संक्रामयिष्यन् अनङ्गीकुर्व्वतश्चतुरस्तनयानभिसम्पातेन योजयित्वा कनिष्ठे स्वीकृते पुरौ तां विन्यस्य कतितिथीन् तद्यौ-

वनसुखेन विषयानुपभोज्य कनीयसे पुरवे राज्यं दत्त्वा भूयस्त-स्माज्जरामादाय चतुर्थाश्रमाचारमाचरितुं वनमगात्।

**याज्ञवल्क्यस्य दिवाकराराधना**—अथ कदाचिद् याज्ञवल्क्यः वैशम्पायनाद् यजुर्वेदमधीत्य सब्रह्मचारिणोऽधि-क्षिप्तवानिति क्रुद्धे गुरौ 'मत्तो यदधीतं तद्देहि' इति प्रार्थिते मूर्तिमन्ति यजूंषि उद्गीर्य तस्मै प्रत्यर्पितवान्। ततोऽन्ये हि वैशम्पायनादधीतारस्तित्तिरास्तानि समादधुः। परतश्च तेना-दित्यमाराध्य शुक्लान्ययातयामानि यजूंषि लब्धानि।

**युवनाश्वस्य गङ्गां प्रति शापः**—अथैकदा जाह्नवी तपस्यन्तं युवनाश्वं स्वोर्मिमालया प्लावयति स्म। तस्माच्च कुपितो युवनाश्वः 'मर्त्यलोकं विश' इति शशाप। ततः प्रभृति अर्द्धवपुषा युवाश्वस्य कावेरी नाम्नी कन्यारूपेण जन्म परिजग्राह। तेन कावेर्याः अर्द्धगङ्गेति नाम लोके प्रसिद्धम्।

**रवेः चन्द्राप्यायनम्**—देवाः खलु सुधाधरस्य सुधा-मयीश्चतुर्दशकलाः कृष्णप्रतिपदमारभ्यासितचतुर्दशीं यावत् प्रति-दिनमेकैककलां संपीय पक्षव्यापिनीं परमां तृप्तिमालभन्ते। ततश्चापरयोः कलयोरमावास्यायां जललतासु व्ययितावशेषां पञ्चदशीं कलां पितृपुरुषाः पीत्वा मासव्यापिनीं तृप्तिं विन्दन्ति। तदवशिष्टा षोडशी कला रवेरमाख्यमयूखमुपगता, तेनैव रविणा शुक्लप्रतिपदादारभ्य सुषुम्ना नामधेयेन रश्मिना क्रमेणाप्याय्य पुष्कलता समासादिता।

वड़वालङ्घनम्—श्रूयते हि पुरा वैवस्वतभार्य्या विश्वकर्म्मनन्दिनी संज्ञा भर्त्तृतेजः सोढ़ुमशक्ता स्वच्छायां गृहे संस्थाप्यात्मनातिगूढ़ा वड़वारूपिणी तपस्यन्त्यटवीमध्युवास ततश्चैकदा च्छायापादप्रहारोद्यतं सपत्नीपुत्रं यमुनाभ्रातरं 'पादस्ते पततु' इति शशाप। तेन विवस्वान् समाधिदृष्ट्या संज्ञां परिज्ञाय वाजिरूपेण तद्वनं प्रविश्य तपस्यन्त्यां तस्यामश्विनीकुमारावपरञ्च रेवन्तं नामधेयं सुतानजीजनत्। रेतात्ययेन तृतीयकुमारस्य जन्मपरिग्रहात् रेवन्त इति नामासीत्।

तेजःशातनम्—अथ कन्यादुःखेन विद्रूनमानसस्त्वष्टा जामातरं भ्रमियन्त्रे संस्थाप्य तस्याष्टधा शातितेन भूमौ निसन्नेन तेजसा विष्णोश्चक्रं, शम्भोः शूलं, कुवेरस्य शिविकानामायुधमन्येषामपि देवानां विविधानि प्रहरणानि च निर्म्मितवान्।

**रामस्य**—चक्रवाकेष्वभिसम्पातः ;—यदा सीतावियोगदुःखविद्रूनमानसो रामः सीतार्थं विलपति, तदा कश्चिच्चक्रवाकस्तं जहास। तेन क्रुद्धः स चक्रवाकान् प्रति 'प्रतिदिनं रजन्यां दयिताविच्छेददुःखं सहिष्यध्वे' इति शशाप।

**रावणस्य**—मोहः—श्रुयते हि कदाचिद्वरदर्पितो रावणस्तपस्विन्या वेदवत्या धर्षणतया तच्छापेन प्रक्षीणतया मोहं परिजग्राह।

कैलासोत्पाटनम्—अथैकदा पुष्करस्थेन विहरतो दशाननस्य कैलासशैलशृङ्गप्रतिहतगतित्वेनात्यवमर्षितस्तमेव शैल-

राजमुत्पाटयन् भीतित्रस्तया भवान्या समाश्लेषितस्य शम्भोः पादाङ्गुष्ठेनावष्टब्धभूधरभरनिपीड़ितोभुजस्तवप्रसन्नादेव महेशात् व्यसनमुक्तिं देवादीनां मनुष्याणाञ्चावध्यत्वं वरमाजग्राह।

शिरश्छेदः—अथ दशाननः पितामहमाराधयितुमुग्रं तपस्यन् प्रतिवर्षं सहस्रमेकैकं शिरो वह्नौ प्रक्षिप्य नववर्षसहस्रेषु व्यतीतेषु ब्रह्मणोऽनुग्रहाल्लूनानि हृतनवशिरांसि स्वाभिवाञ्छितञ्चापि वरं लब्धवान्।

[ शिशुपालबधे तथा वीरचरितादौ च दशाननो महेशमाराध्याग्नौ शिरो जुहावेति वर्णनमासीत्। पुराणतत्त्वानि तत्र प्रमाणानि। मन्यन्ते केऽपि सभ्याः शैवाः कवयः पितामहार्थं शिरःकृन्तनं महेशमाहात्म्यप्रकटितुं कल्पयन्ति इति। ]

वालिना सौख्यम्—अथैकदा बलदर्पितो रावणो दक्षिणसागरे सन्ध्यामुपासितेन वालिना युद्धार्थमुपगम्य तेन कक्षान्तरसन्निवेशितः पूर्व्वापरादीन् नीरनिधीन् परिभ्राम्य स्वराजधानीं किष्किन्ध्यामानीतः। ततस्तेन निरतिशयां लज्जामनुभूय कपिराजेन सौख्यं विधाय स्वपुरमगात्।

बले पराभवः—अथ कदाचिद्दशाननो दिग्विजयव्यापारेण पातालपुरं गत्वात्मबलं स्पर्द्धते स्म। तदाकर्ण्य पातालेश्वरः प्रह्लादनप्ता विरोचनतनयो बलिर्हिरण्यकशिपोः कुण्डलमुत्तोलितुमनुरोरोध। तदनुरुद्धो रावणः सुबहुचेष्टया मनागपि तदुत्तोलितुं न शशाक। तस्मान्निरतिशयो लज्जितः लङ्कां प्रति ययौ।

अनरण्यबध: :—पुरा किल राक्षसपतिर्दशाननो दिग्विजयव्यापारे सम्भुतनयमैक्षाकमनरण्यमाहवे यमसदनं प्रेरयामास।

**बलदेवस्य**—यमुनाकर्षणम् ;—पुरा कदाचित् वृन्दारण्ये गोपवधूभि: क्रीड़यता मधुपानप्रमत्तेन बलदेवेन स्नानायाहूता यमुना मत्त इत्यनाश्रवा हलयन्त्रेणाचकृषे।

सूतहननं—तीर्थयात्राप्रसङ्गेन रैवतोद्यानमुपस्थितो हलायुधो द्विजगणै: कृतसत्कारस्तन्मध्यस्थं व्यासासनासीनं पुराणव्याचक्षमाणं सूतमनभ्युद्गमापराधेन व्यापाद्य परतोऽनुसूचयन् तत्पापक्षालनार्थं सरस्वतीतीर्थे सस्नौ।

**वाड़वानलस्य**—उत्पत्ति:—श्रूयते हि पुरा लालसाप्रणोदितेषु राजन्येषु कृतवीर्य्यसत्रलब्धधनकनकादिसमृद्धान् भार्गवान्त दुगर्भांश्च व्यपातयत्सु कयाचिद्भार्गवभार्य्ययोरुध्वृतो गर्भ: क्रोधादुरुं विदार्य्यात्मतेजसा चैतानधर्षयत्। ततश्चान्वर्थनामासौ और्व्वो लोकदिधृक्षया तपश्चरन् पितृपुरुषप्रतिवारित: स्वकोपवह्निं जलधिजलेषु विससर्ज। तत:प्रभृति स एव ब्राह्मणोत्थकोपो वड़वातुण्डाकृतिरनलमुद्गोरन् निखिलजनात्मकमुदकमिदानीमपि पिबति।

**वायो:**—अञ्जनाधर्षणम् ;—अथ कदाचिद्वायु: कपिराजस्य केशरिण: ऋतुस्नातायां भार्य्यायामञ्जनायां भुवनविश्रुतं वीरप्रधानं रामानुचरं हनूमन्तं शिवावतारमजनयत्।

**वालिनः**—दुन्दुभिहननम्—महिषरूपधरो वलदर्पितो दुन्दुभिर्नामासुरो वालिना युद्धमभेत्य उभयोर्व्वलनिर्णये वालिना हतः।

मायाविनिधनम्—दुन्दुभिपुत्रो मायावी पितृनिधनमुपश्रुत्य वलजिज्ञासुर्य्योद्धुमभेत्य वालितेजमा पराभूय कमपि गिरिगह्वरं विवेश। ततस्तु तदनुधावितः कपिराजो भ्रातरं सुग्रीवं तद्बिलद्वारि संस्थाप्य स्वयं तत्र वर्षमेकमुषित्वा दानवं निहत्य बहिरगात्। अत्रान्तरे बहुतिथावुपचितेऽपि भ्रातुरागमनं नोपलभ्य सुग्रीवस्तस्य मरणं निश्चित्य राजधानीं प्रत्यावृत्तय राजसिंहासनमलंचकार। ततस्तु प्रत्यावृत्तेन वालिना प्रथमं भ्रातरं नासमीच्य परतस्तस्य राज्याधिकारञ्च विज्ञाय अतिकुपितेन स राज्यात् चिरं निर्व्वासितः। स तु परमनिर्व्वेदमालभन् कतिपयैः सहचरैः ऋष्यमूकाद्रिमधुरष्य गच्छता कालेन रामेण सह मैत्रीं विधाय रामनिहते भ्रातरि पुनराज्यमधिचकार।

**विशामित्रस्य**—ब्राह्मण्यलाभः—अथैकदा गाधिराजसूनौ विश्वामित्रे स्वविभवानुरूपैरनुचरैः सह वशिष्ठाश्रममागते ऋषिणा कामधेनोः शवलायाः प्रसादात् तस्य राजयोग्यः सत्कारोऽकारि। तेनातिविस्मितो राजा शवलायाः माहात्म्यमवगम्य तां ब्रह्मर्षिमयाचत। तामदित्सता वशिष्ठेन समं समरमवतार्य्य तद्ब्रह्मण्यतेजसाभिभूतः परमनिर्व्विणो ब्राह्मण्यप्राप्तये बहुसहस्रसमाः उग्रं तपस्तप्त्वा विरिञ्चि-

प्रसादादुत्तरोत्तरेण राजर्षित्वं महर्षित्वं परिशेषे ब्राह्मणत्वञ्च समालेभे ।

त्रिशङ्कूद्धरणम्—वैवस्वदन्वयस्त्रिशङ्कुर्नाम राजा सबान्धवैः सशरीरं स्वर्गं यातुमभिलषन् तदुपयोगियज्ञार्थं सपुत्रवशिष्ठदेव-मनुरोरोध। तेन महर्षिणा तदसम्भवं विभाव्य प्रत्याख्यातः। भूयोभूयः सैव प्रार्थना विज्ञापितो राजा कुपितेन ऋषिणा 'चण्डालत्वं याहि' इति शेपे। ततश्च चण्डालभावमनुप्राप्त-स्त्रिशङ्कुर्विश्वामित्रं शरणमुपलभ्य तदीयतपःप्रभावेण द्यामाविशन् मघवता च्यावितः परिपतन् कौशिकप्रतिनिवारितोऽर्द्ध-मार्गेऽतिष्ठत्। अथ स्वतेजसा नूतनमेव स्वर्गं परिकल्पयन् देवानुनयनिवारितः स एव ऋषिः स्वकीये स्वर्गे तं त्रिशङ्कुम-स्थापयत्।

शुनःशेफमोचनम्—ऐक्ष्वाकवंशस्य अम्बरीषभूपतेर्महाक्रतो-रश्वमेधस्य यज्ञीयाश्वे देवराजेनापहृते तद्विघ्नोपशान्तये पशु-परिकल्पितो मातृपितृविक्रीतः ऋचिकात्मजः शुनःशेफः पथि विश्वामित्रं शरणमुपगम्य ततः प्राप्तमन्त्रेण वैश्वानरमाराध्य आत्मजीवनं राजानं तावद्यज्ञफलं प्रापयामास।

रम्भां प्रति शापः—पुरा किल उग्रं तपस्यन्तं कौशिकं मोहयितुं देवराजप्रेषिता रम्भा महर्षिशापेन पाषाणमयी बभूव।

**वृकोदरस्य**——हिड़म्बनिधनं,——जतुगृहदाहानन्तरं समावृत्तो भीमो हिड़िम्बवने विश्रामसुखमनुभवन् तन्मांसलोलुपं हिड़िम्बराक्षसं दोर्भ्यामाकृष्य पञ्चत्वमनयत्।

सौगन्धिकाहरणम्—अथैकदा वदरिकाश्रमस्थेषु युधिष्ठिरादिषु वृकोदरः पाञ्चालीप्रार्थनया तत्रत्यनिशाचरान् विजित्य कुवेरेणाभिनन्दितस्तत्पालिताया निर्भ्करिण्या यथेप्सितान् सौगन्धिकानाजहार ।

वृहस्पतेः—भ्रातृकलत्रधर्षणम् ;—अथ कदा आङ्गिरसो ज्यायसो भ्रातुरुतथस्य भार्य्यामन्तर्व्वत्नीं ममताभिधानामुपगच्छत् प्रतिवारयता जठरस्थार्भकेण चरणेन तद्रेतो मार्गेऽवरुद्धे 'दीर्घं तमसि प्रवेक्ष्यसि' इति तमेव बालं शशाप। ततश्च गच्छता कालेन स जननमभिलभ्य दीर्घतमनाम्ना ख्यातः आसीत् ।

व्यासस्य—भ्रातृकलत्रगमनम्—श्रुयते हि पुरा जननीसत्यवत्या निर्देशेन पराशरतनयो व्यासः स्वसोदर्य्यस्य शान्तनुनन्दनस्य विचित्रवीर्य्यस्य भार्य्ययोरम्बिकाम्बालिकयो धृतराष्ट्रः पाण्डुश्च सूतौ जनयामास ।

शम्बरस्य—निधनम्—पुरा किल शम्बरोनामासुरः कृष्णौरसोत्पन्नेन प्रद्युम्ननाम्ना कामेनात्मविनाशो घटिष्यतीति ज्ञात्वा जातं बालं षष्ठेऽहनि सूतिकागृहं प्रविश्य चोरयित्वा सागरजले चिक्षेप। ततोऽसौ गच्छति काले दैवगत्या स्वगृहानीतस्य मीनस्य कुक्षौ जीवितबालकमेकं प्राप्य तत्पोषणार्थं गृहस्थितायै प्रच्छन्नकामवल्लभायै मायावतीगृहीतनामधेयायै प्रत्यर्पयत्। सा च विदितवृत्तान्ता मायावती मत्तनिर्व्विशेषेण पालयित्वा आसुरीं विद्यां शिक्षयामास

ततश्च काले शम्बरं निपात्यासौ बालः भार्य्यया मायावत्या सह स्वभवनं ययौ।

**शिवस्य**—मुनिपत्नीदूषणम्;—अथ कदाचित् हरिहरौ युवकयुवतीरूपधरौ दारुवनं प्रविश्य तत्रत्याः युवकयुवतीर्मुनि-कन्यापत्नीर्म्मोहयामासतुः।

त्रिपुरदहनम्;—अथ कदाचिदीशानः सुरहितेच्छया सर्व्व-देवमयं महत् स्यन्दनमाश्रित्य ब्रह्माणञ्च सारथिं कृत्वा विरिञ्चि-लब्धवरेण मयविनिर्म्मितातिदुर्भेद्यं दानवदुर्गं कालायसरजत-हैमं पुरत्रयं त्रिदेवतमयशक्तित्रययुक्तेन शरेण शुष्कपर्णदाहवत् ददाह।

यज्ञमृगहननम्;—श्रूयते हि कदाचित् शम्भुना साङ्गजस्य यज्ञवराहस्य वधोऽकारि।

गजासुरमर्द्दनम्—पुरा किल कैलासपतिः पिनाकी नन्दि-केश्वरेण गजरूपधरं नीलदानवं घातयित्वा तस्य चर्म्म बिभ्रत् ताण्डवं कृतवान्।

अन्धकविजयः—पुरा किल विधातृवरदर्पितोऽन्धकनामा-सुरो भवानीं हर्त्तुमुद्यन् भवेशेन स्वायुधेन निहतस्तद्रक्तकणाद-संख्यकानन्धकासुरानुत्पन्नान् दृष्ट्वा स्वतः प्रत्युत्पन्नैर्मातृ-गणैर्नारायणसंसृष्टया च शुष्करेवत्या पीतासृजोऽसुराणाहवे निपात्य तेन पार्व्वतीपतिना मूलान्धकं शूलेन निर्भिद्य-प्रस्तवते तदसुराय गाणपत्यपदमदायि।

केतकीवर्जनम्;—अथ कदाचित् 'कोऽयं सृष्टिकर्त्ता' इति

परस्परं विवदमानयोर्हरिब्रह्मणोर्मध्ये महदेकं लिङ्गमाविरासीत्। ततश्च 'य एवास्य पारं यातुं समर्थोऽस्ति, स एव महान्' इत्यन्तरीक्षवचनमाकर्ण्य अधोगतो विष्णुः पारमनालभ्य परावृत्तः, ब्रह्मापुरुपरि यातः पारमनाप्य लिङ्गशीर्षात् प्रस्रश्यमानं केतकीदलमादाय प्रत्यावृत्य विष्णुं 'पारमहमगमम्' इति केतकीं साक्षीकृत्यानृतं व्याजहार। तेन कुपितो हरः वितथभाषिणीं ब्रह्मवचनसमर्थितवतीं केतकीं परिजहौ।

**शिशुपालस्य**—जननम्—श्रूयते हि पुरा शिशुपालश्चतुर्हस्तस्त्रिलोचनः संवृत्तः, जातमात्रश्च खरवन्ननर्द। 'यस्य क्रोड़ाधिगतेनास्य अधिकभुजलोचने विलोपमेष्यतः स एवास्य हन्ता' इत्यशरीरिण्यां वाण्यामुद्गतायां पर्य्यायेण कृष्णाङ्कमधिरोपिते वृद्धङ्गे विलुप्ते वधार्हं शतापराधमस्य मर्षिष्यतीति अनुरुद्धेन कृष्णेन तथैव दिव्यमकारि।

**सौदासस्य**—क्रव्यादत्वप्राप्तिः—अथ कदाचित् सौदासो नाम नरपतिः राक्षसमायाविमोहितो वशिष्ठाय नरपिषितं भक्ष्यार्थमदात्। तेन क्रुद्धो मुनिस्तं 'राक्षसो भव' इति शशाप। परतश्च प्रणिधानेन सर्व्वं विज्ञाय महर्षिः शापस्य द्वादशवर्षकालं समयं निरूपयामास।

**हनुमतः**—अर्कग्रहणोद्यमः—पुरा किल जातमात्रो हनुमान् लोहितफलबुद्धार्कं भक्षितुमाचक्राम।

त्रिशिरानिधनम्—कुम्भकर्णे निधने ततः पवननन्दनः रावणपुत्रस्य त्रिशिरसः सकीरिटीनि त्रीणि शिरांसि खड्गेन चिच्छेद।

द्रोणाद्रिहरणम्—पुरा किल रामरावणयोर्युद्धे संज्ञातीरोहिततयोः रामलक्ष्मणयोः प्रबोधनाय शक्तिनिर्भिन्नहृदयस्य सौमित्रेर्लक्ष्मणस्य च प्रत्युज्जीवनाय वारद्वयमेवौषधिपर्व्वतं द्रोणमाजहार।

—०—

## विविधज्ञातव्यविषयाः

—:*:—

### संख्याबोधकाः

एक—श्चन्द्रार्क-विघ्नेशरद-शुक्राच्चि-भू-ध्रुवाः।
द्वयं—द्वन्द्वं युगं युग्मं यमलं यामलं यमम्॥
युगलं द्वितयं पक्षौ नदीकूलं करः कुचः।
जानुपादौ बाहुगुल्फौ जङ्घोष्ठौ राघवात्मजौ॥
असिधाराकर्णहोराकपोलनयनभ्रुवः।
नितम्बायणपक्ष्माणि हनूरुवङ्वस्तनाः॥
त्रयं—कालाग्नि-रुद्राच्चि-सन्ध्या-भुवन-पुष्करम्।
ग्रीवारेखा-शूलशिखा नाड़ी रामो गुणः पुरः॥

गायत्री वह्निचपणी विष्णुपत्नी बलिस्तनुः ।
शक्तिमूर्त्तिभृङ्गिपादस्त्रिविक्रमपदार्पणम् ॥
चत्वारि—गोस्तन-ब्रह्ममुख-वर्णार्णवाश्रमाः ।
खड्गन्तिदन्तसेनाङ्ग-विष्णुबाहुयुगाः श्रुतिः ॥
पुरुषार्थोपाययामपशुमन्त्रपदानि च ।
पञ्च—पाप-महाकाव्य-शिवास्येन्द्रिय-पाण्डवाः ॥
विषयानिलवर्गाङ्ग-भूतखद्रुमहामखाः ।
पुराणलक्षण-प्राण-सारकश्लेषपल्लवम् ॥
षट्—वज्रकोणवेदाङ्ग-रस-तर्कारि-कारकम् ।
प्रयोग-प्रश्न-गायत्रीजठरं चक्रवर्त्त्यपि ॥
शास्त्रशस्त्राङ्ग-कर्मर्त्तु-भृङ्गपाद-गुहाननम् ।
सप्त—मातृ-द्वीप शैल-वारराज्याङ्गताण्डवाः ॥
मुनीस्वरनदीव्याध-वह्निजिह्वाश्वधातवः ।
अष्ट—दिक्पालेशमूर्त्ति-सिद्धि-सिद्धान्त-कुञ्जराः ॥
वसु-लक्ष्मी-गन्ध-मदब्रह्म-श्रीवाहिमङ्गलम् ।
गया-योगाङ्ग-नत्यङ्ग-महिषी-कूलपर्व्वताः ॥
नव—रत्नं निधिर्गोप्यखण्डधान्य-ग्रहास्तथा ।
धेनुरन्ध्रशीला-भक्ति-वीरव्याघ्रीस्तनाम्बुदाः ॥
विन्दथैकाः शून्यपूर्णकान्तामध्याम्रखानि च ।
दश—स्नानस्थानुबाहु-रावणानन-चुम्बनम् ॥
कृष्णावतार-दिग्हस्ताङ्गुल्यवस्थेन्दु-वाजिनः ।
धर्म्मपत्नीधूपपङ्क्तिनिघण्टुसुतरूपकम् ॥

एकादश—स्यात् करणं कुरुसेना-वृषध्वजः ।
द्वादश—अर्का-मास-राशि-संक्रान्ति-गुहबाहवः ॥
शारिकोष्ठकसेनानी-नेत्रभूपतिमण्डलाः ।
त्रयोदश—सुरवीथ्यङ्ग-विश्वकश्यपकामिनी ॥
सामगाचार्य्य-ताम्बूलगुणप्रतिमुखाङ्गकम् ।
चतुर्द्दश—मनुर्व्विद्यायमेन्द्राभिनया मृगः ॥
पञ्चदश—तिथिः सामिधेनी कान्ता कलापि च
षोड़श—इन्दुकला गौरी नाटाचेष्टोपकारकम् ॥
संस्कारः, सप्तदश—तु प्राजापत्यपशुर्म्मतः ।
अष्टादश—धृतिः पीठं पर्व्वोपद्वीपभारतम् ॥
एकोनविंशति—र्द्देववादामप्यथ विंशतिः—
अङ्गुलीरावणभुजकपोलाच्चिकरभस्नुवः ॥
एकविंशति—संख्यायां मूर्च्छनानुस्मृतिः समित् ।
द्वाविंशति—श्चोपसर्ग—श्चतुर्व्विंशति-वाचकाः ॥
वाक्यदोषन्यायगुण-गायत्रीजिनकेशवाः ।
शतं—त्वायुःकञ्जदल-शक्रयज्ञादियोजनाः ॥
सहस्रं—जाह्नवीवक्त्रं शेषशीर्षाम्बुजच्छदाः
रविनागार्जुनकरा-वेदशाखेन्द्रदृष्टयः ।
एतेषामपि पर्य्यायास्तत्तत्संख्याविबोधकाः ॥

—०*०—

## संख्यावाचकशब्दाः

१। एकः
२। ( द्वि ) द्वौ
३। ( त्रि ) त्रयः
४। ( चत्वार् ) चत्वारः
५। (पञ्चन्) पञ्च
६। ( षष् ) षट्
७। ( सप्तन् सप्त
८। (अष्टन्) अष्ट, अष्टौ
९। ( नवन् ) नव
१०। ( दशन् ) दश
११। (एकादशन्) एकादश
१२। ( द्वादशन् ) द्वादश
१३। (त्रयोदशन् ) त्रयोदश
१४। (चतुर्दशन्) चतुर्दश
१५। (पञ्चदशन्) पञ्चदश
१६। (षोड़शन्) षोड़श
१७। (सप्तदशन्) सप्तदश
१८। (अष्टादशन्) अष्टादश
१९। ऊनविंशतिः
२०। विंशतिः

२१। एकविंशतिः
२२। द्वाविंशतिः
२३। त्रयोविंशतिः
२४। चतुर्व्विंशतिः
२५। पञ्चविंशतिः
२६। षड्विंशतिः
२७। सप्तविंशतिः
२८। अष्टाविंशतिः
२९। ऊनत्रिंशत्
३०। त्रिंशत्
३१। एकत्रिंशत्
३२। द्वात्रिंशत्
३३। त्रयस्त्रिंशत्
३४। चतुस्त्रिंशत्
३५। पञ्चत्रिंशत्
३६। षट्त्रिंशत्
३७। सप्तत्रिंशत्
३८। अष्टत्रिंशत्
३९। एकोनचत्वारिंशत्
४०। चत्वारिंशत्

४१ । एकचत्वारिंशत्
४२ । द्विचत्वारिंशत्
४३ । त्रिचत्वारिंशत्
४४ । चतुश्चत्वारिंशत्
४५ । पञ्चचत्वारिंशत्
४६ । षट्चत्वारिंशत्
४७ । सप्तचत्वारिंशत्
४८ । अष्टचत्वारिंशत्
४९ । ऊनपञ्चाशत्
५० । पञ्चाशत्
५१ । एकपञ्चाशत्
५२ । द्वि (द्वा) पञ्चाशत्
५३ । त्रि (त्रयः) पञ्चाशत्
५४ । चतुःपञ्चाशत्
५५ । पञ्चपञ्चाशत्
५६ । षट्पञ्चाशत्
५७ । सप्तपञ्चाशत्
५८ । अष्टपञ्चाशत्
५९ । ऊनषष्टिः
६० । षष्टिः
६१ । एकषष्टिः
६२ । द्वि (द्वा) षष्टिः
६३ । त्रि (त्रयः) षष्टिः
६४ । चतुःषष्टिः
६५ । पञ्चषष्टिः
६६ । षट्षष्टिः
६७ । सप्तषष्टिः
६८ । अष्ट (अष्टा) षष्टिः
६९ । ऊनसप्ततिः
७० । सप्ततिः
७१ । एकसप्ततिः
७२ । द्वि (द्वा) सप्ततिः
७३ । त्रि (त्रयः) सप्ततिः
७४ । चतुःसप्ततिः
७५ । पञ्चसप्ततिः
७६ । षट्सप्ततिः
७७ । सप्तसप्ततिः
७८ । अष्ट (अष्टा) सप्ततिः
७९ । ऊनाशीतिः
८० । अशीतिः
८१ । एकाशीतिः
८२ । द्व्यशीतिः
८३ । त्र्यशीतिः
८४ । चतुरशीतिः

८५। पञ्चाशीतिः

८६। षडशीतिः

८७। सप्ताशीतिः

८८। अष्टाशीतिः

८९। एकोन ऊननवतिः वा नवाशीति

९०। नवतिः

९१। एकनवतिः

९२। द्वि (द्वा) नवतिः

९३। त्रि (त्रयः) नवतिः

९४। चतुर्नवतिः

९५। पञ्चनवतिः

९६। षण्णवतिः

९७। सप्तनवतिः

९८। अष्ट (अष्टा) नवतिः

९९. नवनवतिः, वा ऊनशतम्

१००। एकशतं, वा शतम्

१०१। एकाधिकशतम्

१०२। द्व्यधिकशतमित्यादि

१,०००। सहस्रम्

१०,०००। अयुतम्

१००,०००। लक्षम्

१,०००,०००। नियुतम्

१०,०००,०००। कोटिः

इत्यादि उक्तञ्च—

यथोत्तरं दशगुणं भवेदेको दशामुतः।
शतं सहस्रमयुतं लक्ष-प्रयुत-कोटयः॥
अर्व्वुदमब्जं खर्व्वञ्च निखर्व्वञ्च महाम्बुजम्।
शङ्को वार्द्धिरन्त्यं मध्यं परार्द्धञ्चेति नामतः॥ *

* एक, दशन् (पुं) दश दशेशत (क्लीं) दश शते सहस्र (क्लीं), दश सहस्रे अयुत (क्लीं), दश अयुते लक्ष (क्लीं), दशलक्षे कोटि (स्त्रीं), दश कोटिते अर्व्वुद (क्लीं), दश अर्व्वुदे पद्म (क्लीं), दशपद्मे खर्व्व (क्लीं), दश खर्व्वे निखर्व्व (क्लीं), दश निखर्व्वे महापद्म (क्लीं), दश महापद्मे शङ्क (पुं),

दश शङ्के सागर (पुं), दश सागरे अन्त्य (क्ली), दश अन्त्ये मध्य (क्लीं), दश मध्ये परार्द्ध ( क्ली )।

## संख्यावाचकशब्दानां व्यवहारविधिः

एकशब्दादारभ्य 'अष्टादशन्' शब्दपर्य्यन्तसंख्यावाचकशब्दाः विशेषणानि—

एकः—एको वृक्षः, एका लता, एकं फलं।

द्वि—द्वौ हस्तौ, द्वे बालिके, द्वे फले।

त्रि—त्रयो मानवाः, तिस्रः कन्याः, त्रीणि भूवनानि।

चत्वार्—चत्वारो वेदाः, चतस्रो युवतयः, चत्वारि कुसुमानि।

पञ्चन्—पञ्च नराः, पञ्च नार्य्यः, पञ्च भूतानि।

षष्—षड्ऋतवः। सप्त समुद्राः। अष्टौ वसवः। नव ग्रहाः। दश दिशः। एकादश रुद्राः। द्वादश आदित्याः इत्यादि।

विंशत्याद्याः सदैकत्वे सर्व्वाः संख्येयसंख्ययोः।
संख्यार्थे द्विबहुत्वेस्तस्तासु चानवतेः स्त्रियः॥

विंशतिप्रभृतयः संख्यावाचकशब्दाः स्त्रीलिङ्गैकवचनरूपाः। ता हि संख्येयाः (विशेषणानि) संख्याः (विशेष्याणि)च भवन्ति॥ शत-सहस्रप्रभृतयः शब्दाः क्लीवलिङ्गाति, कोटिशब्दस्तु स्त्रीलिङ्गम्।

विशेषणाणि यथा—विंशतिश्छात्राः पठन्ति। त्रिंशत् स्त्रियः गच्छन्ति। चत्वारिंशत् फलानि वृक्षात् पतितानि। शतम् आम्राः। सहस्रं मुद्राः। विंशत्या अश्वैः।

विशेष्याणि—छात्राणां विंशतिः। द्वे विंशती फलानाम्। तिस्रो विंशतयो मनुष्याणाम्। त्रीणि शतानि अश्वानाम्। बालिकानां पञ्चसहस्री।

## पूरणवाचकशब्दाः—

| संख्या | पुंलिङ्गम् | स्त्रीलिङ्गम् |
| --- | --- | --- |
| एक | प्रथमः | प्रथमा |
| द्वि | द्वितीयः | द्वितीया |
| त्रि | तृतीयः | तृतीया |
| चत्वार् | चतुर्थः | चतुर्थी |
| पञ्चन् | पञ्चमः | पञ्चमी |
| षष् | षष्ठः | षष्ठी |
| सप्तन् | सप्तमः | सप्तमी |
| अष्टन् | अष्टमः | अष्टमी |
| नवन् | नवमः | नवमी |
| दशन् | दशमः | दशमी |
| एकादशन् | एकादशः | एकादशी |
| द्वादशन् | द्वादशः | द्वादशी |
| त्रयोदशन् | त्रयोदशः | त्रयोदशी |
| चतुर्दशन् | चतुर्दशः | चतुर्दशी |
| पञ्चदशन् | पञ्चदशः | पञ्चदशी |

| | | |
|---|---|---|
| षोड़शन् | षोड़शः | षोड़शी |
| सप्तदशन् | सप्तदशः | सप्तदशी |
| अष्टादशन् | अष्टादशः | अष्टादशी |
| ऊनविंशति | ऊनविंशः | ऊनविंशी |
| विंशति | विंशः | विंशी |
| एकविंशति | एकविंशः | एकविंशता |
| त्रिंशत् | त्रिंशः | त्रिंशी |
| चत्वारिंशत् | चत्वारिंशः | चत्वारिंशी |
| पञ्चाशत् | पञ्चाशः | पञ्चाशी |

इत्यादि ।

विंशतिप्रभृतिशब्दानां पूरणार्थे तमप्रत्ययोऽपि स्यात् । यथाः—विंशतितमः, त्रिंशत्तमः, चत्वारिंशत्तमः, पञ्चाशत्तमः, षष्ठितमः, सप्ततितमः, अशीतितमः, नवतितमः, शततमः, सहस्रतमः इत्यादि ।

सकृत् (अव्यय) एकवारम्, द्विः, द्विवारम् । त्रिः, त्रिवारम् । चतुः, चतुर्व्वारम् । पञ्चकृत्वः, षट्कृत्वः, इत्यादि । एवं एकधा, द्विधा, त्रिधा, चतुर्धा, पञ्चधा, षोढ़ा, सप्तधा, इत्यादि ।

## ईयस् इष्टप्रत्ययेन च कतिशब्दानां रूपाणि

| ईयस् | इष्ठ |
|---|---|
| प्रशस्य श्रेयान् ज्यायान्; | श्रेष्ठः ज्येष्ठः |
| वृद्ध, ज्यायान् वर्षीयान् ; | ज्येष्ठः वर्षिष्ठः |

| | |
|---|---|
| आन्तिक, नेदीयान् ; | नेदिष्ठः |
| बाढ़, साधीयान् | साधिष्ठः |
| स्थूल, स्थवीयान् | स्थविष्ठः |
| दूर, दवीयान् | दविष्ठः |
| युवन्, यवीयान्, कनियान्, | यविष्ठः, कनिष्ठः |
| ह्रस्व, ह्रसीयान् | ह्रसिष्ठः |
| क्षिप्र, क्षेपीयान् | क्षेपिष्ठः |
| क्षुद्र, क्षोदीन् | क्षोदिष्ठः |
| प्रिय, प्रेयान् | प्रेष्ठः |
| स्थिर, स्थेयान् | स्थेष्ठः |
| उरु, वरीयान् | वरीष्ठः |
| बहुल, वंहीयान् | वंहिष्ठः |
| गुरु, गरीयान् | गरिष्ठः |
| तृप, त्रपीयान् | त्रपिष्ठः |
| दीर्घ, द्राघीयान् | द्राघिष्ठः |
| वृन्दारक, वृन्दीयान् | वृन्दिष्ठः |
| बहु, भूयान् | भूयिष्ठः |
| अल्प, कनीयान्, अल्पीयान् | कनिष्ठः, अल्पिष्ठः |
| दृढ़, द्रढ़ीयान् | द्रढ़िष्ठः |
| कृश, क्रशीयान् | क्रशिष्ठः |
| पृथु, प्रथीयान् | प्रथिष्ठः |

इत्यादि

## उपमानोपमेयव्यवस्था

'विभक्तिः पुनरेकस्यादुपमानोपमेययोः ।'

येन सह तुलयति तदुपमानम् । यस्य च तुलना स उपमेयः । उपमानोपमेययोः एका विभक्तिः । लिङ्गवचनयोर्नास्तिनियम यथा—चन्द्र इव मनोरमं शिशुमुखम् । अत्र 'चन्द्रः' उपमान 'शिशुमुख'मुपमेयः । अत्र समाना विभक्तिः ; किन्तु 'मुखं' क्लीब-लिङ्गं 'चन्द्र'स्तु पुंलिङ्गशब्दः । मेघ इव श्यामः । लतया इव कोमलेन हस्तेन । पितुरिव शिक्षकात् उपदेशं लभते इत्यादि

## रचनानिबन्धनोपक्रमः

( शिक्षार्थिनामुपदेशाय प्रसङ्गत इदानीं काव्यस्वरूपाणि तेषां-भेदाश्च निरूप्यन्ते । ) तत्रादौ काव्यमाह—

काव्यं हि यशसेऽर्थाय शिवेतरनिवृत्तये ।
कान्तावदुपदेशाय परनिवृत्तये क्षणात् ॥

### काव्यस्य भेदाः—

सालङ्कारगुणौ काव्यं शब्दार्थौ दोषवर्जितौ ।
तथा कवीनां समयानुरोधेन निबन्धितम् ॥
दृश्यं द्विविधं काव्यं श्राव्यदृश्यविभेदतः ।
श्राव्यन्तु त्रिविधं ज्ञेयं गद्यपद्योभयात्मना ॥
आपादः पदसंघातो गद्यं, पद्यं चतुष्पदम् ।
गद्यपद्यात्मकं काव्यं चम्पुरित्यभिधीयते ॥

दृश्यकाव्यानां दशभेदा यथा हि :—

दृश्यन्तु दशधा प्रोक्तं नाटकादिविभेदतः ।
स्रव्यं ध्वनिर्गुणीभूतव्यङ्ग्यं चित्रमिति त्रिधा ॥
वाच्यातिशायि व्यङ्ग्यं यत् काव्यं ध्वनिरितीर्य्यते ।
काव्यन्तु कथितं व्यङ्ग्ये वाच्यादनतिशायिनि ॥
गुणीभूतव्यङ्ग्यमिति स्याद्व्यङ्ग्यस्याप्रधानतः ।
अव्यङ्ग्यमपि यच्चारु तत् काव्यं चित्रमिष्यते ॥

शब्दार्थादिभेदेन चित्रकाव्यं त्रिविधं यथा :—

शब्दचित्रं वार्थचित्रमुभयं चेति तत् त्रिधा ॥
शरीरं तस्य शब्दार्थौ जीवितं व्यङ्ग्यवैभवम् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥
शौर्य्यादय इव प्रोक्ताः श्लेषकान्त्यादयो गुणाः ।
आत्मोत्कर्षावहास्तत्र स्वभावा इव रीतयः ॥
शोभामाहार्य्यिकीं प्राप्ता वृत्तयो वृत्तयो यथा ।
पदानुगुण्यविश्रान्तिः शय्या शय्येव संमता ॥
रसास्वादप्रभेदाः स्युः पाकाः पाका इव स्थिताः ।
प्रख्याता लोकवदियं सामग्री काव्यसम्पदः ॥

महाकाव्योपकाव्यभेदेन तद्विविधमाह—

महाकाव्यं चोपकाव्यमिति तद्विविधं पुनः ॥
नगरार्णवशैलर्त्तु चन्द्रार्कोदयवर्णनैः ।
मन्त्रद्युतप्रयाणादिनयाकाभ्युदयैरपि ॥

एतैरूपनिबद्धं यत् तन्महाकाव्यमिष्यते ।
एषामष्टादशानां यैः कैश्चिन्न्यूनमपीष्यते ॥
सर्गबन्धो महाकाव्यमिति केचित् प्रचक्षते ।
असर्गबन्धमपि च महाकाव्यमितीष्यते ॥

## उपकाव्यम्

गीततालानुबद्धं यदुपकाव्यमितीर्य्यते ।
उपकाव्यन्तु बहुधा वच्मि तानि च कानिचित् ॥

## तत्राख्यायिका:—

कविचारित्रसहितं नरपालकथान्वितम् ।
विचित्रवर्णरचनासमासैस्तु मनोहरम् ॥
उच्छ्वासान्ते वक्त्रयुतं रचितापरवक्त्रकम् ।
उच्छ्वासादौ सपर्य्याङ्गमिदमाख्यायिकाभिदम् ॥

## कथा :—

श्लोकैः स्ववंशं संक्षेपात् कविर्यत्र प्रशंसति ।
मुख्यार्थस्यावताराय भवेत्तत्र कथान्तरम् ॥
परिच्छेदो न यत्र स्याद् भवेत् त्वालम्भकः क्वचित् ।
सा कथा नाम तद्गर्भे निबध्नीयाच्चतुष्पदीम् ॥

## उदाहरणम्

येन केनापि तालेन गद्यपद्यसमन्वितम् ।
जयेत्युपक्रमं मालिन्यादिप्रासविचित्रितम् ।
तदुदाहरणं नाम्ना विभक्त्यष्टाङ्गसंयुतम् ॥

चक्रवालकम्—

संबोधनविभक्त्या यत्प्रचरं गद्यपूर्व्वकम् ।
विमुक्तं पुनराकृष्टशब्दं स्याच्चक्रवालकम् ॥

भोगावली :—

आद्यन्तपद्यसंयुक्ता संस्कृतप्राकृतात्मिका ।
अष्टभिर्व्वा चतुर्भिर्व्वा वाक्यैः स्कन्धसमन्विता ।
प्रतिस्कन्दं भिन्नवाक्यरीतिर्दैव नृपोचिता ।
सर्व्वतो देवशब्दादिरेष भोगावली मता ॥

विरुदावली :—

वर्ण्यमानाङ्कविरुदवर्णनप्रचुरोज्ज्वला ।
वाक्याडम्बरसंयुक्ता कथिता विरुदावली ॥

तारावली :—

ताराणां संख्यया पदैर्युक्ता तारावली मता ॥

विश्वावली :—

विश्वेषां संख्यया पदैर्युक्तो विश्वोदयो मतः ॥

रत्नावली :—

रत्नानां संख्यया पदैर्युक्ता रत्नावली मता ॥

पञ्चाननावली :—

पदैश्च पञ्चभिर्युक्ता प्रोक्ता पञ्चाननावली ॥

रचनामपेरनामालम्व्याह :—

आख्यायिकायां शृङ्गारेऽपुष्टा रचना मता ।
कथायां नाटकादौ च न रौद्रेऽपाधिकोद्धता: ॥
अनेषु च प्रभेदेषु रचना स्यादुयथोचितम् ॥

रचनासु वर्णनीयविषया:—

नेतारमधिकृत्याह—

अथात्र वर्ण्यवर्ण्यानि प्रबन्धेषु ब्रुवे स्फुटम् ।
वर्ण्यो मुख्यतया नेता लोकोत्तरगुणोत्तर: ॥
तेन कर्त्तु: प्रबन्धस्य प्रतिष्ठा महती भवेत् ।
कुलाचारयश: शौर्य्यत्यागशीलादिवर्णनम् ॥
क्रियते नायकस्यैव यत् तदेवातिसम्मतम् ।
अथ वा तद्विरुद्धस्य वर्णयित्वा बहून् गुणान् ॥
तज्जयान्नायकोत्कर्षवर्णनं च मतं क्वचित् ।
घटते नेतरि ह्येधा स्वत:सिद्धे न कल्पिते ॥

नृपवर्णनीयविषया:—

नृपे कीर्त्तिप्रजारागप्रतापाज्ञानयक्षमा: ।
विवेकारिपुरोदाहधर्म्मसंग्रामपूर्व्वका: ॥

अन्यच्च कविकल्पलतायाम्—

नृपे कीर्त्तिप्रतापाज्ञा दुष्टशास्तिविवेकिता: ।
धर्म्मप्रयान-संग्राम-शास्त्राभ्यामनयक्षमा: ॥

प्रजारागोऽरिशैलादिवासोऽरिपुरशून्यता ।
औदार्यधैर्यगाम्भीर्यैश्वर्यशौर्योद्यमादयः ॥ क ॥

**कुमारवर्णने :—**

कुमारे खुरलीशस्त्रवल्गाशास्त्रकलादयः ॥

कविकल्पलतायामितोऽधिकविषयो यथा:—

कुमारे प्रजाशास्त्रश्री-कला-बल-गुणोत्कटाः ।
आश्वनो खुरलो राजभक्तिः सुभगतोदयः ॥ ख ॥

**राजमहिषीवर्णने :—**

महिष्यां रूपलावण्यत्रपाशृङ्गारमन्मथाः ।
चातुर्यप्रेमदाक्षिण्यशीलमानसुखादयः ॥ ग ॥

अन्यत्र च—

देव्यां सौभाग्य-लावण्य-शील-शृङ्गार-मन्मथाः ।
त्रपा-चातुर्य-दाक्षिण्य-प्रेम-मान-व्रतादयः ॥
वेणीधम्मिल्ल-सीमन्त-भाल-श्रवण नासिकाः ।
कपोलाधार-नेत्र-भ्रू-कटाक्ष-रद-कन्धराः ॥
गण्डबाहु-करोरोज-नाभि-मध्य-वलित्रयम् ।
रोमालि-श्रोणि-जङ्घोरु-पादयुग्मनखक्रमाः ॥ घ ॥

---

(क) अरीणां शत्रूणां शैलाः पर्वतरूपगिरयः; तेषु वासः, पराक्रमेण तानानीय स्वायत्तीकृत्य च तत्र स्वबलानामावस्थानम् ।

(ख) आश्वनो हयाद्यारोहणपाटवं, खुरली शराभ्यासः ।

(ग) शृङ्गारः अलङ्कारादिना कृतवेशः ।

(घ) धम्मिल्लः संयतकेशपाशः "खोपा" इति भाषा । रदाः दन्ताः कन्धरः ग्रीवा उरसि जने जातः उरोजः स्तनः ।

**मन्त्रिवर्णने :—**

मन्त्री भक्तः स्वदेशीयोऽनुद्धतो बुद्धिमान् क्षमी ।
आन्वीक्षिक्यादिकुशलः परिच्छेदी सुदेशजः ॥ ङ ॥

**सेनापतिवर्णने :—**

सेनापतिर्जितायासः स्वामिभक्तः सुधीरधीः ।
अभ्यासी वाहने शस्त्रे शास्त्रे च विजयी रणे ॥

**पुरीवर्णने :—**

पुर्य्यां प्रसादपरिखातोरणाध्वप्रपाध्वजाः ॥
वप्राऽट्टाऽराम-कुलटा-वेश्या-वापी-सती-त्वरी ॥ च ॥

**देशवर्णने :—**

देशे रत्नखनि-द्रव्य-पण्य-धान्याकरोद्भवाः ।
दुर्ग-ग्राम-जनाधिक्य-नदीमातृकतादयः ॥ छ ॥

---

( ङ ) आन्वीक्षिकी अत्र वेदश्रवणानन्तरमीक्षा परीक्षणमन्वीक्षा सा प्रयोजनमस्या इति ङीप्, तर्काध्यात्मविद्या । तथाऽऽमरः—"आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः" इति । परिच्छेदी विशेषज्ञप्रतिपत्ताकर्षणिकः ।

( च ) वप्रं दुर्गनगरादीनां परिखाया उद्धृतमृत्तिकास्तूपः, अथवा प्राचीरः । अट्टः प्रसादस्योपरिगृहम् । प्राचीरोपरि गृहस्थसैन्यगृहं वा, तत्र स्थिताः नरा अन्यान् हीनतया नाद्रियन्ते, तस्मिन् सति च अन्योत्कर्षेऽनादरः अट्ट इति । आरामः क्रीड़ार्थवनम्, कुलटा असती; इत्वरी अभिसारिका कुलटेत्यर्थः ।

( छ ) नदी मातेव पोषिकास्येति नदीजलसम्पन्नव्रीहिपालितो देशः । नदीमातृकः आदिशब्देन धनिश्रोत्रियनृपवैद्यानां परिग्रहः; एतैरन्वितो देशः प्रशस्यते चाणक्येन तथा हि—"धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः । एते यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥" इति ।

**ग्रामवर्णने :—**

ग्रामे धान्य-लता वृक्ष-सरसी-पशुपुष्टयः ।
क्षेत्रारघट्ट-केदार-ग्रामेयी-सुखविभ्रमाः ॥ ञ ॥

**सरोवर्णने :—**

सरस्यम्भोलहर्य्यम्भो गजाद्यम्बुज-षट्पदाः ।
हंसचक्रादयस्तीरोद्यान-स्त्रोपान्यकेलयः ॥

**अब्धिवर्णने :—**

अब्धौ द्वीपाद्रि-रत्नोर्म्मि-पोत-यादोजलप्लावाः ।
विष्णुः कुल्यागमश्चन्द्राद्‌वृद्धिरौर्व्वोऽब्दपूरणम् ॥ झ ॥

**नदीवर्णने :—**

सवित्यम्बुधियायित्वं वीच्यो जलगजादयः ।
पद्मानि षट्पदा हंसचक्राद्याः कूलशाखिनः ॥ ञ ॥

---

( ञ ) पशूनां प्रधानतो गवाश्वादीनां पुष्टिः परिपोषणं येषु ते पशुपुष्टयः कृषीवला इत्यर्थः। अरघट्टः अरं शीघ्रं घट्यते चाल्यते असौ इति कूपोपरि जलोत्तलनकाष्ठं यन्त्रं वा। ग्रामेयी ग्रामवासी, ग्रामलक्षणमाह—"विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि। स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा॥" अपि च—"तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः क्षेत्रोपयोगभूमध्ये वसति ग्रामसंज्ञिका॥" किञ्चः— "यथा कुटुम्बिनः सर्व्वेऽप्येकीभूता वसन्ति हि॥" इति।

( झ ) जले प्लवते भासते इति जलप्लवः भेला नाम तरणीविशेषः। विष्णुः— "यस्मात् विश्वमिदं सर्व्वं तस्य शक्त्या महात्मनः। तस्मादेवोच्यते विष्णुर्व्विशधातोः प्रवेशनात्॥" इत्युक्तलक्षणवतो विष्णोः शेषाहिशयनत्वम्। कुल्यागमः कुल्या तटिनी तस्याः आगमः समुद्रोपस्थितिः। चन्द्रात् वृद्धिः चन्द्रसम्पर्केण पर्व्वणि जलोच्छ्वासः। और्व्वो वाड़वानलः "और्व्वो संवर्त्तकोऽब्धाग्निर्व्वाड़वो वाड़वामुखः" इति हैमः। आपः जलानि ददातीति अब्दाः मेघाः तेषां पूरणम्।

( ञ ) अम्बुधिं समुद्रं याति गच्छतीति अम्बुधियायी तस्य भवः अम्बुधि-

**उद्यानवर्णने: —**

उद्याने फल-पुष्पद्रु-लता क्रीड़ा-सरोऽद्रय: ।
पिकालिकेकिहरिणहंसचक्रध्वजादय: ॥

**पर्व्वतवर्णने :—**

पर्व्वतेऽग्न्योषधीशृङ्ग-वन-किंनर-निर्झरा: ।
धातु-वंश-गुहारत्नाधित्यकोऽपत्यकादय: ॥ ट ॥

**वनवर्णने :—**

वने सर्प-वराहेभोलूकभिल्लदवादय: ।
शुक-काक कपोताद्यास्तत्र सिंहादयो द्रुमा: ॥ ठ ॥

**आश्रमवर्णने :—**

आश्रमेऽतिथिपूजैणविश्वासो हिंस्रशान्तता ।
यज्ञधूमो मुनिसुता द्रुसेको वल्कलद्रुमा: ॥ ड ॥

---

आथित्वम् । कुलशाखिन: कुलद्रुमा: प्रसिद्धास्तटान्तर्व्वर्त्तिभल्लातकादयो महीरुहा: ।

(ट) धातु: पर्व्वतोद्भव: इत्यर्थ:, तथाहि—"सुवर्णरूप्यताम्राणि हरितालं मन:शिला । गैरिकाञ्जनकासीससीसलोहा: सहिङ्गुला: । गन्धकाभ्रकमित्याद्या धातवो गिरिसम्भवा: ॥" इति । अधित्यका पर्व्वतोपरिस्थभूमि: । तत् सन्निहितोर्ध्वभूमिर्व्वा । तथाहि भट्टी—"समुद्रोपत्यका हैमी पर्व्वताधित्यका पुरी" इति । उपत्यका पर्व्वतस्यासन्ना भूमि: ।

(ठ) इभ: हस्ती । उलूक: पेचक:, तथाहि माधवे:"—उलूक: कौशिक: पेचक:काकभीरुनिशाचर:" इति । भिल्ल: म्लेच्छजातिभेद: । दव: वनवह्नि:, यदाह कात्यायन:—"दवो वनगतो वह्निर्दावश्च वनमुच्यते" इति ।

(ड) एण: हरिण: 'एण: कुरङ्गयोरिष्य: स्यादृश्यश्याक्कलोचने' इति त्रिकाण्डशेष: । तस्य विश्वास: आश्रमजने प्रत्यय: । हिंस्रशान्तता हिंस्र[illegible] ।

**मन्त्रवर्णने :—**

मन्त्रे स्थैर्योपायसिद्धिषड्गुणोदयचिन्तनम् ।
पञ्चाङ्गशक्तिस्तौन्नत्यनिर्ज्जनस्थानपूर्ध्वका: ॥ ढ ॥

**दूतवर्णने :—**

दूतेऽदाक्षिण्यभीरुत्वं शत्रुक्षोभकरी क्रिया ।
स्वस्वामिविक्रमौन्नत्यवाक्यधाष्टर्यादयो मता: ॥

**रणवर्णने :—**

रणे खड्गरजस्तूर्य्य-शरवृष्टि-पलाद्य: ।
छिन्नच्छत्र-ध्वजा रक्तनदी-कोलाहलादय: ॥

कविकल्पलतायां किञ्चिद्विशेषो यथा—

युद्धे तु वर्म्मबलचार-रजांसि,
तूर्य्य-निस्वाननादशरमण्डप रक्तनद्य: ।
छिन्नातपत्ररथचामरकेतुकुम्भिमुक्ता:,
सुरावृतभटा: सुरपुष्पवृष्टि: ॥ ण ॥

---

( ढ ) सन्ध्यादयो राज्ञ: षड्गुणा: तदुदयानां तदभ्युदयानं चिन्तनं परिभावनं 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रय: । षड्गुणा: शक्तयस्तिस्र: प्रभावोत्साहमन्त्रजा:' इत्यमर: । उक्तञ्च कामन्दकीये—'स्वाम्यमात्यौ स्वराष्ट्रञ्च दुर्गं कोषो बलं सुहृत् । परस्परोपकारित्वात् सप्ताङ्गं राज्यमुच्यते ॥ अमात्यराष्ट्रदुर्गाणि कोषो दण्डश्च पञ्चम: । एता: प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृता: ॥ एता: पञ्च तथा मित्रं सप्तम: पृथिवीपति: । सप्तप्रकृतिकं राज्यमित्युवाच बृहस्पति: ॥' इति तिस्र: शक्तय: तदुक्तम्—'विक्रमबलमुत्साहशक्ति:' । इति ।

( ण ) तूर्य्यनिस्वान' तूर्य्यनाद: । नाद: शब्द: । शरमण्डप: शरै: वाणै: निर्म्मितमण्डप: । केतु: पताका । कुम्भो गज: । रूपके रक्तनदीपक्षे कुम्भो नक्र: । छिन्नातपत्रादय: सुक्ता: रक्तनद्यो विचरणशीला इत्यर्थ: । सुरावृतभटा: सुरै: वतोय:सै आवृता: आच्छादिता: आक्रान्ता: भटा: योद्धार:, "भटा योधाश्च योद्धार:" इत्यमर: ।

**प्रयाणवर्णने :—**

प्रयाणे भेरिनिस्वान-भूकम्प-वलधूलयः ।
करभोक्षध्वजच्छत्र-वणिक्-शकटवेसराः ॥

**अश्ववर्णने :—**

अश्वे वेगित्वमौन्नत्यं तेजः सल्लक्षणस्थितिः ।
खरोत्खातरजोरूपं जातिर्गतिविचित्रता ॥

**गजवर्णने :—**

गजे तु कर्णचापल्यमुच्चत्वं व्यूहभेदिता ।
सिन्दूरचित्रयोधित्वकुम्भमुक्ताफलादयः ॥

**मृगयावर्णने :—**

मृगयायां श्वसञ्चारो वागुरा नीलवेशता ।
भटढक्का मृगत्रासः सिंहयुद्धं त्वरागतिः ॥ त ॥

**सुरापाने :—**

सुरापाने गतिवचःस्खलनं नयभ्रमः ।
लज्जामानच्युतिश्चित्तभ्रमरक्ताक्षतादयः ॥

**सूर्य्योदयवर्णने :—**

सूर्य्येऽरुणता रविमणिचक्राम्बुजपथिकलोचनप्रीतिः ।
तारेन्दुदीपकौषधि-दूकतमश्चौरकुमुदकुलटार्त्तिः ॥ थ ॥

---

(त) वागुरा मृगबन्धनजालं "वागुरा मृगबन्धनी" इत्यमरः । (थ) दूकः पेचकः ।

**चन्द्रोदयवर्णने :—**

चन्द्रोदये तु विरहि-चक्राब्ज-कुलटार्त्तय: ।
अब्धि-दम्पति-चन्द्राश्म-चकोरप्रीतिपूर्व्वका: ॥ द ॥

**वसन्तवर्णने :—**

वसन्ते पिकगानाम्रमञ्जरीमन्दमारुता: ।
पुष्पाणि द्रुदलोद्भेद-पलाशभ्रमरादय: ॥

**ग्रीष्मवर्णने :—**

पाटल-मल्ली-तापसर: पथिकशोषाम्रफलशाका: ।
मृगतृष्णाख्यसमीर: कान्ता पानीयशालिका मुख्या: ॥

**वर्षावर्णने :—**

वर्षासु मेघ-हलि-चातक निम्नगानां
झञ्झानिलस्य शिखि-जाति-कादम्बकानाम् ।
प्रीतिश्च हंसगमनं नलिनीलतानां
पत्रोद्भवोऽर्कलतिकादलपातनादय: ॥

**शरद्वर्णने :—**

शरदि सूर्य्य-सुधाकर-पाटवं विमलाम्भसि हंस-वृष-स्मया: ।
कमल-शारद-सैकतविस्तृति: सुशिखिपक्षमदापगमादय: ॥ ध ॥

---

(द) चक्र:वाक नाम पक्षिविशेष: । स तु रात्रौ दयितां विहाय सरस्तीरान्तरे अन्यत्र वा निवसतीति प्रसिद्धि: ।

(ध) स्मय: गर्व्व: तथा हि हैमे—“दर्पोऽभिमानो ममता मानश्चित्तोन्नति: स्मय:” इति हंसवृषाणां स्मया: यथेच्छनर्द्दन कुर्द्दनादय: ।

हेमन्तवर्णने :—

हेमन्ते रजनीदैर्घ्यं नलिनीकुसुमच्युतिः ।
दिनाल्पत्वं हिमप्रौढिः शुक्लागन्द्ययवोद्भवाः ॥

शिशिरवर्णने :—

शिशिरे वेणुकुन्दाब्जदाहः शिखिरतोत्सवाः ॥

कविकल्पलतायामन्यरूपं यथा——

शिशिरे करीषधूमकुन्दाम्बुजदाहशिखिरतोत्कर्षाः ॥न॥

स्वयम्वरवर्णने :—

स्वयम्वरे सतीपूजा-वाद्यघोष-नृपागमाः ।
राजपुत्र्या नृपाकारान्वयचेष्टाप्रकाशनम् ॥

विवाहवर्णने :—

विवाहे मङ्गलस्नानं भूषणं कामिनीरवः ।
वेदीसङ्गीततारीचाम्नाजा होमद्विजादय ॥

विरहवर्णने :—

विरहे जागरश्वास निशादैर्घ्यकृशाङ्गता ।
सन्तापचिन्तामालिन्यमौनरक्ताच्यतादयः ॥

अन्यत्र—अङ्गशय्या निशादैर्घ्यं जागरः शिशिरोष्णता ॥ इति

(न) करीषधूमः—करीषं शुष्कगोमयं तदुद्भवोधूमः शीतवारणायेतर्थः ।

**सुरतवर्णने :–**

सुरते स्वेदकणिका सीत्कारो भूषणच्युतिः ।
मञ्जीर-कङ्कणाराव-नख-दन्तक्षतादयः ॥
कविकल्पलतायान्तु सात्विका भावाः
कुट्मलाक्षता चेत्यधिकोक्तम् ॥ प ॥

**वनकेलिवर्णने :–**

वनकेलौ च कुसुमावचयः कुसुमार्पणम् ।
दयिते गोत्रविभ्रान्तिसपत्नेर्ष्योक्ति पूर्वकाः ॥

**जलकेलिवर्णने :–**

जलकेलौ जलक्षोभचक्रहंसापसर्पणम् ।
पद्मग्लानिःपयोबिन्दुदृग्रागो भूषणच्युतिः ॥ फ ॥

**वर्णवर्णनीयाः :–**

**तत्रादौ श्वेता :–**

श्वेतास्त्वैरावतः शम्भुः कीर्त्तिश्चन्द्रः शरद्घनः ।
प्रासाद-सौध-नगर-मन्दारद्रु हिमाद्रयः ॥
सूर्य्येन्दुकान्त-कर्पूर-सुधांशु-करका हिमम् ।
पिण्डीरोच्चैःश्रवो ज्योत्स्नाम्बु-रम्भा-भस्म-चन्दनम् ॥

---

( प ) सीत्कारः स्त्रीणां रतिकाले अनुरोगोन्मशब्दविशेषः । सात्विकाभावाः शृङ्गारादिरससमगुणभावभेदाः । कुट्मलाक्षता—कुट्मलं पद्मं तदेव नयनसङ्कोचः ।

फ—दृशो रागः दिग्रागः चक्षुषोर्लौहित्यम् ।

निर्म्मोक-हारोर्णनाभ-तत्त्व-सत्त्वास्थि-शर्करा: ।
शेषाभ्रक-सुधा-गङ्गा-गलदन्ताम्बु-चामरम् ॥
रम्भागर्भ: पुण्डरीक-मृणाल सिकता-बका: ।
हंस-सिंह-ध्वज-कुन्द-केतकीगर्भ-निर्झरा: ।
लोध्र-मुक्ता-पुष्प-तार-चूर्ण-शुक्तिक-दर्पिका: ॥
कैलास-काश-कार्पास-हास-हास्योशन:-कृतम् ।
नारद: पारद: पुण्य-वसन-स्फटिकादय: ॥ ब ॥

**श्यामा:** — श्यामास्त्वद्रि-द्रु-कालीय-वन-भैरव-राक्षसा: ।
शिवकण्ठ: शनि: राम: कलि-चन्द्रक-राहव: ॥
बादरायण विन्ध्याहि-द्रौपदी कज्जलार्जुना: ।
काली-कोल-यमा: केश-कस्तूरी-यमुना-गजा: ॥

---

ब—सूर्य्येन्दुकान्तेति—सूर्य्यकान्त-चन्द्रकान्तमणिवर्णनीये, सूर्य्यसम्पर्कात् यत्राग्नि-सम्भव: स सूर्य्यकान्त: । चन्द्रसम्पर्केण चन्द्रकान्तस्य जलस्रवात् तत्कान्तत्वम् । करका वर्षोपल: शिलेति भाषा "वर्षोपले तु करका करकोऽपि च दृश्यते" इति रुद्र: । पिण्डीर: दाड़िम:, तथा हि रभसे—"दाड़िम्बसारपिण्डीरस्वञ्जरसगुरुकवल्लभा" इति । निर्म्मोक: सर्पकञ्चुक: खोलस इति भाषा । ऊर्णेव सूत्रं नाभौ गर्भे यस्य स ऊर्ण-नाभ: लूतातन्तुरित्यर्थ: । तस्य भाव:, तत्त्वं "तत्त्वं ब्रह्मणि याथार्थ्ये" इति कोष: । सत्त्वं सत्त्वगुण: । शेष: सर्पराज: अनन्त:, अभ्रक: अभ्र:' खनिजद्रव्यविशेष: । "अभ्रकं स्वच्छपत्रं खमेघाख्यं गिरिजामलके" इति हेम: । रम्भागर्भ: रम्भाया: कदल्या: गर्भ: कुक्षिर्म्मध्यस्थलमित्यर्थ: । केतकीगर्भ: केतकीपुष्पमध्यस्थलमित्यर्थ: । चूर्ण: ताम्बुल-चर्व्वणोपयोगिद्रव्यम् । शुक्तिक: मुक्तोत्पन्नभूमि: झिणुक इति भाषा । दर्पका काम बधू: । उशना दैत्यगुरु: । कृतं सत्ययुगम् ।

विषाऽकाश-कुहू-पाप-रस-विष्णु-तमोनिशाः ।
मषो-पङ्क-मदाम्भोधि-ताल-तापिञ्छ-कोकिलाः ॥

गोलाङ्गूलास्य-गुञ्जास्य-धूम-शृङ्गारवह्नयः ।
केकि-तेजन-बर्हालि-खलचित्त-कनीनिकाः ॥

तिलेन्दीवर-दुष्कीर्त्ति-मुस्ता-नीलीभयानकाः ।
भिल्लच्छाया मृगीनेत्रं शास्त्रं कान्तादृगादयः ॥ भ ॥

नीला :—नीलाः सुरः शाद-शैवाल-दूर्व्वा-वंशाङ्कुराः शुकः ।
बीभत्स-सूर्य्यतुरगाः वर्णं मरकतादयः ॥ म ॥

---

भ—द्रुः वृक्षः । कालीयः कालसम्बन्धीयः कृष्णसम्बन्धीय इत्यर्थः । चन्द्रकः मयूरपुच्छं "समौ चन्द्रकमेचकौ" इत्यमरः । वादरायणः वेदव्यासः । कोल उरुपं भेला इति ख्यातम् । अथवा कोलः शूकरः "पोतिप्लवकयोः कोलः कोलन्त् बदरीफलम्" इति शाश्वतः । कुहूः अमावस्या । तमः तमोगुणः । निशा अन्धकारः । मदः गर्व्वः । तापिञ्छः—तमालः । गोलाङ्गूलं पुच्छं आस्यं मुखम् ।

केकी मयूरः । तेजनः वंशः शरो वा "वेणुमस्करतेजनाः । गुन्द्रस्तेजनकः शरः" इति चामरः । बर्हः मयूरपिच्छम् । अलिः भ्रमरः । कनीनिका चक्षुषः तारका "कनीनिका तारकाक्ष्णः स्यात्" इति मेदिनी । मुस्ता मुथा इति ख्याततृणमूलम् । नीली नीलद्रव्यम् । भील्लच्छायालोध्रद्रुमानामातपः । कान्तेति कान्तायाः स्त्रियः दृक् दर्शनमादिर्येषाम्, आदिशब्देन जम्बुफलस्य तथा खञ्जनकाककृत्याङ्गारादीनां परिग्रहः, अनेकत्र प्रयोगदर्शनात् ।

म—शादः पङ्कः । शैवालः जलतृणं शेला इति ख्यातः "नील्यां शैवाल-शैवलौ" इति हेमः

**रक्ताः —** रक्ताः स्युः सूर्य्य-गोकर्ण-गुन्द्र-खद्योत-यावकाः ।
ताम्र-कुङ्कुम-सिन्दूर-दृग्बिम्बाधर-धातवः ॥
विद्युत्बन्धूक-जिह्वासृक्भौम-पलल-किंशुकाः ।
अम्भोज-कुक्कुटशिखा-हिङ्गुलाशोक-पाटलाः ॥
कुसुम्भो हंसचञ्च्वङ्घ्री जवा किम्पाकपल्लवौ ।
त्रेता नखक्षतं रौद्रः शुकमर्कटयोर्मुखम् ॥
प्रतापश्च चकोराहिभुक् कपोतदृगादयः ॥ य ॥

**पीतानि: —** पीताः स्युर्द्वापर-ब्रह्म-जीव-शक्र-मनःशिलाः ।
गौरी-गोमूत्र-रोचना गरुड़श्वरदृग्जटाः ॥
मधु रोराङ्गतौ कोकोमर्कटः शारिकामुखम् ।
कर्णिकारः शालि-दीप-हरिद्रा-कणकादयः ॥ र ॥

---

य—गुन्द्रः शरः गोदपटेरा इति ख्यातः। बन्धूकः रक्तपुष्पविशेषः बान्धुलीति भाषा। असृक् रक्तम्। भौमः मङ्गलग्रहः। पललं मांसम्। कुसुम्भं तन्नामकरक्तपुष्पम्। किम्पाकः महाकालः माकालफल इति भाषा, "महाकालस्तु किम्पाके" इति हेमः। त्रेता—दक्षिणाग्निगार्हपत्याहवनीयाकसमुदिताग्नित्रयः, तथाहि त्रिगमाभिधाने—"पूर्वेणाहवनीयोऽग्निर्दक्षिणाग्निस्तु दक्षिणः। उत्तरे गार्हपत्यस्तु त्रेताग्निरिति कथ्यते॥ अग्निहोत्रं तदेवोक्तमग्नित्रेताग्नयस्तथा। त्रेता चाग्नित्रयश्चैव जलनत्रयमेव च॥" इति। अहिभुक् नकुलः। अत्रादिशब्देन माणिक्य-दाड़िमोकुसुम-मञ्जिष्ठा-ताम्बूलराग-रक्तचन्दनादीनां ग्रहणम्, कविकल्पलताकारोक्तेः।

र—द्वापरः द्वापरयुगं द्वितीययुगमित्यर्थः। रोचना गोरोचना इति ख्याता

धूसराणि :— धूसराः करुणो धूलि-लूता-काकखरादयः ।
मृदङ्गपुट-शाणास्यारघट्टघुटिकादयः ॥

अल्पवृत्तास्तथा रङ्क-गृहगोधिक-कच्छपाः ।
आलवास-मही-कंस-नख-चर्म्मादयो मताः ।
त्रिकोणा वज्र-शृङ्गाट-शकटा वह्निमण्डलम् ॥ ल ॥

---

कोकः चक्रवाकः । मर्कटः वानरः । कर्णिकारः सोन्दाल इति भाषा "द्रुमोत्पलः कर्णिकारे" इति हेमः । शालिः कलमधान्यम् ।

ल—करुणः करुणरसः, स च शोकोद्दीपकः, उक्तञ्च साहित्यदर्पणे—"इष्टनाशादपायरत्नबन्धनताड़नैः । शापक्लेशोपतापाद्यैर्ज्जायते करुणोरसः ॥" इति । लूता ऊर्णनाभः माकरसा इति भाषा । मृदङ्गपुटं मृदङ्गस्य पुटमिति षष्ठीसमासः । उपर्य्यधोभावापन्नमृदादिकपालद्वयेन निर्म्मितं पात्रं पुटम् । शाणं कषपाषाणमथवा शस्त्रादीनां निकषणेन तीक्ष्णीकरणयन्त्रं तस्य आस्यं मुखम् । अरघट्टं महाकूपं तदुपरि निबद्धजलोत्तोलनयन्त्रम् । घुटिका चरणग्रन्थिः गुल्फ इति यावत् । अल्पवृत्ताः—वृत-कर्त्तरि क्तः जात इत्यर्थः । अल्पाः ह्रस्वाः वृत्ताः, तथाहि—"गुरुपूजा घृणा शौचं संयमिन्द्रियनिग्रहः । प्रवर्त्तनं हितानाञ्च तत्सर्व्वं वृत्तमुच्यते ॥" इति । रङ्कः मोसकः । गृहगोधिका-जेठी "जाष्टा स्त्री कुड्यमत्स्या स्यात् गृहगोधा गृहालिका" इति साहसाङ्कः । आलवासं आलः हरितालः एव वासं वस्त्रम् "आल-पीतन-तालानि" इति हैमः । कंसः श्रीकृष्णमातुलः, अथवा ताम्ररङ्गमिश्रणजनिततैजसद्रव्यम् । त्रिकोणा त्रिकोटियुक्तं द्रव्यम् अथवा ज्योतिषोक्तं लग्नात् नवम-पञ्चमस्थानम् "त्रिकोणगान् गुरुः पश्यन्" इति ज्योतिषम् । वज्रः अशनिः । शृङ्गाटः उत्तरस्थपर्व्वतभेदः, अथवा चतुष्पथम् । "तुल्य शृङ्गाटक-चतुष्पथे" इत्यमरः ।

**वक्राः** — किंशुक-भाल-भ्रू-विद्युत्-कुद्दाल-चन्द्रकाः ।
भग्नकङ्कण-बालेन्दु-शुकास्येन्द्रधनुः-फणाः ॥
कटाक्ष-दात्रेभदन्त-पुरोधः करकादयः ॥ व ॥

**तीक्ष्णानि** :—दुःखचौवह्नि-कटाक्ष-नखरादयः ।
गुरवः सन्मनः श्रोणि-कपाट-स्तन-वृद्धयः ॥ श ॥

**सुखदाः**:—मुस्त्रालङ्किर्वियुक्तप्रियसङ्गमः ।
दातृस्वातन्त्र्य-पुत्राप्ति-विद्या-सन्तोषसूक्तयः ॥

**दुःखदाः**:—पारतन्त्र्याधि-व्याधि-मानच्युति-द्विषः ।
कुभार्य्याश्लेष-कुग्रामवास-कुस्वामिसेवनम् ॥
कन्याबहुत्वं वार्द्धक्यं निवासः परवेश्मनि ॥

**स्थिराः**:—स्थिराणराज्ञो भटः साध्वी धर्म्माधर्म्मौ सतां मनः ॥

**अस्थिराः**:—अस्थिराः कामिनी-राजप्रसाद-स्वप्न-दुर्ज्जनम् ।
मन्दगाश्च शनि-ग्लानि-कान्ता-मातङ्ग-माहिषाः ॥ ष ॥

---

व—कुद्दालं भूमिखननसाधनास्त्रम्, कोदाल इति भाषा। चन्द्रकः मयूरस्य पक्षस्थितचन्द्राकृतिपदार्थः। "समौ चन्द्रकमेचकौ" इत्यमरः। दात्रं छेदसाध्यास्त्रं। इभदन्तः इभः हस्ती तस्य दन्तः। पुरोधाः श्राद्धयज्ञादिकर्म्मकारयिता। करका वर्षोपलं शिल इति भाषा।

श—सन्मनः—सतां मनः सन्मनः। श्रोणिः नितम्बदेशः।

ष—राजप्रसादः राज्ञः अनुग्रहः। मन्दगा मृदुगमनशीलाः, बहुवचननिर्देशेन हंसादीनां ग्रहणम्, कविकल्पलतायां तेषां ग्रहणात्। कान्ता स्त्री। मातङ्गो गजः।

क्रूरस्वराः—क्रूरस्वराः काक-वृक-वराहोष्ट्राश्च गर्दभाः ॥

बलिष्ठाः—बलिष्ठाः विष्णु-गरुड़-सत्प्रतिज्ञा यमादयः ॥ स ॥

सुरूपाः—कृष्ण-नकुल-नलकुबर-मन्मथाः ॥

दुःसहाः—कामतापादि-प्रतापा दुर्वचस्तपः ॥

मधुराः—गुर्विन्दधोक्ति-कान्तावर-प्रशिविषः ॥

## काव्यरचनायां कवीनां समयनिरूपनम्—

सतोऽपि चानिबन्धः स्यादसतोऽपि निबन्धनम् ।
नियमेन निबन्धश्च विकल्पेन निबन्धनम् ।
एवं कवीनां समयश्चतुर्धा परिकीर्त्तितः ॥

वस्तुनः सतोऽप्यनिबन्धनं यथा—

अयने चन्द्रिकासत्त्वत् पक्षयोः शुक्लकृष्णयोः ।
वसन्ते मालतीपुष्पं कामिदन्तेषु रक्तता ॥
फलपुष्पे चन्दने च फलञ्चाशोकपादपे ।
दिवा विकासः कुमुदे वर्षाकाले च मल्लिका ॥
न वर्णयेत् सतोऽप्येतां प्रबन्धेषु कदाचन ॥

असतो वस्तुनो निबन्धनम्—

हंसे कीर्त्तौ च शुभ्रत्वं दार्ढ्यं दुष्कीर्त्ति पापयोः ।
अञ्जलिग्राह्यता कुम्भपूर्य्यत्वं शशिदीधितेः ॥

---

स—यमादय इत्यादिशब्देन कुसुमदनिल-महावराह-शरभ-पृथु-कलि-बालि-र्जि-भीम-प्रभृतीनां परिग्रहः, कविकल्पलतायामेतेषां विनिर्द्दिष्टात् ।

रत्नानि यत्र तत्राद्रौ कमलानि नदीष्वपि ।
मन्दाकिन्यां जलेभादिर्हंसाः सर्व्वजलाशये ॥
ज्योत्स्नापानं चकोराणां प्रतापे रक्ततोष्णते ।
ध्वान्तस्य मुष्टिग्राह्यत्वं लेपनं सूचिभेद्यता ॥
विश्लेषः कोकयो रात्रौ रक्तत्वं क्रोधरागयोः ।
कान्तामध्येऽप्यदृश्यत्वं समुद्राणां चतुर्थता ॥

नियमेन निबन्धनम्—

बहुकालस्थितस्यापि शिवचन्द्रस्य बालता ।
मनुष्या मौलितो वर्ण्या देवाश्चरणतस्तथा ॥
भूर्जत्वग्हिमवत्येव मलयेष्वेव चन्दनम् ।
रक्तत्वं रक्त-बन्धूक-बिम्बाम्भोज-विवस्वताम् ॥
कृष्णत्वं केश-कामालि-पिक-काक-पयोमुचाम् ।
सामान्यशौक्ल्यं छत्राभ्रः पताकापुष्पवाससाम् ॥
वसन्ते एव वर्ण्यं स्यात् परपुष्टस्य कूजितम् ।
वर्षास्वेव मयूराणां रुतं नृत्यञ्च वर्णयेत् ॥
लज्जाकोपायशोनाशरोषाक्रन्दास्यकृष्णताः ।
रागपाण्डुरता-दैन्य-विषपान-तपोजपाः ॥
दुःखद्वेषाभिचारैर्ग्रामहसोद्ग्रीविकादयः ।
वर्णनीया जितस्यैते पराभवसमुद्भवाः ॥

विकल्पेन निबन्धनम्—

कृष्णत्वं हरितत्वं वा कमलासम्पदोर्म्मतम् ।
पीतत्वं रक्तता वाग्नौ परागे स्वर्णविद्रुतोः ॥

दानवासुरदैत्यानामैक्यमेवातिसम्मतम् ।
कटाक्षे शौक्लयकृष्णत्वे लोध्रे लोहितपाटली ॥
चन्द्रे शशमृगौ कामध्वजे मकररोहितौ ।
एवं कवीनां समयो दिङ्मात्रं परिकीर्त्तितः ॥

## दर्पणोक्तकविव्यवहारः –

मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्त्योः
रक्तौ च क्रोधरागौ सरिदुदधिगतं पङ्कजेन्दीवरादि ।
तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसंघो
ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः ॥

पादाघातादशोकं विकशति बकुलं योषितामास्यमद्यै-
र्यूनामङ्गेषु हाराः स्फुटति च हृदयं विप्रयोगस्य तापैः ।
मौर्व्वी रोलम्बमाला धनुरथविशिखाः कौसुमाः पुष्पकेतो
र्भिन्नं स्यादस्य वाणै युवजनहृदयं स्त्रीकटाक्षेण तद्वत् ॥

अह्न्यम्भोजं निशायां विकशति कुमुदं चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां नाप्यशोके फलं स्यात् ।
न स्याज्जाती वसन्ते न च कुसुमफले गन्धसारद्रुमाणा-
मित्याद्यूह्यमन्यत् कविसमयगतं सत्कवीनां प्रबन्धे ॥

——०——

# सर्वाङ्गवर्णनम्

प्रपदाङ्घ्रिगुल्फपार्ष्णि जङ्घाजानूरुवङ्क्षणम् ।
कटित्रिकनितम्बस्फिक्-मस्तूपस्थककुन्दरम् ॥ ङ ॥
जघनं जठरं नाभि-बलिवक्षोजचूचुकम् ।
क्रोडोरोजत्रु पृष्ठांसकक्षदोः पार्श्वमध्यमम् ॥ च ॥
प्रगण्डः कूर्परो हस्तः प्रकोष्ठो मणिबन्धनम् ।
अङ्गुल्यङ्गुष्ठकरभ-नखपर्व चपेटकम् ॥ * ॥
कण्ठः शिरोधरा श्मश्रु-मुखौष्ठचिबुकं हनुः ।
सृक्कतालुरदा जिह्वा नासाभ्रूगण्डलोचनम् ॥ † ॥

---

ङ—प्रपदं पादस्याग्रभागः। अङ्घ्रिः चरणम्। गुल्फः पादग्रन्थिः। पार्ष्णिः पादग्रन्थेर्गुल्फस्याधोभागः। जङ्घा गुल्फजान्वोरन्तरालावयवः। जानु-उरुजङ्घयोर्मध्यभागः। वङ्क्षणं ऊरुसन्धिः, कुचकी इति भाषा। कटित्रिका काञ्ची। नितम्बः स्त्रीणां पश्चात् कटितटम्। स्फिक्-कटिदेशस्य मांसपिण्डविशेषः "स्त्रियां स्फिचौ कटिप्रोथौ" इत्यमरः। बस्तिः नाभेरधोभागः मूत्राधारो वा। उपस्थः स्त्रीपुंसोर्जननेन्द्रियः। ककुन्दरं पृष्ठवंशाधस्थगर्त्ताकारः कूपकः।

च—बलिः उदरावयवः तथा हि कुमारे—"बलित्रयं चारु बभार बाला" इति। वक्षोजः स्तनम्। चूचुकं कुचाग्रम्। क्रोडः अङ्कम्। उरः वक्षस्थलम्। जत्रु—कण्ठस्योभयपार्श्वास्थिद्वयम्। पृष्ठं पश्चाद्भागः। अंसः—स्कन्धदेशः। कक्षः—बाहुमूलम्। दोः—बाहुः। मध्यः—कटिदेशः। प्रगण्डः—कूर्परोपरिकक्षपर्यन्तभागः। कूर्परः जानुः। प्रकोष्ठः—आमणिबन्धं कफोणेरधःप्रकोष्ठः। मणिबन्धनं—प्रकोष्ठपाण्योर्मध्यस्थकराग्रन्थिः।

*—करभः—मणिबन्धात् कनिष्ठापर्यन्तं करस्य बाह्यदेश इत्यर्थः। शिरोधराः—कीशाः। चिबुकं—ओष्ठाधोभागम्। हनुः—कपोलद्वयोपरिस्थमुखभागः।

†—सृक्क ओष्ठप्रान्तभागम्। रदाः दन्ताः।

अपाङ्गतारकाकर्णभालमस्तकमूर्द्धजाः ।
यथासम्भवमेतेषु वर्णाश्च स्त्रीपुंसयोर्बुधैः ॥ ‡ ॥

## साधारणगुणवर्णनम्

औदार्य्य-धैर्य्य-गाम्भीर्य्य-शौर्य्य-सौन्दर्य्य-प्रश्रयः ।
माधुर्य्यैश्वर्य्य-चातुर्य्य-मर्य्यादा-क्रौर्य्य-कीर्त्तयः ॥
तेजस्तारुण्य-षाड्गुण्य-सौलक्षण्यशरण्यताः ।
ब्रह्मण्य-दान-दाक्षिण्य-शील-शौच-सुवेशताः ॥
सत्यौचित्य-कलाबन्धु-मान्य-भक्ति-कृतज्ञताः ।
दृढ़प्रतिज्ञता प्रज्ञा श्रद्धा मेधोद्यमः क्षमा ।
दयानयार्ज्जवाचार-सन्तोषमितभाषिताः ।
विद्या-विवेक-विनयारोग्य-सौभाग्य-वक्तृताः ॥
उत्साहित्व-कुलीनत्व-निर्द्दोषत्वमहेच्छताः ।
स्वावाधित्वोपकारित्वाभयास्तिकताविशङ्कताः ॥
प्रसाद-प्रतिभा-धृत्याधिगमत्व-सहायताः ।
श्रीर्म्माहात्म्यमहारम्भ-निर्द्दम्भत्वाद्यभीप्सताः ॥
बहुश्रुतत्व-सौजन्य-परिच्छेदाप्रमादिताः ।
जितेन्द्रियत्वागर्व्वत्व-स्वधर्म्मकथनादयः ॥

‡—अपाङ्गः—चक्षुषः प्रान्तभागः। तारका—नेत्रमध्यस्थकनीनिका, कृष्णवर्ण-गोलकचिह्नमित्यर्थः। भालं ललाटकम्।

## येन सह यस्य सादृश्यम्

स्त्रियः उपमानम्—

वेण्याः सर्पासिभृङ्गाल्यः ; केशपाशस्य चामरः ॥ अ ॥
नीलकण्ठकलापोऽपि, धम्मिल्लस्य विधुन्तुदः ॥ आ ॥
सीमन्तस्यापि चाध्वा स्यात्, ललाटस्याष्टमीविधुः ॥ इ ॥
फलकञ्च, कपोलस्य चन्द्रमा मुकुरस्थली ॥ ई ॥
भ्रुवोः खड्गधनुर्यष्टिरेखापल्लवपल्लयः ॥ उ ॥
दृशोश्चकोरहरिणमदिराखञ्जनोऽम्बुजम् ॥ ऊ ॥
कुमुदं नीलमम्भोजं, श्रुतेर्गृध्रध्वनिग्रहः ॥ ऋ ॥

---

अ—भृङ्गाल्यः भ्रमरपङ्क्तयः।

आ—नीलकण्ठः मयूरः, तस्य कलापः पुच्छम्। धम्मिल्लस्य संयतकेशस्य। विधुन्तुदः राहुः।

इ—सीमन्तस्य केशवीथ्याः, अध्वा मार्गः, मार्गवक्रत्वं वर्णनीयमित्यर्थः। अष्टमीविधुः अर्द्धचन्द्रः।

ई—फलकं चर्म्ममयास्त्रप्रतिघातनिवारकम् 'ढाल' इति भाषा। मुकुरः दर्पणम्।

उ—खड्गः कृपाणः, धनुर्यष्टिः चापः, रेखा बिन्दुपुञ्जकृताकाराचिह्नविशेषः। पल्लवः नवीनपत्रम्, वल्लिः लता, इति द्वन्द्वः।

ऊ—चकोरः प्रसिद्धपक्षिविशेषः। हरिणः मृगः। माद्यते अनया इति मदिरा मदालसनयनमित्यर्थः। महाकविप्रबन्धेषु 'मदिरायतलोचने' इति भूरिप्रयोगदर्शनात्। अथवा मत्तखञ्जनो मदिरा, न चात्र तदर्थस्य ग्रहणं मदिराशब्दानन्तरमेव खञ्जनशब्दोपादानात्। खञ्जनः पक्षिविशेषः, तस्य सातिशयचञ्चलत्वादत्रोपादानम्। अम्बुजं पद्मम्।

ऋ—गृध्रः खगविशेषः, तस्य ध्वनिग्रहः कर्णः तद्वदित्यर्थः।

नासावंशस्य वंशाग्रो मुखतूणीरचञ्चरः ॥ ऋ ॥
तिलप्रसूनदण्डौ च, अधरस्य नवपल्लवः—
बिम्बफलं प्रवालञ्च, दन्तानां मौक्तिकावलिः ॥ लृ ॥
कुन्ददाड़िम्बबीजानि हीरकाश्च, स्मितस्य तु—
ज्योत्स्ना पुष्पाणि पीयूषं, श्वासस्याम्भोजसौरभम् ॥
जिह्वायास्त्वञ्चलो दोला वेश्या भृङ्गो पिकोरवः ॥ ए ॥
सुधा मधु च वक्तृस्य शङ्खो पङ्कजदर्पणौ ॥
कण्ठस्य कम्बुग्रीवांसकुम्भौ, त्राह्मीश्च वल्लरी ॥ ऐ ॥
मृणाललहरीशाखापाशाः, पाणिपद्मस्य तु—
पल्लवोऽम्बुजमङ्गुल्याः पल्लवो, नखरद्दतिः—

---

ऋ—वंशाग्रः 'बाँश' इति प्रसिद्धतृणजातीयोद्भिदस्य अधः निम्नदेशस्थितस्य वंशाङ्कुरस्य तद्वाग्रवत् सातिशयोऽन्यत्वीन्नयवेति। एतदनन्तरं तूणीर-मुखोपादानात् तत् सादृश्य एव वंशाङ्कुर इति प्रतीतेश्च। मुखतूणीरं तूणीरस्य मुखमिवेति पूर्व्वनिपातम्। चञ्चुः खगतुण्डम्।

लृ—तिलप्रसूनदण्डौ तिलस्य प्रसूनं पुष्पं तस्य दण्डः अधोदेशः तौ। प्रवालं रक्तवर्णमणिविशेषः। नवपल्लवार्थोऽत्र न बोद्धव्यः, अव्यवहितपूर्व्व एव पल्लवपदोपादानात्।

ए—कुन्दं कुन्दपुष्पम् "कुन्दं वा ना माघ्ये दलकोषो दलाढ्यकः" इति व्याड़िः। अञ्चलः वसनप्रान्तः। दोला उद्यानादिषु क्रीड़ार्थं तरुशाखोपबद्धा काष्ठादिमयो दोलनोतिख्याता "दोला प्रेङ्खा पुमान् प्रेङ्खो निश्रेणिस्त्वधिरोहिणी" इति रत्नकोषः। भृङ्गो भ्रमरो। पिकोरवः कोकिलरवशब्दः।

ऐ—कम्बुः शङ्खः तस्य ग्रीवांसः गलदेशः। "कम्बुः शङ्खे स्त्रियां पुंसि

रत्नताराप्रसूनानि, स्तनयोः कुड्मलौ घटौ ॥ श्री ॥

कुम्भिकुम्भौ गिरी चक्रौ बिल्वे, मध्यस्य वेदिका— ॥ श्री ॥

सिंहमध्यश्च, रोमाल्या रेखाश्रेत्रालवल्लय: ॥

नाभेरम्भोजमावर्त्तं ह्रदौ विवरकूपकौ ।

त्रिवल्या वीचि-सोपान-निःश्रेण्यो, जघनस्य तु—

पुलिनं पीठफलके, नितम्बस्य स्थलं पुनः ।

ऊर्वोः कदलिका-स्तम्भौ मकरः करभस्तथा ॥

जङ्घायुगस्य तु स्तम्भौ, गतेर्हंसमतङ्गजौ ।

इमान्यन्यान्यपि स्त्रीणामुपमानं यथोचितम् ॥ श्रं ॥

---

शम्बूके वलये गजे" इति मेदिनी । वल्लरी लता "वल्लिस्तु व्रतती लता" इत्यमरः ।

श्री—मृणालं पद्मवृन्तम्, लहरी तरङ्गः, शाखाः वृक्षलताः तासां पाशाः समूहाः, 'केशपाशः कर्णपाशः' इत्यादिवत् । विकाशोन्मुखपुष्पकलिका कुड्मलः तौ "कोरकोऽस्त्री कुड्मलेऽपि" इति मेदिनी ।

श्री—कुम्भिकुम्भौ कुम्भिनः गजस्य कुम्भः शिरस्थमांसपिण्डः तौ "कुञ्जर-कुम्भि-पीलवः" इति हेमः । गिरी पर्व्वतौ । चक्रौ चक्रवाकसदृशौ । वेदिका डमरुकाकार-पिण्डिकावती पशुबन्धनार्थं होमीयद्रव्यासादनार्थं या कृतसंस्कारा परिष्कृता चतुर-स्रादिरूपा भूमिः । कविव्यवहारो यथा कुमारे—"मध्येन सा वेदिविलग्नमध्या" इति ।

श्रं—रोमाल्याः रोमावल्याः रोम्नः आवली श्रेणी तस्याः । आवर्त्तः जलपूरः घूर्णीति भाषा । ह्रदः अगाधजलाशयः तौ । विवरं छिद्रं, कुर्वन्ति मण्डूकाः अस्मिन्निति कूपकः संज्ञायां कन्, स्वप्रसिद्धजलाधारः तौ । त्रिवल्या उदरावयवस्य यथाहि कुमारे—"वलीत्रयं चारु बभार बाला" इति । निःश्रेणाः निर्गता श्रेणी पङ्क्तिरव, वंशनिर्म्मितसोपानम् ताः । जघनस्य स्त्रीणां श्रोणिपुरोभागस्य तथाहि—"पीनस्तनजघनाधाः" इति । पुलिनं तोयादुत्थित-

पुंस उपमानम्—

स्कन्धस्य वृषरक्तोक्षस्कन्धा, बाह्वोरहीश्वरः—
हस्तिहस्तपरिस्तम्भार्गलदण्डाश्च, वक्षसः—
शिलाकपाटौ, यानस्य प्रमत्तोक्षगतिः पुनः ॥ अः ॥
एकैकेनापि धर्म्मेणोपमानं बहुधा भवेत्।
धर्म्मा वर्णक्रियाकाराधिया इत्यादयोमताः ॥
अभावः स्याद् विभक्तीनामुपमानोपमेययोः।
उपमावाचकानाञ्च धर्म्माणाञ्च विपर्य्ययात् ॥

—(•)—

## अथ पद्मादिबन्धाः

गजबन्धो यथा :—

राजाभास्या भासमानस्वर्णकर्णस्वपिस्वरा।
सरापाला पातु लोला सा पिकस्वनमासरा ॥

---

तटस्थलम् इत्यर्थः। पीठफलकं पीठमासनं 'पीड़े' इति भाषा। फलकं 'ढाल' इति ख्यातम्। नितम्बस्य स्त्रीणां पश्चात् कटितटस्य। ऊर्व्वोः जानूपरिभागयोः। मकरः जलजन्तुभेदः। करभः करिशावकः। जङ्घायुगस्य गुल्फजान्वोरन्तरालावयवस्य। मतङ्गजः हस्ती।

अः—वृषः वृषभः, रक्तोक्षा रक्तयुक्तविहायणो वृषः तयोः स्कन्ध इव स्कन्धः येषामिति बहुव्रीहिः। रक्तोक्षेत्यनेन उक्षः सातिशयरक्ताधिक्यात् तत्स्कन्धस्य स्थूलातिशयं सूचितम्। रक्तवर्णचोपस्थापनेन तत्पदस्य स्वार्थकतानुपपत्तेः। अहीश्वरः सर्पराजः वासुकिः। हस्तिहस्तः करिशुण्डम्। अर्गलदण्डाः कपाटावरोधककाष्ठदण्डभेदाः। प्रमत्तः सातिशयमदयुक्तः उक्षा युवावृषः तस्य गतिः।

छत्रबन्धो यथा :—

मालजालवलद्वाते भूरिभूते दृगादिते।
सा रराज रमा चारुरुचा मारजरारमा ॥

चामरबन्धो यथा :—

मारसारतरस्फाररफातभारं परं सुखरम्।
सीतानेत्रचकोरेन्द्रु बिम्बं वन्दे रमेश्वरम्।

षोडशदलपद्म बन्धोयथा :—

कृतस्वान्ततत ध्वान्तधूत भूतहितव्रत।
दान्तशान्तजितप्रेत श्रीतगीतस्तुतस्तुत ॥

मर्दलबन्धो यथा :—

मारसापरसापारामापारापरसापसा।
मवरापवरामायामामायापवरावरा ॥

रथबन्धो यथा :—

पदाहितगुणा मान्ति यस्य चित्ते कलावतः।
महिलानन्ददं कान्तं तं भजे सततं हरिम्।

गोमूत्रिकाबन्धो यथा :—

भजे वाधावरं कुञ्जमुखं भक्तरुचिव्रतम्।
अजे बाधाहरं कुञ्जमुखं व्यक्तशुचिस्मितम् ॥

—+(०)+—

सम्भ्राय सर्व्वसुखदं सुभगाम्बिकायाः
पादं परन्त्र शरणं परमेशपीठे ।
श्रीरेवतीद्विजवरो बहुशच्छु साध्यम्
ग्रन्थं तनोमाभिनवं सुकुमारस्तमां ॥
वेदाग्निरामविधुसंख्यकवङ्गवर्षे
सिंहास्थगे करिणि गोष्पतिधिष्ठिताहे ।
जन्माष्टमीशुभमहोत्सवमध्ययामे
शेषं नयामाहमिमं गुरुयत्नतश्च ॥

सम्पूर्णायं प्रबन्ध-कल्पलतिका ।

